varianti del Mahâbhârata. Io ho dismesso quindi, e, il confesso, con molta soddisfazione, il mio pensiero, e starò ora aspettando il risultato del lavoro del coraggioso erudito, per farne le opportune applicazioni ai due problemi soprammentovati.

GASPARE GORRESIO.

Parigi, addì 1° giugno 1845.

# रामायणं वाल्मीकीयं

## अथ
## श्रीरामायणे वाल्मीकीये
## अरण्यकाण्डं

L.E. B.E

L.E. III. 1. 1 = I. = VI. 108

1ab प्रतिप्रयाते भरते वसन् रामस्तपोवने । 1ab

1cd लक्षयामास सोद्विग्नांस्तत्रारण्यनिवासिनः ॥१॥ 1cd

2ab ये तत्र चित्रकूटस्य पुरस्तात् तापसाश्रमाः । 2ab

2cd राममाश्रित्य नितरां तांश्चालक्षयदुत्सुकान् ॥२॥ 2cd

3ab नयनैर्भृकुटीभिश्च राममुद्वीक्ष्य शङ्किताः । 3ab

3cd अन्योन्यमभिजल्पन्तः शनैश्चक्रुः पृथक् कथाः ॥३॥ 3cd

4ab तेषां चौत्सुक्यमालक्ष्य रामः शङ्कासमन्वितः । 4ab

4cd कृताञ्जलिरुवाचेदमृषिं कुलपतिं तदा ॥४॥ 4cd

5ab मम कच्चिन्नु भगवन् वृत्तमाश्रित्य किञ्चन । 5ab

5cd दृश्यते विकृतं येन विक्रियन्ते तपस्विनः ॥५॥ 5cd

6ab प्रमदाचरितं किञ्चित् कच्चिच्चावरजस्य मे । 6ab

6cd लक्ष्मणस्यर्षिभिर्दृष्टं नानुरूपमिवात्मनः ॥६॥ 6cd

गुरुशुश्रूषणाचारा नित्यं भर्तृपरायणा ।
प्रमदाध्युषितां वृत्तिं सीता कच्चिन्न वर्तते ॥७॥
रामस्य वचनं श्रुत्वा तापसास्ते तपोधनाः ।
परस्परमथालोच्य प्रत्यूचुस्ते न किञ्चन ॥८॥
अथर्षिर्जरयाविष्टस्तपसा नियतेन्द्रियः ।
वेपमान उवाचेदं रामं भूतदयापरं ॥९॥
न भद्रं खलु पश्यामो किञ्चिद्दुश्चरितं त्वयि ।
वर्तसे हि परां वृत्तिं तपस्विषु तपस्विवत् ॥१०॥
नेह दीर्घायुषः कश्चिदृषिर्न परितुष्यति ।
सद्वृत्तस्य सुवृत्तेन भ्रातुर्वा लक्ष्मणस्य ते ॥११॥
त्वं चेह गुरुवद्वर्ती लक्ष्मणेन समन्वितः ।
कुतः कल्याणवृत्ताया ज्ञाताया विपुले कुले ॥१२॥
चापल्यं तात वैदेह्यास्तपस्विषु विशेषतः ।
त्वन्निमित्तं वयं तात नोत्सुकाः शुभदर्शन ॥१३॥
राक्षसेभ्यश्च संजातं भयमेषां तपस्विनां ।
व्यथितास्तेन संभ्रान्ताः कथयन्ति मिथः कथाः ॥१४॥
रक्षांसि पुरुषादीनि नानारूपाणि राघव ।
वसन्त्यस्मिन् महारण्ये व्यालाश्च रुधिराशनाः ॥१५॥
उत्साद्य तापसान् सर्वान् जनस्थाननिवासिनः ।
घ्नन्ति चास्मिन् महारण्ये तान् निवारय राघव ॥१६॥

16cd एष पन्था महर्षीणां फलान्याहरतां वनात् । II.11.14ab
14ab अनेन तु सुदुर्गं ते प्रविशन्ति महर्षयः ॥ १७ ॥ 14cd
17ab + 15ab रावणावरजो राम खरो नामेह राक्षसः । 11ab
उद्वेजयति नः सर्वान् जनस्थानकृतालयान् ॥ १८ ॥ 11cd
17cd दृष्टश्च जितकाशी च नृशंसश्च बलोत्कटः । 12ab
17ef अवलिप्तसहायश्च त्वां च तात न मृष्यति ॥ १९ ॥ 12cd
18ab त्वं यदाप्रभृति ह्यस्मिन्नाश्रमे तात वर्तसे । 13ab
18cd तदाप्रभृति रक्षांसि विप्रकुर्वन्ति तापसान् ॥ २० ॥ 13cd
19ab दर्शयन्तोऽतिबीभत्सं क्रूरैर्भीषणकैरपि । 14ab
19cd नानारूपैर्विरूपास्ते रूपैरशुभदर्शना ॥ २१ ॥ 14cd
20ab उपचारैरशुचिभिः संप्रयुज्य च तापसान् । 15ab
20cd दर्शयन्ति परां हिंसामनार्याः पुरुषर्षभ ॥ २२ ॥ 15cd
21ab गहनेष्वाश्रमान्तेषु लीना विकृतदर्शनाः । 16ab
21cd रमन्ते तापसांस्तत्र त्रासयन्तः सुदारुणाः ॥ २३ ॥ 16cd
22ab अपक्षिपन्ति स्रुग्भाण्डं दूषयन्ति शृतं हविः । 17ab
22cd शोणितैर्बलिकर्माणि नाशयन्ति समन्ततः ॥ २४ ॥
23ab विश्वस्तानामविश्वस्तास्तापसानां तपस्विनां ।
23cd भैरवं कर्णमूलेषु विसृजन्ति महास्वनं ॥ २५ ॥
24ab कलसांश्चाप्रमत्तानां पुष्पाणि समिधस्तथा । 17cd
24cd दर्भांश्चादाय गच्छन्ति होमकाले सुदारुणाः ॥ २६ ॥

25ab तैर्दुरात्मभिराविष्टमाश्रमं प्रेक्ष्य तापसाः । 18ab
25cd मन्त्रयन्ति त्वया सार्धमन्यत्र गमनोत्सुकाः ॥ २७ ॥ 18cd
तद्याम यावदेतेषां भयं नैति तपस्विनां । 19ab
तावदेवाश्रमस्थानमिदं त्यक्ष्यामहे वयं ॥ २८ ॥ 19cd
27ab बहुमूलफलं चित्रं नातिदूरादितो वनं । 20ab
27cd पुराणमाश्रमं तत्र श्रयिष्यामस्त्वया सह ॥ २९ ॥ 20cd
28ab यावच्च न खरस्तात त्वयि दोषाय वर्तते । 21ab
त्यक्त्वा वासमिमं तात सहास्माभिरितो व्रज ॥ ३० ॥ 21cd
एकेन सकलत्रेण त्वेमं नेह विलम्बितुं । 22ab
28cd वसता रक्षसामेषां समीपे क्रूरकर्मणां ॥ ३१ ॥ 22cd
29ab कामं राम समर्थस्त्वं राक्षसानां विनाशने । 23ab
29cd गन्तव्यो न तु विश्वासश्चलचित्ता हि राक्षसाः ॥ ३२ ॥
30ab इत्युक्तवन्तं रामस्तं राजपुत्रस्तपस्विनं ।
30cd न शशाकोत्तरैर्वाक्यैरवरोद्धुं समुद्यतं ॥ ३३ ॥ 23cd
31ab अभिनन्द्य समापृच्छ्य समाश्वास्य च राघवं । 24ab
31cd स जगामाश्रमं त्यक्त्वा कुलैः कुलपतिः सह ॥ ३४ ॥ 24cd

स चाश्रमस्तैर्मुनिभिः समं गतैरनिस्वनः शून्यतया कृतप्रभः ।
बभूव मौनव्रतधारिभिर्यथा समुत्सुकैर्व्यालमृगैर्निषेवितः ॥ ३५ ॥ 25+26

इत्यार्षे रामायणे आरण्यककाण्डे तापसवाक्यं
नाम प्रथमः सर्गः ॥

यत् पुरा राम मारीचप्रमुखा राक्षसा हि वै । 26ab ।
कौशिका आमिवादीनां मुनीनां भावितात्मनाम् ॥ 26cd ॥
दुःखं कुर्वन्ति ते पापास्त्वश्रमो [illegible] आश्रमम् ॥ 26ef ॥
स साध्यमिमर्णं रामः [illegible] च ।
प्रीतैः [illegible] [illegible] वर्तत ॥ 32 ॥

L.E
I = II. = I . 109

L.E, III. 1

34ab राघवस्तु प्रयातेषु तपस्विषु च चिन्तयन् । 1ab
34cd न तत्रारोचयद्वासं कारणैर्बहुभिस्तदा ॥ १ ॥ 1cd
मयेह भरतो दृष्टो मातरो नागरास्तथा । 2ab
महान् मे हृदये तापस्तान् नित्यमनुशोचतः ॥ २ ॥ 2cd
स्कन्धावारनिवेशे तु तेन चेह निवेशिते । 3ab
हयहस्तिकरीषाभ्यामपमर्दः कृतो महान् ॥ ३ ॥ 3cd
35ab तस्मादन्यत्र गच्छाम इति निश्चित्य राघवः । 4ab
35cd प्रातिष्ठत ततः सार्धं सीतया लक्ष्मणेन च ॥ ४ ॥ 4cd
36ab सोऽत्रेराश्रममासाद्य ववन्दे तं तपोधनं । 5ab
36cd तं चापि भगवानत्रिः पितृवत् प्रत्यपूजयत् ॥ ५ ॥ 5cd
37ab स्वयमातिथ्यसत्कारं कृत्वा रामाय सत्कृतं । 6ab
37cd सौमित्रिमथ सीतां च यथावत् पर्यसान्त्वयत् ॥ ६ ॥ 6cd
38ab पत्नीं स च महावृद्धां सिद्धां शुद्धां तपस्विनीं । 7ab
39ab अनसूयां महाभागां सर्वभूतहिते रतां ॥ ७ ॥ 7cd
39cd प्रतिगृह्णीष्व वैदेहीमित्याह मुनिपुङ्गवः । 8ab
40ab योजयस्व प्रकामैस्त्वं रामपत्नीं यशस्विनीं ॥ ८ ॥ 8cd
41ab रामाय चाचचक्षे तां ब्राह्मणीं संशितव्रतां । 9ab
41cd तीव्रेण तपसा युक्तां नियमैश्चाप्यनुत्तमैः ॥ ९ ॥ 10cd

ममाश्रमं विरहितं तापसैर्नियतेन्द्रियैः । 33ab ।
संप्रीयमाणो बहुधाः संप्रयुक्तः सुनिष्ठुरम् ॥ 33cd ॥
विमृश्य राक्षसं [illegible] रामोऽपि [illegible] ॥ 33ef ॥
आनयामास धर्मज्ञां सर्वभूतहिते रताम् ॥ [illegible] ॥

42ab दशवर्षसहस्राणि यया तप्तं महत् तपः । 11ab
42cd अनसूया पुरा तात इयं मातेव तेऽनघ ॥ १० ॥ 11cd
43ab दशवर्षाण्यनावृष्ट्या दग्धे लोके निरन्तरं । 9cd
43cd यया मूलफलं सृष्टं जाह्नवी च प्रवर्तिता ॥ ११ ॥ 10ab
44ab देवकार्यनिमित्तं च यया संचरमाणया । 12ab
44cd दशरात्रं कृता रात्रिः सेयं मातेव तेऽनघ ॥ १२ ॥ 12cd
45ab तामिमां सर्वभूतानां हितामार्यां तपस्विनीं । 13ab
45cd अभिगच्छतु वैदेही सिद्धामक्रोधनां सतीं ॥ १३ ॥ 13cd
46ab एवं ब्रुवाणं तमृषिं तथेत्युक्त्वा स राघवः । 14ab
46cd सीतामुद्दिश्य धर्मज्ञ इदं वचनमब्रवीत् ॥ १४ ॥ 14cd
47ab सीते श्रुतं ते वचनं मुनेरस्य महात्मनः । 15ab
47cd श्रेयोऽर्थमात्मनः शीघ्रमभिगच्छ तपस्विनीं ॥ १५ ॥ 15cd
49ab सीता तु तद्वचः श्रुत्वा राघवस्य हितैषिणी । 16ab
49cd तामत्रिपत्नीं धर्मज्ञामभिचक्राम वीक्षितुं ॥ १६ ॥ 17ab
50ab शिथिलां पतितां वृद्धां जरापाण्डरमूर्धजां । 18ab
प्रतनु वेपमानाङ्गीं प्रवाते कदलीं यथा ॥ १७ ॥ 18cd
तां तु सीता महाभागामनसूयां धृतव्रतां । 19ab
50cd अभ्यवादयत क्षिप्रं ब्रुवती मैथिली ह्यहं ॥ १८ ॥ 19cd
51ab अभिवाद्य च वैदेही तापसीं धर्मचारिणीं । 20ab
51cd बद्धाञ्जलिपुटा हृष्टा पर्यपृच्छदनामयं ॥ १९ ॥ 20cd

अनसूयेति या लोके कर्मणा ख्यातिमागता ।
तां शीघ्रमभिगच्छ त्वमभिगम्यां तपस्विनीम् ॥ ४८ ॥

ततः सीतां महाभागां दृष्ट्वा सा ब्रह्मचारिणी ।
उवाच कुशलं पृष्ट्वा दिष्ट्या धर्ममवेक्षसे ॥ २० ॥
त्यक्त्वा ज्ञातिजनं सीते सुखं मानं च भाविनि ।
अनुरागाद्वने रामं दिष्ट्या त्वमभिगच्छसि ॥ २१ ॥
समस्थो विषमस्थो वा पापो वा यदि वा शुचिः ।
यासां स्त्रीणां प्रियो भर्ता तासां लोका महोदयाः ॥ २२ ॥
दुःशीलः कामवृत्तो वा धर्मैर्विरहितोऽपि वा ।
स्त्रीणामार्यस्वभावानां परमं दैवतं पतिः ॥ २३ ॥
नातो विशिष्टं पश्यामि बान्धवं वै कुलस्त्रियाः ।
पतिर्बन्धुः प्रभुर्भर्ता दैवतं गुरुरेव च ॥ २४ ॥
न त्वेतदवगच्छन्ति शीलदोषादसत्स्त्रियः ।
कामवक्तव्यहृदया भर्तारं दुश्चरन्ति याः ॥ २५ ॥
प्राप्नुवन्त्ययशः पापा धर्मभ्रंशं च मैथिलि ।
अकार्यवशमापन्नास्तादृश्यः खलु याः स्त्रियः ॥ २६ ॥
त्वद्विधास्तु गुणोपेता दृष्टलोकपरावराः ।
स्वर्गे वसन्ति सुभगे सन्तः सुकृतिनो यथा ॥ २७ ॥

तदेवमेनं समनुव्रता सती पतिव्रतानां समयानुरोधिनी ।
भवेह भर्तुः सहधर्मचारिणी यशश्च धर्मं च ततः समाप्स्यसि ॥ २८ ॥

इत्यार्षे रामायणे आरण्यककाण्डे अनसूयावाक्यं
नाम द्वितीयः सर्गः ॥

III.

सा त्वेवमुक्ता वैदेही भगवत्यानसूयया ।
प्रतिपूज्य वचो हृष्टा वक्तुं समुपचक्रमे ॥ १ ॥
नेदमाश्चर्यमार्ये यत् त्वमेवमनुभाषसे । ।
विदितं तु मयाप्येतद्यथा स्त्रीणां पतिर्गतिः ॥ २ ॥
यद्यप्येष भवेद्भर्ता ममार्ये गुणवर्ज्जितः ।
अद्वैतेनोपचर्यस्तु तथापि नियतं मया ॥ ३ ॥
किं पुनर्यो गुणश्लाघ्यः सानुक्रोशो जितेन्द्रियः ।
स्थिरानुरागो धर्मात्मा पित्रोः प्रियतरः सदा ॥ ४ ॥
यां वृत्तिं वर्तते रामः कौशल्यायां महायशाः ।
तामेव नृपनारीणामन्यासामपि वर्तते ॥ ५ ॥
सकृद्दृष्टास्वपि स्त्रीषु नृपेण नृपवत्सलः ।
मातृवद्वर्तते वीरो मानमुत्सृज्य मानदः ॥ ६ ॥
आगच्छन्तीं च विजनं वनं श्वश्रूर्यदन्वशात् ।
समाहितवतीं पूर्वं हृदये तत् स्थिरं मम ॥ ७ ॥
पाणिग्रहणकाले च यत् पुरा पावकान्तरे ।
अनुशिष्टा जनन्या हि तच्च मे हृदि वर्तते ॥ ८ ॥
न वीकृतं तु तत् सर्वं तद्वाक्यैर्धर्मचारिणि ।
पतिशुश्रूषणान्नार्यास्तपो नान्यद्विशिष्यते ॥ ९ ॥

70ab सावित्री पतिशुश्रूषां कृत्वा स्वर्गे महीयते । 10ab
70cd तथैवारुन्धती याता पतिशुश्रूषया दिवं ॥ १० ॥ 10cd
71ab वरिष्ठा सर्वनारीणामेषा च दिवि देवता । 11ab
71cd रोहिणी न विना चन्द्रं मुहूर्तमपि वर्तते ॥ ११ ॥ 11cd
72ab एवंविधाश्चाप्यपराः स्त्रियो भर्तृदृढव्रताः । 12ab
72cd देवलोके महीयन्ते शुभे पुण्येन कर्मणा ॥ १२ ॥ 12cd
73ab तच्चानसूया संहृष्टा श्रुत्वा वचनमुत्तमं । 13ab
73cd शिरस्याघ्राय चोवाच मैथिलीं हर्षगद्गदा ॥ १३ ॥ 13cd
74ab उपपन्नं च युक्तं च वचनं तव मैथिलि । 15ab
74cd प्रीतास्म्यनेन तद्ब्रूहि प्रियं किं करवाणि ते ॥ १४ ॥ 15cd
75ab नियमैर्विविधैराप्तं तपोयोग्यं यदस्ति मे । 14ab
75cd तदाश्रित्य बलं सीते वरेण छन्दयामि ते ॥ १५ ॥ 14cd
सैवं तस्या वचः श्रुत्वा विस्मितामनुविस्मिता ।
76ab कृतमित्यब्रवीत् सीता तपोबलसमन्वितां ॥ १६ ॥ 15ef
77ab सैवमुक्ता तु धर्मज्ञा तदा प्रीततराभवत् । 16ab
77cd सकलं च प्रसादं तं कुर्वती तामुवाच ह ॥ १७ ॥ 16cd
78cd अङ्गरागेण दिव्येन रक्ताङ्गी जनकात्मजे । 19ab
79ab मया दत्तेन सुभगे भूषिता विचरिष्यसि ॥ १८ ॥ 17ab
अद्यप्रभृति भद्रं ते मण्डलं खलु शाश्वतं । 17cd
अनुलेपं च सुचिरं गात्रान्नापगमिष्यति ॥ १९ ॥ 18ab

इदं दिव्यं वरं माल्यं वस्त्राण्याभरणानि च । 78ab ।
तथा रूपमसंक्लिष्टं नित्यमेव भविष्यति ॥ 79cd ।

त्वमनेनाङ्गरागेण मया दत्तेन मैथिलि ।
रमयिष्यसि भर्तारं कान्तं श्रीरिव रूपिणी ॥ २० ॥
सा वासांस्यङ्गरागं च भूषणानि स्रजस्तथा ।
मैथिली प्रतिजग्राह प्रीतिदायमनुत्तमं ॥ २१ ॥

ततः शुभं सा तरुणार्कसंनिभं
गतक्लमा वस्त्रयुगं सदामलं ।
स्रजोऽङ्गरागं च विभूषणानि च
प्रसन्नचेता जगृहे तु मैथिली ॥ २२ ॥

इत्यार्षे रामायणे आरण्यककाण्डे प्रीतिदायो नाम
तृतीयः सर्गः ॥

## IV.

1ab प्रतिगृह्य च तं सीता प्रीतिदायमनुत्तमं । २१ab
1cd श्लिष्टाञ्जलिपुटा तत्र तामुपास्त तपोधनां ॥ १ ॥ २१cd
2ab तां विनीतामुपासीनामनसूया दृढव्रता । २२ab
2cd वचनं वक्तुमारेभे सीतां कमललोचनां ॥ २ ॥ २२cd
3ab स्वयम्वरे किल प्राप्ता त्वमेतेन यशस्विना । २३ab
3cd राघवेणेति मे सीते कथा श्रुतिपथं गता ॥ ३ ॥ २३cd
4ab तां कथां श्रोतुमिच्छामि विस्तारेणेह मैथिलि । २४ab
4cd यथानुभूतं कार्त्स्न्येन सर्वमाख्यातुमर्हसि ॥ ४ ॥ २४cd
5ab एवमुक्ता तया सीता तां तपोब्रह्मचारिणीं । २५ab
5cd श्रूयतामित्युपामन्त्र्य वक्तुमाचक्रमे कथां ॥ ५ ॥ २५cd
7ab मिथिलाधिपतिर्वीरो जनको नाम धर्मवित् । २६ab
7cd क्षत्रधर्मेष्वनुरतो न्यायतः शास्ति मेदिनीं ॥ ६ ॥ २६cd
8ab स सीराकर्षणं कर्तुं गतः काले पिता मम । . —
8cd पत्नीभिः सह धर्म्याभिः स ददर्शाद्भुतं महत् ॥ ७ ॥
9ab अन्तरीक्षे च गच्छन्तीं दिव्यरूपां मनोरमां ।
9cd मेनकां वै ह्यप्सरसं द्योतयन्तीं दिशस्त्विषा ॥ ८ ॥
10ab तां दृष्ट्वा रूपसंपन्नां मन्मथस्य रतीमिव ।
11cd तस्यासीन्मानसी बुद्धिस्तदा धैर्यविचालनी ॥ ९ ॥

— यथा वृत्तमिदं सर्वं तत् ते वक्ष्यामि तापसि ॥ 6 ॥
. बभूव मुदितो राजा दृष्ट्वा तां वामलोचनाम् ॥ 10cd ॥
स मन्मथशराविष्टः पिता मम तदाभवत् । ॥ab ।

12ab अस्यां नाम ममोत्पद्येदपत्यं कीर्तिवर्धनं ।
12cd ममापत्यविहीनस्य महान् स स्यादनुग्रहः ॥१०॥
13ab अथान्तरीक्षे वागुच्चैरुवाचामानुषी किल ।
13cd प्राप्स्यस्यपत्यमस्यास्त्वं सदृशं रूपवर्चसा ॥११॥
14ab तस्य लाङ्गलहस्तस्य कर्षतो यज्ञमण्डलं । 27ab
14cd अहं किलोत्थिता भित्त्वा जगतीं जगतो गतिं ॥१२॥ 27cd
15ab स मां दृष्ट्वा नरपतिर्मुष्टिं निक्षिपतीं पुनः । 28ab
15cd पांसुगुण्ठितसर्वाङ्गीं विस्मितो जनकोऽभवत् ॥१३॥ 28cd
16ab अभिपद्यैव च स्नेहादारोप्याङ्केऽब्रवीत् किल । 29ab
16cd ममेयं तनया व्यक्तं स्नेहोऽस्यां येन मेऽभवत् ॥१४॥ 29cd
17ab तथेत्यन्तर्हिता चैव वागुवाचाशरीरिणी । 30ab
17cd सहदुन्दुभिनिर्घोषा पुष्पवृष्टिपुरःसरा ॥१५॥
18ab मेनकायाः समुत्पन्ना कन्येयं मानसी तव ।
18cd प्राप्स्यति त्रिषु लोकेषु यशः परमशोभना ॥१६॥ 30cd
19ab विदार्य क्षेत्रवसुधां यस्मात् सीतेव चोत्थिता ।
19cd तस्मात् सीतेत्यसौ ख्यातिं लोके यास्यति ते सुता ॥१७॥
20ab ततः प्रहृष्टो धर्मात्मा पिता मे मिथिलेश्वरः । 31ab
20cd वृद्धिं चावाप विपुलां मामवाप्य नराधिपः ॥१८॥ 31cd
21ab ज्येष्ठायाश्चाददद्देव्या मामपत्यार्थकारणात् । 32ab
21cd तया संवर्धिता चाहं मातृस्नेहेन सौहृदात् ॥१९॥ 32cd

पतिसंयोगसुलभं वयो दृष्ट्वा च मे पिता ।
चिन्तामभ्यागमद्दीनो वित्तनाशादिवाधनः ॥ २० ॥
सदृशं चावकृष्टं च प्राप्य कन्यापिता वरं ।
प्रधर्षणामवाप्नोति वज्रिणापि समो भुवि ॥ २१ ॥
तां धर्षणामदूरस्थामवेत्यात्मनि पार्थिवः ।
चिन्तार्णवगतः पारं नाससादाप्लवो यथा ॥ २२ ॥
अयोनिजां हि मां ज्ञात्वा नाध्यगच्छत् स चिन्तयन् ।
सदृशं मेऽनुरूपं च वसुधाधिपतिः पतिं ॥ २३ ॥
तस्य बुद्धिरियं जाता दह्यमानस्य चिन्तया ।
स्वयम्वरं कारयिष्ये सीताया इति धर्मतः ॥ २४ ॥
यज्ञं हि यजतः पूर्वं शङ्करेण महात्मना ।
न्यासो मम पितुर्दत्तं धनुस्तूणौ तथाक्षयौ ॥ २५ ॥
पुरुषाणां शतं साग्रं यत् तद्वहति गौरवात् ।
तेजोयुतानां बलिनां तरुणानां च धीमतां ॥ २६ ॥
यत् तन्मनोरथेनापि हीनसत्त्वबलान्वयैः ।
न शक्यं सहसा वोढुं कुतः संधातुमोजसा ॥ २७ ॥
तथैव चारोपयितुं सर्वैरेव नराधिपैः ।
अन्यैश्च पुरुषैर्लोके कृतास्त्रैः स्वविकत्थनैः ॥ २८ ॥
तद्धनुर्मे पिता स्थाप्य सर्वानाहूय मन्त्रिणः ।
तेषां मध्ये उवाचेदं तदा वचनमूर्जितं ॥ २९ ॥

3cab य इदं धनुरुद्यम्य सज्यमेकेन पाणिना । 41ab
3ccd करिष्यति स सीताया भुवि भर्ता भविष्यति ॥ ३० ॥ 41cd
L.F.III.3. 1ab स्वयम्वरनिमित्तं च स्थापयित्वा तदा धनुः ।
1cd पित्रा मे प्रेषिता दूता राज्ञां विक्रान्तयोधिनां ॥ ३१ ॥
2ab आहूतास्ते यथाकालमुपजग्मुर्नराधिपाः ।
2cd वरार्हा वरवत् सर्वे स्वयं राज्ञा च सत्कृताः ॥ ३२ ॥
3ab स्वयम्वरगृहं तच्च समस्तास्ते नराधिपाः ।
3cd विविशुर्द्योतितं लक्ष्म्या ददृशुस्तच्च कार्मुकं ॥ ३३ ॥
4ab हस्तिहस्तपरीणाहं तत् ते दृष्ट्वा महद्धनुः ।
4cd विषेदुर्भूमिपाः सर्वे समुद्वीक्ष्य परस्परं ॥ ३४ ॥
5ab तत् ते धनुर्वरं दृष्ट्वा दुर्धरं गिरिगौरवं । 42ab
5cd अभिवाद्य नृपा जग्मुरशक्तास्तस्य पूरणे ॥ ३५ ॥ 42cd
6ab ततः स्वयम्वरे भग्ने प्रतियातेषु राजसु ।
6cd पिता वरं मे सदृशं चिन्तयन् नाध्यगच्छत ॥ ३६ ॥
7ab अथ दीर्घस्य कालस्य राघवोऽयं महाद्युतिः । 43ab
काकपक्षधरो धन्वी पूर्णचन्द्र इवोदितः ॥ ३७ ॥
यजतो मे पितुर्यज्ञं जनकस्य महात्मनः ।
8ab उपायाद्धनुषः श्रुत्वा गौरवं वीर्यमेव च ॥ ३८ ॥
विश्वामित्रेण सहितो गाधिपुत्रेण धीमता । 43cd
9ab अभिगम्य ततो रामः पितरं मेऽभ्यवादयत् ॥ ३९ ॥ 44ab

मृगयामटते वीरो लक्ष्मणश्च महायशाः ॥ 7cd ॥
जातकौतूहलो भर्ता मम रामस्तदाऽभवत् ॥ 8cd ॥

पितुर्वयस्यं दयितं ज्ञात्वा श्रुत्वा च तत्त्वतः ।
कुशलानामयं पृष्टः पूर्वं रामेण धीमता ॥४०॥
पित्रापि च तथा रामः स्मयमानस्ततोऽब्रवीत् ।
जनकं मन्त्रिणां मध्ये राघवोऽयं कथान्तरे ॥४१॥
मनुष्यशतसंधार्यं धनुस्तव किल प्रभो ।
तन्मे कौतूहलं द्रष्टुं साधु दर्शय तन्मम ॥४२॥
अथ पाणौ गृहीत्वा तं पिता मे जगतीपतिः ।
जगाम देशं तं यत्र दिव्यं तिष्ठति तद्धनुः ॥४३॥
इदं तदिति तद्दृष्ट्वा तोलयामास राघवः ।
तद्दृष्ट्वा विस्मितो राजा बभूव सह मन्त्रिभिः ॥४४॥
तेनारोपयता वेगान्मध्ये भग्नं महद्धनुः ।
तस्य शब्दोऽभवद्घोरः पततश्चाशनेरिव ॥४५॥
बधिरास्तत्र पुरुषा मोहिताश्च महीं गताः ।
धनुषस्तस्य शब्देन वर्जयित्वा जनत्रयं ॥४६॥
राघवं लक्ष्मणं चैव राजानं पितरं च मे ।
इतरस्तु जनः सर्वो न धैर्यं कृतवान् हृदि ॥४७॥
राघवस्य तु तं दृष्ट्वा पिता मे विक्रमं तदा ।
तुतोष गुणतश्चैनं तुष्टाव सह मन्त्रिभिः ॥४८॥
ततोऽहं तत्र रामाय पित्रा सत्यचिकीर्षुणा ।
भार्यार्थमुद्यता दातुमुद्यम्य जलभाजनं ॥४९॥

19ab प्रदीयमानां मां चैव न जग्राह रघूद्वहः । 49ab
19cd अविज्ञाय पितुश्छन्दमयोध्याधिपतेस्तदा ॥५०॥ 49cd
20ab ततः श्वशुरमाहूय मम वृद्धं नराधिपं । 50ab
20cd धर्मपत्नीं ददौ राजा मां रामाय महात्मने ॥५१॥ 50cd
21ab मम चैवानुजां बालामुर्मिलां प्रियदर्शनां । 51ab
21cd भार्यार्थे लक्ष्मणायापि ददौ मम पिता स्वयं ॥५२॥ 51cd
22ab एवं दत्तास्मि रामाय पित्रा तस्मै स्वयम्वरे । 52ab
22cd भावेन चानुरक्तास्मि पतिं वीर्यवतां वरं ॥५३॥ 52cd

इत्यार्षे रामायणे आरण्यककाण्डे सीतावाक्यं नाम चतुर्थः सर्गः ॥

वनं चैवानुयाताऽस्मि रामं मे हृदयस्थितम् ॥ 22ef ॥

## V.

23ab अनसूया तु तां श्रुत्वा वैदेह्या मधुरां कथां । 1ab
23cd परिष्वज्याथ बाहुभ्यां शिरस्याघ्राय मैथिलीं ॥१॥ 1cd
उवाचेदं वचः स्निग्धमत्रिपत्नी तपस्विनी ।
24ab रक्ताक्षरपदं चित्रमच्छन्दादिव भाषितं ॥२॥ 2ab
24cd त्वया मम प्रीतिकरं कथितं पुत्रि पुष्कलं । 2cd
25ab रमामि कथयन्त्यास्ते दृढं मधुरभाषिणि ॥३॥ 3ab
25cd रविरस्तं गतस्त्वेष वृत्ता च रजनी शुभा । 3cd
ग्रहनक्षत्रसंपूर्णा विमला विमलानने ॥४॥
26ab दिवसं विप्रकीर्णानामाहारार्थं च मैथिलि । 4ab
26cd समागतानां नीडेषु पक्षिणां श्रूयते स्वनः ॥५॥ 4cd
27ab गत्वा सरोऽभिषेकार्थममी कलसपाणयः । 5ab
27cd मुनयो विनिवर्तन्ते सलिलाप्लुतवल्कलाः ॥६॥ 5cd
28ab अग्निहोत्रेष्वृषीणां च हुतेषु विधिपूर्वकं । 6ab
28cd कपोताङ्गारुणो धूमो दृश्यते विमलेऽम्बरे ॥७॥ 6cd
29ab अल्पवर्णाश्च तरवो घनीभूताः समन्ततः । 7ab
29cd विप्रकीर्णे शुभे देशे प्रकाशन्ते यथा नगाः ॥८॥ 7cd
30ab निशाचराणि सत्त्वानि प्रचरन्ति समन्ततः । 8ab
30cd तपोवनमृगाश्चेमे वेदीमध्येषु शेरते ॥९॥ 8cd

31ab संप्रवृत्ता निशा सीते नक्षत्रग्रहमण्डिता । 9ab
31cd ज्योत्स्नाप्रावरणश्चेन्दुर्दृश्यते ह्युदितोऽम्बरे ॥ १० ॥ 9cd
32ab गम्यतामनुजाने त्वां पार्श्वं रामस्य मैथिलि । 10ab
32cd कथयन्त्या हि मधुरं त्वयाहं साधि तोषिता ॥ ११ ॥ 10cd
33ab अलंकुरुष्व तावत् त्वं प्रत्यक्षं मम मैथिलि । 11ab
33cd निर्वृताहं भविष्यामि दृष्ट्वा त्वां समलंकृतां ॥ १२ ॥ 11cd
34ab ततः स्वयमलंकृत्य सीता सुरसुतोपमा । 12ab
34cd अभिवाद्यानसूयां तां ययौ राघवमीक्षितुं ॥ १३ ॥ 12cd
35ab तां तथा भूषितां सीतां ददर्श वदतां वरः । 13ab
35cd राघवः प्रीतिदायेन तपस्विन्यानसूयया ॥ १४ ॥ 13cd
36ab निवेदयामास च सा सीता रामाय तत्त्वतः । 14ab
36cd प्रीतिदायं तपस्विन्या अङ्गरागं सभूषणं ॥ १५ ॥ 14cd
37ab प्रहृष्टोऽथाभवद्रामो लक्ष्मणश्च महायशाः । 15ab
37cd मैथिल्या सत्क्रियां लब्धां दृष्ट्वा स्त्रीभिः सुदुर्लभां ॥ १६ ॥ 15cd
38ab ततस्तां शर्वरीं पुण्यां प्रियया सह राघवः । 16ab
38cd उवास परमप्रीतस्तस्मिन् मुनिवराश्रमे ॥ १७ ॥ 16cd
39ab तस्यां रात्र्यां व्यतीतायामुपापृच्छति राघवे । 17ab
39cd कृताग्निहोत्रो भगवान् राममत्रिरभाषत ॥ १८ ॥ 17cd
रक्षांसि पुरुषादानि नानारूपाणि राघव ।
वसन्त्यस्मिन् महारण्ये व्यालाश्च रुधिराशनाः ॥ १९ ॥

उच्छिष्टं वा प्रमत्तं वा तापसं धर्मचारिणं । 19ab
हिंसन्ति राक्षसा राम तांस्त्वं रोद्धुमिहार्हसि ॥ २० ॥ 18cd
एष पन्था महर्षीणां फलान्याहरतां वने । 19ab
अनेन त्वं वनं दुर्गमितोऽन्यद्गन्तुमर्हसि ॥ २१ ॥ 19cd

शिवेन वै याहि समीप्सितं वनं
सुखं निवासाय जनेश्वरात्मज ।
पुनर्निवृत्तं कृतकृत्यमाश्रमद्
इहैव पश्येम भवन्तमागतं ॥ २२ ॥

इतीव तैः प्राञ्जलिभिर्महात्मभिर्
41ab द्विजैः कृतस्वस्त्ययनः परंतपः । 20ab
वनं सभार्यः प्रविवेश राघवः
41cd सलक्ष्मणः सूर्य इवाभ्रमण्डलं ॥ २३ ॥ 20cd

इत्यार्षे रामायणे आरण्यककाण्डे दण्डकारण्यप्रवेशो
नाम पञ्चमः सर्गः ॥

ऊचुस्ते सकलं रामं तापसा वनचारिणः ।
वनस्यास्य च संस्थानं राक्षसैः समभिद्रुतम् ॥ ४० ॥

4 = VI. = III. i.

L. E. III. 4

1ab प्रविशन् स महारण्यं दण्डकारण्यमुत्तमं । 1ab
1cd ददर्श रामो दुर्धर्षं तापसाश्रममण्डलं ॥ १ ॥ 1cd
2ab कुशचीरपरिक्षिप्तं ब्राह्म्या लक्ष्म्या समावृतं । 2ab
2cd दुष्प्रवेशं दुरालक्ष्यं सूर्यमण्डलवर्चसं ॥ २ ॥ 2cd
3ab शरण्यं सर्वभूतानां सुसमृद्धं श्रिया युतं । 3ab
3cd सेवितं चोपनृत्यं च नित्यमप्सरसां गणैः ॥ ३ ॥ 3cd
4ab विशालैरग्निशरणैः स्रुग्भाण्डैः रुचिरैः शुभैः । 4ab
4cd महद्भिस्तोयकलसैः फलमूलैश्च शोभितं ॥ ४ ॥ 4cd
5ab आरण्यैश्च महावृक्षैः पुण्यस्वादुफलैर्वृतं । 5ab
5cd विचित्रपुष्पैस्तरुभिः पद्मिनीभिः सुशोभितं ॥ ५ ॥ 6ab
6ab फलमूलाशनैर्दान्तैश्चीरकृष्णाजिनाम्बरैः । 6cd
6cd सूर्यवैश्वानरनिभैः पुराणैर्मुनिभिर्वृतं ॥ ६ ॥ 7ab
7ab बलिहोमार्चितं पुण्यं ब्रह्मघोषनिनादितं । 5cd
7cd नानाविनियताहारैः शोभितं पुरुषर्षभैः ॥ ७ ॥ 7cd
8ab तद्ब्रह्मभवनप्रख्यं ब्रह्मर्षिगणसेवितं । 8ab
8cd ब्रह्मभूतैर्महाभागैर्ब्राह्मणैरुपशोभितं ॥ ८ ॥ 8cd
नानापक्षिरुते रम्यं नानामृगसमावृतं ।
9ab दृष्ट्वैव राघवो दूरात् तापसाश्रममण्डलं ॥ ९ ॥ 9ab

अभ्यागच्छन्महातेजा विज्यं कृत्वा महद्धनुः ।
सीतयानुगतो धीमान् भ्रात्रा वै लक्ष्मणेन च ॥१०॥
दिव्यज्ञानोपपन्नास्ते रामं दृष्ट्वा महर्षयः ।
अभ्यागच्छन्त सुप्रीता वैदेहीं लक्ष्मणं तथा ॥११॥
साक्षात् सूर्यमिवोद्यन्तं दृष्ट्वा तं धर्मचारिणं ।
मङ्गलानि प्रयुञ्जानाः प्रत्यगृह्णन् धृतव्रताः ॥१२॥
रूपं प्रमाणं लक्ष्मीं च सौकुमार्यं सुवेशतां ।
ददृशुर्विस्मिताकारा रामस्य वनवासिनः ॥१३॥
वैदेहीं लक्ष्मणं रामं नेत्रैरनिमिषैरिव ।
आश्चर्यभूतं ददृशुः सर्वे ते वनवासिनः ॥१४॥
मुनयस्ते ततो राममतिथिं स्वयमागतं ।
सहिताः पर्णशालायां वासार्थं संन्यवेशयन् ॥१५॥
ततो रामस्य सत्कारं विधिवत् ते तपोधनाः ।
आजह्रुः सलिलं पुण्यं सहिताः पुण्यचारिणः ॥१६॥
पुष्पं मूलं फलं वन्यमाश्रमं च महात्मने ।
निवेद्य खलु धर्मेण ततः प्राञ्जलयोऽब्रुवन् ॥१७॥
त्वं नो धर्मः पिता राम तथा शरणदः सखा ।
पूजनीयश्च मान्यश्च स च राजा जगद्गुरुः ॥१८॥
देवेन्द्रस्य चतुर्भागः प्रजा रक्षति राघव ।
तस्माद्राजा वरान् भोगान् भुङ्क्ते लोकनमस्कृतः ॥१९॥

ते वयं भवता रक्ष्या भवद्विषयवासिनः ।
नगरस्थो वनस्थो वा त्वं नो राजा रघूत्तम ॥ २० ॥
न्यस्तदण्डा वयं राम जितक्रोधा जितेन्द्रियाः ।
रक्षितव्यास्त्वया शश्वद्धर्मनिष्ठास्तपोधनाः ॥ २१ ॥
एवं ते तापसाः सिद्धा रामं वैश्वानरोपमं ।
न्यायवृत्ता यथान्यायमर्चयामासुरागतं ॥ २२ ॥

स तु मुनिवरलब्धसत्क्रियस्
त्रिदशवरस्त्रिदशैरिवार्चितः ।
सुसुखमवसदाश्रमे तदा
जनकसुतासहितः स राघवः ॥ २३ ॥

इत्यार्षे रामायणे आरण्यककाण्डे आश्रमदर्शनं
नाम षष्ठः सर्गः ॥

## VII.

कृतातिथ्यो मुनिगणैरुदिते रविमण्डले ।
पुनः प्रतस्थे काकुत्स्थस्तानामन्त्र्य तपोधनान् ॥ १ ॥
वनं बहुमृगाकीर्णमृक्षशार्दूलसेवितं ।
ध्वाङ्क्षगृध्रगणाकीर्णं ददर्श सलिलाशयं ॥ २ ॥
हंसकारण्डवाकीर्णं नानासत्त्वनिषेवितं ।
नानापक्षिरुतं घोरं सिंहनादविनादितं ॥ ३ ॥
निकूजमानशकुनं झिल्लिकागणनादितं ।
लक्ष्मणानुचरो रामो वनमुग्रं व्यगाहत ॥ ४ ॥
वने च तस्मिन् काकुत्स्थो घोरे पक्षिगणावृते ।
ददर्श गिरिकूटाभं राक्षसं घोरदर्शनं ॥ ५ ॥
दीर्घजङ्घं महाकायं मृगव्यालनिबर्हणं ।
वक्रनासं विरूपाक्षं दीर्घास्यं निर्नतोदरं ॥ ६ ॥
अष्टौ सिंहानुपादाय शूलाग्रे रुधिरोक्षितान् ।
सविषाणं वसादिग्धं गजस्य च शिरो महत् ॥ ७ ॥
वसानं चर्म वैयाघ्रं सपादं रुधिरोक्षितं ।
त्रासनं सर्वभूतानां व्यात्ताननमिवान्तकं ॥ ८ ॥
स रामं लक्ष्मणं चैव सीतां दृष्ट्वा च मैथिलीं ।
अभ्यधावत संक्रुद्धः प्रजाः काल इवान्तकः ॥ ९ ॥

1ab स कृत्वा भैरवं नादं चालयन्निव मेदिनीं । 9cd
11cd अङ्केनादाय वैदेहीमपक्रम्य ततोऽब्रवीत् ॥ १० ॥ 10ab
12ab युवां जटाचीरधरौ सभार्यौ क्षीणजीवितौ । 10cd
12cd प्रविष्टौ दण्डकारण्यं शरचापासिधारिणौ ॥ ११ ॥ 11ab
13ab कथं वा तापसाभ्यासे वासः प्रमदया सह । 11cd
13cd अधर्मचारिणौ पापौ कौ युवां मुनिदूषकौ ॥ १२ ॥ 12ab
14ab अहं वनमिदं दुर्गं विराधो नाम राक्षसः । 12cd
14cd चरामि सायुधो नित्यमृषिमांसानि भक्षयन् ॥ १३ ॥ 13ab
15ab एवमुक्त्वा तु तौ वीरौ विराधो वनगोचरः । fn.33
15cd अङ्केनोद्यम्य वैदेहीं खमुत्पत्याब्रवीत् पुनः ॥ १४ ॥ fn.33
अहो साधु मया लब्धं भार्याभक्षणमुत्तमं । fn.34
23ab आत्मानं पृच्छतो ब्रूतं कौ युवां क्व गमिष्यथः ॥ १५ ॥ fn.3.1cd
24ab तमुवाच ततो रामो राक्षसं क्रूरदर्शनं । 2ab
24cd पृच्छमानं महेष्वास इक्ष्वाकुकुलनन्दनः ॥ १६ ॥ 2cd
पुत्रौ दशरथस्यावां भ्रातरौ रामलक्ष्मणौ । fn.36
25ab क्षत्रियौ जातिसंपन्नौ विद्धि नौ वनगोचरौ ॥ १७ ॥ 3ab
25cd त्वां तु वेदितुमिच्छामि कस्त्वं चरसि दण्डकं । 3cd
घोरेणानेन रूपेण पापं चैवाध्यवस्यसि ॥ १८ ॥ fn.37
26ab स श्रुत्वा रामवचनं विराधः प्रीतमानसः । fn.38
26cd राघवाभ्यां परं रूपं शशंस स यथातथं ॥ १९ ॥ fn.38

पुत्रः किलाहं कालस्य माता मम शतह्रदा ।
विराध इति मामाहुः पृथिव्यां सर्वराक्षसाः ॥ २० ॥
तपसा चापि मे प्राप्तं ब्रह्मणोऽपि प्रसादजं ।
शस्त्रेणावध्यता लोकेऽस्त्राभेद्यत्वं तथैव च ॥ २१ ॥
उत्सृज्य प्रमदामेतामनपेक्षौ यथासुखं ।
त्वरमाणौ पलायेथां न वां जीवितमाददे ॥ २२ ॥
इयं नारी वरारोहा मम भार्या भविष्यति ।
युवयोः पापयोश्चापि पास्यामि रुधिरं मृधे ॥ २३ ॥
तस्यैवं ब्रुवतो धृष्टं विराधस्य मनस्विनी ।
सीता प्रावेपत त्रस्ता प्रवाते कदली यथा ॥ २४ ॥
तां दृष्ट्वा राघवः सीतां विराधाङ्कगतां तदा ।
अब्रवील्लक्ष्मणं रामो मुखेन परिशुष्यता ॥ २५ ॥
पश्य सौम्य नरेन्द्रस्य जनकस्यात्मसंभवां ।
मम भार्यां शुभाचारां ज्येष्ठां दशरथस्नुषां ॥ २६ ॥
अत्यन्तसुखसंवृद्धां राजपुत्रीं यशस्विनीं ।
पश्य लक्ष्मण वैदेहीं विराधाङ्के मनस्विनीं ॥ २७ ॥
यदभिप्रेतमम्बायाः प्रियं वीर कृतं च यत् ।
कैकेय्यास्तदनुप्राप्तं क्षिप्रमद्यैव लक्ष्मण ॥ २८ ॥
या न तुष्यति राज्येन पुत्रस्यादीर्घदर्शिनी ।
ययाहं सर्वभूतानां हितः प्रस्थापितो वनं ॥ २९ ॥

अद्येदानीं सकामास्तु माता मे सा यवीयसी ।
परामर्शाद्धि वैदेह्या न दुःखं परमस्ति मे ॥ ३० ॥
पितुर्विनाशः सौमित्रे राज्यस्य हरणं तथा ।
परामर्शश्च वैदेह्याश्चिन्तामुत्पादयन्ति मे ॥ ३१ ॥
एवं ब्रुवाणं काकुत्स्थं वाष्पपर्याकुलेक्षणं ।
उवाच लक्ष्मणो वाक्यं क्रुद्धो नाग इव श्वसन् ॥ ३२ ॥
अनाथ इव किं नाथ महेन्द्रवरुणोपम ।
मया प्रेष्येण काकुत्स्थ किमर्थं परितप्यसे ॥ ३३ ॥
शरेणाभिहतस्याद्य मया क्रुद्धेन रक्षसः ।
विराधस्य गतासोर्वै मही पास्यति शोणितं ॥ ३४ ॥
राज्यकामे महाक्रोधो भरते यो बभूव मे ।
तं विराधे विमोक्ष्यामि वज्री वज्रमिवाचले ॥ ३५ ॥

अहमशनिनिपाततुल्यवेगं
शरवरमप्रतिवार्यमुत्सृजामि ।
निहतमिह विराधमुग्ररूपं
प्रतिभयशूलधरं मृधेऽद्य पश्य ॥ ३६ ॥

इत्यार्षे रामायणे आरण्यककाण्डे विराधदर्शनं
नाम सप्तमः सर्गः ॥

## VIII.

लक्ष्मणः प्रत्युवाचेदं क्रोधसंरक्तलोचनः ।
राक्षसं विकृताकारं विराधं पापचेतसं ॥ १ ॥
क्षुद्र धिक् तेऽस्तु हीनायुर्वधमन्विच्छसि ध्रुवं ।
नेमां प्राप्स्यसि तिष्ठ त्वं न मे जीवन् गमिष्यसि ॥ २ ॥
एवमुक्त्वा शरान् सप्त सुपर्णानिलरंहसः ।
रुक्मपुङ्खान् महावेगान् विराधे व्यसृजत् तदा ॥ ३ ॥
ते शरीरं विराधस्य भित्त्वा बर्हिणलक्ष्मणाः ।
निपेतुरसृजा दिग्धा धरण्यां पावकप्रभाः ॥ ४ ॥
स विनद्य महानादं शूलमादाय सुप्रभं ।
चिक्षेप परमक्रुद्धो लक्ष्मणायाभिसंहितं ॥ ५ ॥
तच्छूलं वज्रसंकाशमन्तरीक्षगतं महत् ।
द्वाभ्यां शराभ्यां चिच्छेद रामः शस्त्रभृतां वरः ॥ ६ ॥
ततस्तृतीयं विमलं रुक्मपुङ्खं शिलाशितं ।
हृदि रामो विराधस्य निचखान शरोत्तमं ॥ ७ ॥
स विमुच्य कराग्राभ्यां वैदेहीं पर्वतोपमः ।
पपात शरनिर्भिन्नो विराधः कालचोदितः ॥ ८ ॥
स दीनो दीनया वाचा सफेनं रुधिरं वमन् ।
उवाच रामं तिष्ठन्तं प्राञ्जलिश्चलितेन्द्रियः ॥ ९ ॥

तं रामः प्रत्युवाचेदं रोषसंरक्तलोचनः । 29 ab
तयोः कथयतोरेव रामराक्षसयोस्तदा । 31 ab

39 ab कौशल्या सुप्रजा राम त्वया पुत्रेण धीमता । 17 ab
39 cd त्वया नाथेन वैदेही सनाथा लक्ष्मणस्तथा ॥ १० ॥ 17 cd
40 ab विदितश्चासि मे पूर्वमागच्छन्नेव राघव । fn. 50
40 cd युवां कोपयता वीर मया सीता हृता तव ॥ ११ ॥ fn. 50
41 ab अभिशापादहं घोरां प्रविष्टो राक्षसीं तनुं । 18 ab
41 cd तुम्बुरुर्नाम गन्धर्वः शप्तो वैश्रवणेन वै ॥ १२ ॥ 18 cd
42 ab प्रसाद्यमानश्च मया सोऽब्रवीत् सुमहायशाः । 19 ab
42 cd एष त्वय्यन्तरा शापो भविष्यति महाबल ॥ १३ ॥ fn. 52
43 ab यदा दाशरथी रामस्त्वां बधिष्यति संयुगे । 19 cd
43 cd ततः प्रकृतिमापन्नो भवनं स्वं गमिष्यसि ॥ १४ ॥ 20 ab
44 cd इति वैश्रवणो राजा रम्भासक्तं शशाप मां । 20 cd
अतोऽर्थं च मया वीर प्रभावान्मेदिनीतले ॥ १५ ॥ fn. 53
प्रेरिता मैथिली सीता न च प्राणैर्वियोजिता । fn. 53
45 ab तव प्रसादान्मुक्तोऽहमतः शापात् सुदारुणात् ॥ १६ ॥ 21 cd
45 cd भवनं स्वं गमिष्यामि स्वस्ति तेऽस्तु महाभुज । 21 ef
46 ab अध्यर्धयोजने राम महर्षिः सूर्यसंनिभः ॥ १७ ॥ 22 cd
46 cd इतो वसति धर्मात्मा शरभङ्गः प्रतापवान् । 22 ab
47 ab तं शीघ्रमभिगच्छ त्वं स ते श्रेयो विधास्यति ॥ १८ ॥ 23 ab
47 cd अवटे चापि मे राम प्रक्षिपेमं कलेवरं । 23 cd
48 ab रक्षसां गतसत्त्वानामेष धर्मः सनातनः ॥ १९ ॥ 24 ab

अनुपश्रूयमाणां मां क्रुद्धो वै व्याजहार सः । (44 ab)

अवटे ये निधीयन्ते तेषां लोका महोदयाः ।
एवमुक्त्वा स काकुत्स्थं विराधः शरपीडितः ॥ २० ॥
स्वर्गं जगाम सहसा दिव्यरूपधरस्तदा ।
तं समुद्यम्य सौमित्रिर्विराधं पर्वतोपमं ॥ २१ ॥
गम्भीरमवटं कृत्वा निचखान परंतपः ।
ततः सीतां परिष्वज्य समाश्वास्य च वीर्यवान् ॥ २२ ॥
अब्रवील्लक्ष्मणं रामो भ्रातरं दीप्ततेजसं ।
घोरं वनमिदं दुर्गं न स्थेयमिह लक्ष्मण ॥ २३ ॥
यथाख्यातं विराधेन शापमोक्षेऽपि रक्षसा ।
अभिगच्छामि तं शीघ्रं शरभङ्गं तपोधनं ॥ २४ ॥
ततस्तु तौ काञ्चनचित्रकार्मुकौ
निहत्य रक्षः प्रतिलभ्य मैथिलीं ।
विराजमानौ मुदितौ महावने
विचेरतुश्चन्द्रदिवाकरौ यथा ॥ २५ ॥

इत्यार्षे रामायणे आरण्यककाण्डे विराधबधो
नाम अष्टमः सर्गः ॥

## IX.

हत्वा तु तं भीमबलं विराधं राक्षसं वने ।
आश्रमं शरभङ्गस्य राघवोऽभिजगाम ह ॥ १ ॥
सोऽथ देवप्रभावस्य तपसा भावितात्मनः ।
समीपे शरभङ्गस्य ददर्श महदद्भुतं ॥ २ ॥
विभ्राजमानं वपुषा सूर्यवैश्वानरप्रभं ।
असंस्पृशन्तं वसुधां ददर्श पुरतः स्थितं ॥ ३ ॥
सुप्रभाभरणं देवं विरजोऽम्बरधारिणं ।
तद्विधैरेव पुरुषैः पूज्यमानं समन्ततः ॥ ४ ॥
हरिभिर्वाजिभिर्युक्तमन्तरीक्षगतं रथं ।
ददर्श दूरतस्तस्य राघवोऽभ्यासविष्ठितं ॥ ५ ॥
पाण्डराभ्रप्रकाशं च चन्द्रमण्डलमण्डितं ।
ददर्श विधृतं छत्रं चित्रमाल्योपशोभितं ॥ ६ ॥
चामरव्यजने चैव रुक्मदण्डे महाधने ।
गृहीते वरनारीभ्यां दोधूयेतेऽस्य मूर्धनि ॥ ७ ॥
गन्धर्वाः सुरसंघाश्च बहवश्च महर्षयः ।
अन्तरीक्षगतं देवं गीर्भिरग्र्याभिरीडिरे ॥ ८ ॥
तद्दृष्ट्वा राघवः श्रीमान् प्रत्यक्षं महदद्भुतं ।
हर्षेण महताविष्टो लक्ष्मणं वाक्यमब्रवीत् ॥ ९ ॥

हरयो वाजिनः पूर्वं मया शक्रस्य वै श्रुताः ।
अन्तरीक्षचरा दिव्या इमे च हरयो हयाः ॥ १० ॥
इमे च पुरुषा दिव्या यान्त्यस्य रथमन्तिकात् ।
परं शुभाः कुण्डलिनो युवानः खड्गपाणयः ॥ ११ ॥
उरस्येषां च सर्वेषां निष्का ज्वलनसंनिभाः ।
रूपं विभाति सौमित्रे पञ्चविंशतिवर्षवत् ॥ १२ ॥
एतद्धि किल देवानां वयो भवति नित्यशः ।
यथेमे पुरुषास्तात दृश्यन्ते प्रियदर्शनाः ॥ १३ ॥
इहैव सह वैदेह्या मुहूर्तं तिष्ठ लक्ष्मण ।
यावज्जानाम्यहं व्यक्तं क एष इति राघवः ॥ १४ ॥
तमेवमुक्त्वा सौमित्रिमिहैव स्थीयतामिति ।
अभिचक्राम काकुत्स्थः शरभङ्गाश्रमं प्रति ॥ १५ ॥
ततः समभिगच्छन्तं प्रेक्ष्य रामं शतक्रतुः ।
शरभङ्गमनुज्ञाप्य विबुधानिदमब्रवीत् ॥ १६ ॥
यास्याम्यहमयं रामो यावन्मां नाभिभाषते ।
कृतार्थमेनमचिराद्द्रष्टास्म्यहमरिंदमं ॥ १७ ॥
कर्म ह्यनेन कर्तव्यं महद्देवैः सुदुष्करं ।
निष्ठां न यातो यावद्धि तावन्न द्रष्टुमर्हति ॥ १८ ॥
इति वज्रभृदामन्त्र्य मानयित्वा च तं मुनिं ।
तेन हर्यश्वयुक्तेन ययौ रथवरेण सः ॥ १९ ॥

20ab तस्मिन् याते सहस्राक्षे राघवः सपरिच्छदः । 21ab
20cd अग्निहोत्रमुपासीनं शरभङ्गमुपागमत् ॥ २० ॥ 21cd
21ab तस्य पादौ तु संगृह्य राघवो सीतया सह । 22ab
21cd न्यसीदतामनुज्ञातौ मुनिनामन्त्रितौ तदा ॥ २१ ॥ 22cd
22ab ततः शक्रोपयानं तत् पर्यपृच्छत राघवः । 23ab
22cd शरभङ्गोऽपि तत् सर्वं राघवाय न्यवेदयत् ॥ २२ ॥ 23cd
23ab मामेषोऽभ्यागतो राम नेतुं लोकमितः परं । 24ab
23cd प्राप्तमुग्रेण तपसा दुष्प्रापमकृतात्मभिः ॥ २३ ॥ 24cd
24ab अहं तु त्वां नरव्याघ्र वर्तमानमदूरतः । 25ab
24cd न गतः परमं लोकं त्वामदृष्ट्वा प्रियातिथिं ॥ २४ ॥ 25cd
25ab अक्षया नरशार्दूल जिता लोका मया शुभाः । 26cd
~~25cd~~ तान् गमिष्यामि सत्कृत्य भवन्तमिह राघव ॥ २५ ॥ 26ab
25cd ब्राह्म्यांश्च नाकपृष्ठ्यांश्च प्रतिगृह्णीष्व राम तान् । 26ef
भवान् राजा च मान्यश्च गुरुः सत्कार्य एव च ॥ २६ ॥ fn.73
प्रतिगृह्ण मया दत्तं रत्नमेतत् सुदुर्लभं । fn.73
26ab एवमुक्तो महातेजाः सर्वशास्त्रविशारदः ॥ २७ ॥ 27ab
26cd ऋषिणा शरभङ्गेण राघवो वाक्यमब्रवीत् । 27cd
27ab अहमेवाहरिष्यामि स्वयं लोकाननुत्तमान् ॥ २८ ॥ 28ab
सत्कृतोऽहं त्वया ब्रह्मन् गच्छ लोकानतः परान् । fn.74
27cd आवासं त्वहमिच्छामि व्यादिष्टं भवता वने ॥ २९ ॥ 28cd

राघवेणैवमुक्तस्तु शक्रतुल्यबलेन सः ।
शरभङ्गो महाप्राज्ञः पुनरेवाब्रवीद्वचः ॥ ३० ॥
सुतीक्ष्णमभिगच्छ त्वं सिद्धं राम तपोधनं ।
रमणीये महारण्ये स ते वासं विधास्यति ॥ ३१ ॥
एष पन्था महाप्राज्ञ मुहूर्तं तावदास्यतां ।
त्यजामि यावत् स्वतनुं जीर्णां त्वचमिवोरगः ॥ ३२ ॥
ततोऽग्निं स समाधाय हुत्वा चाज्येन मन्त्रवत् ।
शरभङ्गस्तपःसिद्धः प्रविवेश हुताशनं ॥ ३३ ॥
तं दग्ध्वा भगवानग्निः सास्थिलोमनखत्वचं ।
समांसमेदोरुधिरं ततः शान्तिमुपागमत् ॥ ३४ ॥
स च पावकसंकाशः कुमारः समपद्यत ।
उत्क्रम्याग्निचयात् तस्माच्छरभङ्गो व्यरोचत ॥ ३५ ॥
स लोकानाहिताग्नीनामृषीणां पुण्यकर्मणां ।
देवानां च व्यतिक्रम्य ब्रह्मलोकमवाप ह ॥ ३६ ॥

स पुण्यकर्मा भुवने शुभे स्थितं
पितामहं सानुचरं ददर्श ।
पितामहश्चापि समीक्ष्य तं तदा
महाद्युतिं स्वागतमित्युवाच ॥ ३७ ॥

इत्यार्षे रामायणे आरण्यककाण्डे शरभङ्गाश्रमाभिगमनं नाम नवमः सर्गः ॥

X. = 5

L: E. III. 7.

1ab शरभङ्गे दिवं प्राप्ते मुनिसंघाः समन्ततः । 1ab
1cd अभ्यगच्छन्त काकुत्स्थं रामं ज्वलिततेजसं ॥१॥ 1cd
2ab वैखानसा बालिखिल्या ऋषयोऽथ मरीचिपाः । 2ab
3ab अश्मकुट्टाः सुबहवः पर्णाहाराश्च तापसाः ॥२॥ 2cd
3cd दन्तोलूखलिनश्चैव दण्डकारण्यवासिनः । 3ab
4ab केचिच्च सलिलाहारा ज्वलितानलवर्चसः ॥३॥ 3cd
4cd अभ्रावकाशिनश्चान्ये केचित् स्थण्डिलशायिनः । 4ab
5ab उपवासरताश्चैव जले कल्पान्तवासिनः ॥४॥ 4cd
5cd तपोरता महात्मानः केचित् पञ्चतपोऽन्विताः । 5ab
6ab चतुर्मासकृताहारा निराहारास्तथापरे ॥५॥ fn. 85
6cd वृक्षाग्रासक्तपादाश्च सदावाक्शिरसः स्थिताः ।
7ab अनाश्रिताः कर्मफलमाश्रिताश्चापरे तथा ॥६॥
स्थिता वसुमतीं चान्ये कृत्वैकाङ्गुष्ठपीडितं ।
9ab एवं नानातपोयुक्ता मुनयः संशितव्रताः ॥७॥ fn. 85
9cd शरभङ्गाश्रमे रामं द्रष्टुमभ्यागमंस्तदा । 5ef
10ab अभिगम्य च धर्मज्ञा ऋषिसंघाः समन्ततः ॥८॥ 6ab
10cd ऊचुः प्राञ्जलयः सर्वे सान्त्वपूर्वमिदं वचः । 6cd
11ab त्वमिक्ष्वाकुकुले जातः पृथिव्यां राम विश्रुतः ॥९॥ 7ab

मुनयः सलिलाहारा वायुभक्षास्तथैव च ।2cd॥
एकाङ्गुष्ठेन तिष्ठन्ति ये च भूताविहिंसकाः ॥7cd॥
कायभक्षाः पर्णभक्षा निर्दिष्टफलभोजिनः ।
फलाहाराश्च नियता वायुभक्षास्तथापरे ॥8॥

11cd नाथः प्रजानां सर्वासां देवानामिव वासवः । 7cd
12ab विश्रुतस्त्रिषु लोकेषु यशसा विक्रमेण च ॥ १० ॥ 8ab
12cd पितुर्निर्देशाद्धर्मं वनं घोरमुपागतः । 8cd
14ab अधर्मः सुमहान् नाम भवेत् तस्य महीपतेः ॥ ११ ॥ 10ab
14cd यो हरेद्बलिषड्भागं न च रक्षेदिमाः प्रजाः । 10cd
15ab पौरजानपदान् राजा प्राणैरिष्टान् सुतानिव ॥ १२ ॥ 11ab
यो न रक्षति दुर्मेधाः स नरैर्भुवि गर्हितः । fn. 55
यस्तु रक्षति धर्मेण प्रजाः पुत्रानिवौरसान् ॥ १३ ॥ "
राजा दण्डं समुद्यम्य शमयन् भयमोजसा । "
स प्राप्नोति परां कीर्तिमिह च प्रेत्य चाव्ययां ॥ १४ ॥ 12ab
विहृत्य चेह सुसुखी प्राप्नोतीन्द्रसलोकतां । fn. 55
चरन्ति सुखिनो धर्मं ये च राज्ञाभिपालिताः ॥ १५ ॥ "
17ab ततो राजा हि षड्भागं सम्यगाप्नोति पालयन् । "
18ab सोऽयं ब्राह्मणभूयिष्ठो वानप्रस्थगणो महान् ॥ १६ ॥ 14ab
18cd राक्षसैः पीड्यमानस्त्वां शरण्यं शरणं गतः । 14cd
19ab एहि पश्य शरीराणि मुनीनां भावितात्मनां ॥ १७ ॥ 15ab
19cd हतानां राम रक्षोभिर्बहूनां बहुधा वने । 15cd
20ab पम्पानिवासिनामेषामनु मन्दाकिनीमपि ॥ १८ ॥ 16ab
20cd चित्रकूटालयानां च क्रियते कदनं महत् । 16cd
21ab एवं वयं न मृष्यामो विप्रकारं तपस्विनां ॥ १९ ॥ 17ab

त्वामासाद्य महात्मानं धर्मज्ञं धर्मवत्सलम् ।
अर्थित्वा यच्च वक्ष्यामस्तच्च त्वं कर्तुमर्हसि ॥ 13 ॥
नित्ययुक्तः सदा रक्षेत् सर्वान् विषयवासिनः ॥ 15cd ॥
प्राप्नोति शाश्वतीं राम कीर्तिं त्रैलोक्यपावनीम् ।
ब्रह्मस्थानं समासाद्य तत्र चापि महीयते ॥ 16 ॥
यं करोति परं धर्मं मुनिर्मूलफलाशनः । 17ab

21cd अतिप्रवृद्धै रक्षोभिर्जनस्थाननिवासिनां । fn. 89
22ab आर्ताः स्म शरणं राम भवन्तं समुपागताः ॥ २० ॥ 18ab
22cd पाहि पालय नः सर्वान् स्वबाहुबलमाश्रितः । 18cd
ऐश्वरोऽयं परो भावः शूरत्वं नाम राघव ॥ २१ ॥ fn. 90
23ab इति श्रुत्वा वचो रामस्तापसानां महात्मनां । 19ab
23cd इदं प्रोवाच धर्मात्मा सर्वानेव तपोधनान् ॥ २२ ॥ 19cd
24ab नैवमर्हथ मां वक्तुमहमेव सलक्ष्मणः । 19ef
24cd तपःश्रुतवयोवृद्धान् भवतः शरणं गतः ॥ २३ ॥ fn. 91
25ab इदं तु दण्डकारण्यं नानासत्त्वनिषेवितं । fn. 92
25cd भवतामर्थसिद्ध्यर्थमागतोऽस्मि यदृच्छया ॥ २४ ॥ 20ab
26ab सकामोऽयं वने वासो भविष्यति यशस्करः । 20cd
26cd संरक्षतो मुनिगणान् निघ्नतो राक्षसान् मम ॥ २५ ॥ 20ef
एवं स तेषामभयं महात्मा
27ab दत्वा मुनीनां वनमाश्रितानां । 21ab
महर्षिभिस्तैः सहितो हि रामस्
27cd ततः सुतीक्ष्णाश्रममाजगाम ॥ २६ ॥ 21cd

इत्यार्षे रामायणे आरण्यककाण्डे अभयप्रदानं नाम
दशमः सर्गः ॥

## XI.

रामोऽथ सहितो भ्रात्रा सीतया च महाबलः ।
सुतीक्ष्णस्याश्रमपदं जगाम सहितैर्द्विजैः ॥ १ ॥
स गत्वा दूरमध्वानं नदीं तीर्त्वा महाजवां ।
ददर्श विपुलं नीलं शैलमाश्रित्य काननं ॥ २ ॥
ततस्तदिक्ष्वाकुवरौ नानाद्रुमलतायुतं ।
काननं वै विविशतुः सीतया सह राघवौ ॥ ३ ॥
प्रविश्य च वनं वीरौ बहुपुष्पफलान्वितं ।
आश्रमं तौ ददृशतुश्चीरमालापरिष्कृतं ॥ ४ ॥
तत्र तापसमासीनं मलपङ्कजटाधरं ।
रामः सुतीक्ष्णमभ्येत्य तपोवृद्धमपूजयत् ॥ ५ ॥
रामोऽहमस्मीत्युक्त्वा च तमृषिं सत्यविक्रमः ।
जगाम धरणीं मूर्ध्ना विनयेन कृताञ्जलिः ॥ ६ ॥
स निरीक्ष्य ततो वृद्धो रामं धर्मभृतां वरं ।
संपरिष्वज्य बाहुभ्यामिदं वचनमब्रवीत् ॥ ७ ॥
स्वागतं तेऽस्तु काकुत्स्थ राम धर्मभृतां वर ।
चित्रकूटमनुप्राप्तो राज्यभ्रष्टोऽसि मे श्रुतः ॥ ८ ॥
प्रतीक्षमाणस्त्वामेव नारूढोऽहमितो दिवं ।
जराजीर्णमिमं राम देहं त्यक्त्वा महीतले ॥ ९ ॥

12ab तमुग्रतपसं वृद्धं महर्षिं संशितव्रतं । 12ab
12cd रामः पुनरिदं वाक्यमुवाचानन्तरं तदा ॥१०॥ 12cd
15ab अवाप्स्यसि परान् लोकानितस्त्वमृषिसत्तम । 13ab
15cd आश्रमं त्वहमिच्छामि प्रदिष्टं कानने त्वया ॥११॥ 13cd
14ab भवान् हि ज्ञानविज्ञानसंपन्नः सर्वविन्मम । 14ab
14cd आख्यातः शरभङ्गेण तपःसिद्धेन धीमता ॥१२॥ 14cd
16ab एवमुक्तस्तु रामेण महर्षिर्लोकविश्रुतः । 15ab
16cd अब्रवीन्मधुरं वाक्यं हर्षेण महतावृतः ॥१३॥ 15cd
प्रभूतपुष्पपानीयः स्वादुमूलफलद्रुमः । fn-102
18ab नानासुरभिगन्धाढ्यः प्रभूतफलभोजनः ॥१४॥ "
18cd पद्मिनीसंघचित्रैश्च सरोभिरुपशोभितः । "
वनराजिविचित्रान्तः शुभकाननशोभितः ॥१५॥ "
17ab अयमेवाश्रमो राम गुणवानुष्यतामिह । 16ab
17cd ऋषिसंघानुचरितः सदा मूलफलावृतः ॥१६॥ 16cd
19ab इममाश्रममागत्य मृगसंघा इतस्ततः । 17ab
19cd प्रतियान्ति यथाकामं समन्तादकुतोभयाः ॥१७॥ 17cd
22ab भवांस्तानभिद्रुह्येत किं स्यात् पापतरं ततः । 20ab
22cd एकस्मिन्नाश्रमे स्थानं चिरं च न तव क्षमं ॥१८॥ 20cd
23ab एवमुक्त्वा तु स मुनी रामं संध्यामुपास्त ह । 21ab
23cd उपास्य च स तां संध्यां तत्र वासमकल्पयत् ॥१९॥ 21cd

इहोपस्थाय काकुत्स्थ देवराजः शतक्रतुः ।
सर्वान् लोकान् जितानाह मम पुण्येन कर्मणा ॥ 10 ॥
तेषु देवर्षिजुष्टेषु जितेषु तपसा मया ।
मत्प्रसादात् सभार्यस्त्वं विहरस्व सलक्ष्मणः ॥ 11 ॥
अहो प्राप्तं महच्छ्रेयो यद् दृष्टो भगवन्निह ।
तथा समाख्याहि च मे वसेयं यत्र धार्मिकः ॥ 13 ॥

ततः शुभं तापसभोज्यमन्नं
स्वयं सुतीक्ष्णः पुरुषर्षभाय ।
सत्कृत्य रामाय ददौ महात्मा
संध्यानिवृत्तौ रजनीं निरीक्ष्य ॥२०॥

इत्यार्षे रामायणे आरण्यककाण्डे सुतीक्ष्णदर्शनं
नाम एकादशः सर्गः ॥

तच्छ्रुत्वा वचनं तस्य महर्षेर्लक्ष्मणाग्रजः ।
उवाच वचनं वीरो विकृष्य सशरं धनुः ॥२०॥
तानहं सुमहाकायान् मृगान्संघातिहागतान् ।२१ ab।
हन्यां निशितधारेण प्राणधारणकारणात् ॥२१ cd॥

XII. = 7

L.E. III. 9.

1ab रामस्तु सहसौमित्रिः सुतीक्ष्णेनाभिपूजितः । 1ab
1cd तां समुष्य निशां कृत्स्नां प्रभाते प्रत्यबुध्यत ॥ १ ॥ 1cd
2ab तावुत्थाय यथाकालं सीतया सह राघवौ । 2ab
2cd शौचं प्रचक्रतुर्वीरौ जलेनोत्पलगन्धिना ॥ २ ॥ 2cd
3ab अथ तेऽग्नित्रयं तत्र वैदेही रामलक्ष्मणौ । 3ab
4cd उपतस्थुर्महाभागास्तपस्विशरणे वने ॥ ३ ॥ 3cd
5ab उदयन्तं दिनकरं दृष्ट्वा विगतकल्मषाः । 4ab
5cd सुतीक्ष्णमभिगम्येदं रामो वचनमब्रवीत् ॥ ४ ॥ 4cd
6ab सुखोषिताः स्मो भगवंस्त्वया पूज्येन पूजिताः । 5ab
6cd आपृच्छे त्वां प्रयास्यामो मुनयस्त्वरयन्ति नः ॥ ५ ॥ 5cd
7ab त्वरामहे वयं द्रष्टुं कृत्स्नमाश्रममण्डलं । 6ab
ऋषीणां पुण्यशीलानां दण्डकारण्यवासिनां ॥ ६ ॥ 6cd
7cd अभ्यनुज्ञातुमिच्छामः सहैभिर्मुनिपुङ्गवैः । 7ab
7ef धर्मशीलैस्तपोवृद्धैर्विशिखैरिव पावकैः ॥ ७ ॥ 7cd
8ab अविषह्यांशुरादित्यो यावन्नातितपत्यसौ । 8ab
9ab तावदेवेत इच्छामो गन्तव्येऽनुमतं त्वया ॥ ८ ॥ 8cd
9cd एवमुक्त्वा ततो रामो ववन्दे चरणौ मुनेः । 9ab
लक्ष्मणेन सह भ्रात्रा सीतया च महाद्युतिः ॥ ९ ॥ 9cd
अविषह्यो ह्यंशुरादित्यो यावन्नासौ प्रवर्तते ।
अमार्गेणागतां लक्ष्मीं प्राप्येवान्वयवर्जितः ॥ 8cd ॥

10ab तौ संस्पृशन्तौ चरणावुत्थाप्य मुनिपुङ्गवः ।
10cd गाढमालिङ्ग्य सस्नेहमिदं वचनमब्रवीत् ॥ १० ॥
11ab अविघ्नं गच्छ पन्थानं राम सौमित्रिणा सह ।
11cd सीतया चानया सार्धं छाययेवानुवृत्तया ॥ ११ ॥
12ab पश्याश्रमपदं राम दण्डकारण्यवासिनां ।
12cd एषां तपस्विनां वीर तपसा भावितात्मनां ॥ १२ ॥
13ab सुप्रापफलपुष्पाणि विचित्राणि वनानि च ।
13cd प्रशान्तमृगयूथानि कान्तपक्षिगणानि च ॥ १३ ॥
14cd फुल्लपङ्कजषण्डानि प्रसन्नसलिलानि च ।
15ab कारण्डवविघुष्टानि तडागानि सरांसि च ॥ १४ ॥
15cd पश्य त्वं दृष्टिरम्याणि गिरिप्रस्रवणानि च ।
15ef रमणीयान्यरण्यानि मयूरविरुतानि च ॥ १५ ॥
16ab शिवाय गम्यतां राम सौमित्रे वत्स गम्यतां ।
16cd आगन्तव्यं तु नो द्रष्टुं पुनराश्रममण्डलं ॥ १६ ॥
17ab एवमुक्तस्तथेत्युक्त्वा काकुत्स्थः सहलक्ष्मणः ।
17cd प्रदक्षिणं मुनिं कृत्वा प्रस्थातुमुपचक्रमे ॥ १७ ॥
18ab ततः शुभतरांस्तूणान् धनुषी चायतेक्षणा ।
18cd ददौ सीता तयोर्भ्रात्रोरसी चारिनिवर्हणौ ॥ १८ ॥
निबध्य तौ च तांस्तूणान् धनुषी च प्रगृह्य तौ ।
निष्क्रान्तावाश्रमं द्रष्टुं ततस्तौ रामलक्ष्मणौ ॥ १९ ॥

फलमूलाशनप्रीतौ वृक्षाणि विविधानि च । 14ab ।
अवन्दतु मततस्तौ तु तत्सर्वं सुसमाहितौ ।
ततो निश्चित्य तद्वीरौ तावुभौ रामलक्ष्मणौ ॥ १९ ॥
प्रस्थितौ धृतचापौ तु तौ निरीक्ष्याथ जानकी । 20ab
हृदयङ्गमया वाचा भर्तारमिदमब्रवीत् । 20cd ॥
प्रणामपूर्वं वाक्यज्ञा समाहितमनोगता । 20ef ॥

L.E
16 = XIII. = 8
S.E. III. 16.

प्रस्थितौ धृतचापौ च तौ निशम्याथ जानकी ।
हृद्यया स्निग्धया वाचा भर्तारमिदमब्रवीत् ॥ १ ॥
प्राप्यतेऽहिंसया राम धर्मः सद्भिः सदा शुभः ।
नाशनानि पुनस्तस्य सप्ताहुर्व्यसनानि च ॥ २ ॥
तत्र कामसमुत्थानि चत्वार्युक्तानि राघव ।
क्रोधोद्भवानि च त्रीणि व्यसनानि प्रचक्षते ॥ ३ ॥
मिथ्यावाक्यं तु प्रथमं यत् सद्भिस्त्यज्यते सदा ।
परदाराभिगमनं विना वैरं च रौद्रता ॥ ४ ॥
तानि सर्वाणि संयन्तुं शक्यं राम जितेन्द्रियैः ।
तव वश्येन्द्रियत्वं च जानामि शुभनिश्चयं ॥ ५ ॥
मिथ्यावाक्यं न ते भूतं न भविष्यति राघव ।
कुतो नु दूषणं राम कुतः स्त्रीगमनं प्रभो ॥ ६ ॥
अस्थाने वैरकरणं तच्च ते समुपस्थितं ।
यदिदं ते व्यवसितं परहिंसाकृतं व्रतं ॥ ७ ॥
वैरप्रसङ्गजननं रक्षोभिस्ते न ते हितं ।
प्रतिज्ञातस्त्वया वीर दण्डकारण्यवासिनां ॥ ८ ॥
ऋषीणां रक्षणाकृते बधः संयति रक्षसां ।
बधार्थे रक्षसां वीर दण्डकारण्यवासिनां ॥ ९ ॥

अथ धर्मः सुतीक्ष्णेन प्राप्यते विधिना महान् /2ab/

प्रस्थितस्त्वं सह भ्रात्रा गृहीत्वा सशरं धनुः ।
त्वां चैव प्रस्थितं दृष्ट्वा राम चिन्ताकुलं मनः ॥ १० ॥
सर्वतश्चिन्तयन्त्या मे तव निःश्रेयसं नृप ।
न च मे रोचते वीर गमनं दण्डकं प्रति ॥ ११ ॥
कारणं तत्र वक्ष्यामि वदन्त्याः श्रूयतां च मे ।
त्वं हि बाणधनुष्पाणिर्भ्रात्रा सह वनं गतः ॥ १२ ॥
दृष्ट्वा वनचरान् नाथ किं न कुर्याः शरव्ययं ।
क्षत्रियस्य धनुः प्रोक्तं हुताशस्येन्धनं यथा ॥ १३ ॥
तत्समीपे स्थितं भूयस्तेजो मूर्छयते बलात् ।
एवं हि दृष्ट्वा विक्रान्तं वित्रस्यन्ति वने चराः ॥ १४ ॥
एकान्तेऽपि स्थितास्ते तु बधमिच्छन्ति तावकं ।
पुरा किल महाबाहो तपस्वी संयतेन्द्रियः ॥ १५ ॥
कश्चिद्वनगतः सिद्धस्तापसारण्यमाश्रितः ।
तस्य केनचिदागत्य निशितं खड्गमुत्तमं ॥ १६ ॥
संन्यासविधिना दत्तं पुण्ये महति तिष्ठतः ।
स तच्छस्त्रमनुप्राप्य न्यासरक्षणतत्परः ॥ १७ ॥
वनेऽपि न जहात्येनं रक्षन् प्रत्ययमात्मनः ।
यत्र गच्छत्युपादातुं पुष्पाणि च फलानि च ॥ १८ ॥
न विना तत्र खड्गेन याति न्यासविशङ्कितः ।
नित्यं शस्त्रं परिचरन् क्रमेण स तपोधनः ॥ १९ ॥

चकार रौद्रां स्वां बुद्धिं त्यक्ता तापसनिश्चयं ।
ततः स रौद्रया बुद्ध्या तदानीं धर्मकर्षितः ॥२०॥
तस्य शस्त्रस्य संसर्गाज्जगाम निरयं मुनिः ।
स्नेहाच्च बहुमानाच्च स्मारये त्वां न शिक्षये ॥२१॥
न कथञ्चिन्मनः कार्यं गृहीतधनुषा त्वया ।
राक्षसानां विना वैरं बधो वीर न युज्यते ॥२२॥
अपराधादृते नापि हन्तव्या राक्षसास्त्वया ।
क्षत्रियाणां हि शूराणां स्वधर्मनिरतात्मनां ॥२३॥
धनुषा कार्यमेतावदार्तानां परिरक्षणं ।
क्व च शस्त्रं क्व च रणं क्व च क्षात्रं तपः क्व च ॥२४॥
प्रतिषिद्धमिदं सर्वमेष धर्मस्तु पूज्यतां ।
त्वमार्य कलुषां बुद्धिं त्यजैनां शास्त्रगर्हितां ॥२५॥
गत्वा पुनरयोध्यायां क्षत्रधर्मं चरिष्यसि ।
अक्षया हि भवेत् प्रीतिः श्वश्रूश्वशुरयोर्मम ॥२६॥
अधर्मकलुषा बुद्धिर्जायते शस्त्रसेवनात् ।
यदि राज्येऽपि संत्यक्ते भवेस्त्वं नियतो मुनिः ॥२७॥
धर्मादर्थः प्रभवति धर्मात् प्रभवते सुखं ।
धर्मेण लभ्यते स्वर्गो धर्मसारमिदं जगत् ॥२८॥
आत्मानं नियमैस्तैस्तैः कर्षयित्वा प्रयत्नतः ।
प्राप्यते पुरुषैः स्वर्गो न सुखाल्लभ्यते सुखं ॥२९॥

अहिंसानिरतः सौम्य भव धर्मपरायणः ।
सर्वं हि ते सुविदितं लोके राघव तत्त्वतः ॥३०॥

स्त्रीचापल्यादेतदुदाहृतं मे
धर्मं हि वक्तुं तव कः समर्थः ।
विचार्य बुद्ध्या तु सहानुजेन
यद्रोचते वै कुरु तन्नरेन्द्र ॥३१॥

इत्यार्षे रामायणे आरण्यककाण्डे सुतीक्ष्णाश्रमनिवासो
नाम द्वादशः सर्गः — सीतावाक्यं नाम
त्रयोदशः सर्गः ॥

XIV.

वाक्यमेतत् तु वैदेह्या व्याहृतं धर्मसंहितं ।
निशम्य मधुरं रामो मैथिलीं प्रत्युवाच ह ॥ १ ॥
हितमुक्तं त्वया देवि स्निग्धया सदृशं वचः ।
कुलं स्वमभिसंधाय धर्मज्ञे जनकात्मजे ॥ २ ॥
किं ते वक्ष्यामि सुश्रोणि यत् त्वयोक्तमिदं वचः ।
क्षत्रियैर्धार्यते शस्त्रं नार्तशब्दो भवेदिति ॥ ३ ॥
ते चार्ता दण्डकारण्ये मुनयः संशितव्रताः ।
मां सीते स्वयमागत्य शरण्याः शरणं गताः ॥ ४ ॥
वसन्तो धर्मनिरता वने मूलफलाशनाः ।
न लभन्ते सुखं सीते राक्षसैः परिपीडिताः ॥ ५ ॥
नियताः सर्वकालेषु विविधैर्नियमैर्वने ।
भक्ष्यन्ते राक्षसैर्घोरैर्विकृतैर्वनचारिभिः ॥ ६ ॥
ते भक्ष्यमाणा मुनयो दण्डकारण्यवासिनः ।
अस्मानभ्युपपद्यैव तत्रोचुर्भयविह्वलाः ॥ ७ ॥
मया च वचनं श्रुत्वा तेषामेतन्मुखच्युतं ।
कृत्वा चरणशुश्रूषां वाक्यमेतदुदाहृतं ॥ ८ ॥
प्रसीदन्तु भवन्तो मे पीडिषा मम दारुणा ।
यदीदृशैरहं विप्रैरुपस्थेयैरुपस्थितः ॥ ९ ॥

10cd मया किं करणीयं च इत्युक्ते द्विजसंनिधौ ।
11ab सर्वैरेव च तैरार्तैर्वागियं समुदाहृता ॥ १० ॥
12ab राक्षसैर्दण्डकारण्ये बहुभिः क्रूरकर्मभिः ।
12cd अर्दिताः स्म भृशं राम तेभ्यो नस्त्रातुमर्हसि ॥ ११ ॥
13ab होमकालेऽग्निहोत्राणां पर्वकाले च राघव ।
13cd क्रुद्धाः प्रधर्षयन्त्यस्मान् राक्षसाः पिशिताशनाः ॥ १२ ॥
14ab राक्षसैः पीड्यमानानां तापसानां तपस्विनां ।
14cd नान्या विमृशतामस्ति त्वद्दते परमा गतिः ॥ १३ ॥
15ab कामं तपःप्रभावेन शक्ता हन्तुं निशाचरान् ।
15cd चिरार्जितं तु नेच्छामस्तपः खण्डयितुं स्वयं ॥ १४ ॥
16ab बहुविघ्नं तपश्चर्तुं दुश्चरं चैव राघव ।
16cd तेन शापं न मुञ्चामो भक्ष्यमाणाश्च राक्षसैः ॥ १५ ॥
17ab तदर्द्यमानान् रक्षोभिर्दण्डकारण्यवासिभिः ।
17cd रक्षास्मांश्चापमुद्यम्य त्वन्नाथा हि वयं वने ॥ १६ ॥
18ab मया चैतद्वचः श्रुत्वा यत्नेन परिपालनं ।
18cd ऋषीणां दण्डकारण्ये संश्रुतं लोकसाक्षिकं ॥ १७ ॥
19ab संश्रुत्य च न शक्नोमि जीवन्नेतत् प्रतिश्रुतं ।
19cd मुनीनामन्यथा कर्तुं सत्यमिष्टं हि मे सदा ॥ १८ ॥
20ab अप्यहं जीवितं जह्यां त्वां सीते सहलक्ष्मणां ।
20cd न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेषु विशेषतः ॥ १९ ॥

XIV.

वाक्यमेतत् तु वैदेह्या व्याहृतं धर्मसंहितं ।
निशम्य मधुरं रामो मैथिलीं प्रत्युवाच ह ॥१॥
हितमुक्तं त्वया देवि स्निग्धया सदृशं वचः ।
कुलं स्वमभिसंधाय धर्मज्ञे जनकात्मजे ॥२॥
किं ते वक्ष्यामि सुश्रोणि यत् त्वयोक्तमिदं वचः ।
क्षत्रियैर्धार्यते शस्त्रं नार्तशब्दो भवेदिति ॥३॥
ते चार्ता दण्डकारण्ये मुनयः संशितव्रताः ।
मां सीते स्वयमागत्य शरण्याः शरणं गताः ॥४॥
वसन्तो धर्मनिरता वने मूलफलाशनाः ।
न लभन्ते सुखं सीते राक्षसैः परिपीडिताः ॥५॥
नियताः सर्वकालेषु विविधैर्नियमैर्वने ।
भक्ष्यन्ते राक्षसैर्घोरैर्विकृतैर्वनचारिभिः ॥६॥
ते भक्ष्यमाणा मुनयो दण्डकारण्यवासिनः ।
अस्मानभ्युपपद्यैव तत्रोचुर्भयविह्वलाः ॥७॥
मया च वचनं श्रुत्वा तेषामेतन्मुखच्युतं ।
कृत्वा चरणशुश्रूषां वाक्यमेतदुदाहृतं ॥८॥
प्रसीदन्तु भवन्तो मे पीडिषा मम दारुणा ।
यदीदृशैरहं विप्रैरुपस्थेयैरुपस्थितः ॥९॥

मया किं करणीयं च इत्युक्ते द्विजसंनिधौ ।
सर्वैरेव च तैरार्तैर्वागियं समुदाहृता ॥ १० ॥
राक्षसैर्दण्डकारण्ये बहुभिः क्रूरकर्मभिः ।
अर्दिताः स्म भृशं राम तेभ्यो नस्त्रातुमर्हसि ॥ ११ ॥
होमकालेऽग्निहोत्राणां पर्वकाले च राघव ।
क्रुद्धाः प्रधर्षयन्त्यस्मान् राक्षसाः पिशिताशनाः ॥ १२ ॥
राक्षसैः पीड्यमानानां तापसानां तपस्विनां ।
नान्या विमृशतामस्ति त्वद्दते परमा गतिः ॥ १३ ॥
कामं तपःप्रभावेन शक्ता हन्तुं निशाचरान् ।
चिरार्जितं तु नेच्छामस्तपः खण्डयितुं स्वयं ॥ १४ ॥
बहुविघ्नं तपश्चर्तुं दुश्चरं चैव राघव ।
तेन शापं न मुञ्चामो भक्ष्यमाणाश्च राक्षसैः ॥ १५ ॥
तदर्घमानान् रक्षोभिर्दण्डकारण्यवासिभिः ।
रक्षास्मांश्चापमुद्यम्य त्वन्नाथा हि वयं वने ॥ १६ ॥
मया चैतद्वचः श्रुत्वा यत्नेन परिपालनं ।
ऋषीणां दण्डकारण्ये संश्रुतं लोकसाक्षिकं ॥ १७ ॥
संश्रुत्य च न शक्नोमि जीवन्नेतत् प्रतिश्रुतं ।
मुनीनामन्यथा कर्तुं सत्यमिष्टं हि मे सदा ॥ १८ ॥
अप्यहं जीवितं जह्यां त्वां सीते सहलक्ष्मणां ।
न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेषु विशेषतः ॥ १९ ॥

तदवश्यं मया कार्यमृषीणां परिपालनं ।
अनुद्वेगेन ये धर्मं साधयन्ति मनीषिणः ॥ २० ॥
रक्षार्थं मुनिसंघानामेतदुक्तं मयापि ह ।
अनुक्तेनापि वैदेहि किं पुनः सत्यसंश्रवे ॥ २१ ॥
मद्भक्त्या तु त्वया सीते हितमुक्तं वचो मम ।
सदृशं चानुरूपं च कुलस्य तव शोभने ॥ २२ ॥
मम स्नेहेन प्रीत्या च यदुक्तोऽहं त्वया वचः ।
परितुष्टोऽस्मि वैदेहि नानिष्टो ह्यनुशास्यते ॥ २३ ॥

एतावदुक्त्वा वचनं महात्मा
सीतां तदा मैथिलराजपुत्रीं ।
रामो धनुष्मान् सह लक्ष्मणेन
जगाम रम्याणि तपोवनानि ॥ २४ ॥

इत्यार्षे रामायणे आरण्यककाण्डे रामवाक्यं नाम
चतुर्दशः सर्गः ॥

## XV.

अग्रतोऽथ ययौ रामः सीता मध्ये सुमध्यमा ।
पृष्ठतस्तु धनुष्पाणिर्लक्ष्मणोऽनुजगाम ह ॥ १ ॥
पश्यन्तौ तौ च रम्याणि वनान्युपवनानि च ।
पर्वतांश्च नदीश्चैव राघवौ सह सीतया ॥ २ ॥
सारसांश्चक्रवाकांश्च नदीपुलिनचारिणः ।
सरांसि च सपद्मानि नानापक्षिगणानि च ॥ ३ ॥
हरीणां यूथपांश्चैव मदोद्धूतांश्च कुञ्जरान् ।
महिषांश्च वराहांश्च गवयांश्चमरांस्तथा ॥ ४ ॥
ते गत्वा दूरमध्वानं लम्बमाने दिवाकरे ।
ददृशुः सहिता रम्यं तडागं योजनायतं ॥ ५ ॥
पद्मोत्करविचित्राङ्गं गजयूथविलोडितं ।
शरारिहंसकुररैराकीर्णं जलचारिभिः ॥ ६ ॥
प्रसन्नसलिले रम्ये तस्मिन् सरसि शुश्रुवे ।
गीतवादित्रनिर्घोषो न तु कश्चिददृश्यत ॥ ७ ॥
ततः कौतूहलाद्रामो लक्ष्मणश्च महायशाः ।
मुनिं धर्मभृतं नाम पपृच्छतुरुपेत्य वै ॥ ८ ॥
इदमत्यद्भुतं दृष्ट्वा सर्वेषां नो महाद्युते ।
कौतूहलं महज्जातं किमिदं साधु कथ्यतां ॥ ९ ॥

तेनैवमुक्तो धर्मात्मा राघवेण महात्मना ।
प्रभावं तस्य सरस आख्यातुमुपचक्रमे ॥ १० ॥
इदं पञ्चाप्सरो नाम सरः पौराणमुच्यते ।
निर्मितं तपसा राम मुनिना मन्दकर्णिना ॥ ११ ॥
स हि तेपे तपस्तीव्रं मन्दकर्णिर्महामुनिः ।
दशवर्षसहस्राणि वायुभक्ष्यः शिलासनः ॥ १२ ॥
ततः प्रव्यथिताः सर्वे देवा इन्द्रपुरोगमाः ।
अब्रुवन्नयमस्माकं स्थानं प्रार्थयते मुनिः ॥ १३ ॥
तस्य कर्तुं तपोविघ्नं नियुक्ताः सर्वदैवतैः ।
प्रधानाप्सरसः पञ्च दिव्याभरणभूषिताः ॥ १४ ॥
तत्रागतास्ता गायन्त्यो नन्दन्त्यश्च सुमध्यमाः ।
तमलोभयन् ललना मुनिं तीव्रतपोव्रतं ॥ १५ ॥
अप्सराभिस्ततस्ताभिर्मुनिर्दृष्टपरावरः ।
नीतो मदनवश्यत्वं सुराणामर्थसिद्धये ॥ १६ ॥
ताश्चैवाप्सरसः पञ्च मुनेः पत्नीत्वमागताः ।
तडागे निर्मितं तासामस्मिन्नन्तर्हितं गृहं ॥ १७ ॥
ता इहाप्सरसः पञ्च निवसन्ति यथासुखं ।
रमयन्ति तपोयोगान्मुनिं यौवनदर्पिताः ॥ १८ ॥
तासां संक्रीडमानानां महानेषोऽत्र निस्वनः ।
श्रूयते भूषणोन्मिश्रो गीतः श्रुतिमनोहरः ॥ १९ ॥

अब्रुवन् वचनं तं वै परस्परसमागमं ॥ 13 cd ॥
अप्सरोभिस्ततस्ताभिर्मुनिर्दृष्टपरावरः ।
नीतो मदनवश्यत्वं सुराणामर्थसिद्धये ॥ 15 ॥

आश्चर्यमिति तस्यैतद्वचनं भावितात्मनः ।
राघवः प्रतिजग्राह सह भ्रात्रा महाबलः ॥ २० ॥
एवं कथयतस्तस्य ददर्शाश्रममण्डलं ।
कुशचीरपरिक्षिप्तं नानावृक्षलतावृतं ॥ २१ ॥
तं प्रविश्याश्रमं रामः सीतया लक्ष्मणेन च ।
सहितो मुनिभिः सर्वैः सत्कारेणाथ सत्कृतः ॥ २२ ॥
ततस्तस्मिन् स काकुत्स्थः श्रीमत्याश्रममण्डले ।
न्यवसत् सुसुखस्तैस्तैः पूज्यमानो महर्षिभिः ॥ २३ ॥
जगाम चाश्रमं तेषां पर्यायेन महात्मनां ।
पादाभिवादनं कर्तुं सकाशं राघवस्तदा ॥ २४ ॥
क्वचित् परिवसन् मासमेकं संवत्सरं तथा ।
क्वचिच्च चतुरो मासान् पञ्च षड् वापि च क्वचित् ॥ २५ ॥
अपरत्राधिकं मासमध्यर्धमपरं क्वचित् ।
त्रीन् मासानपरानष्टौ राघवो न्यवसत् सुखं ॥ २६ ॥
मासद्वयं चापरत्र साग्रं संवत्सरं क्वचित् ।
पक्षमन्यत्र मासं च न्यवसद्राघवस्तदा ॥ २७ ॥
तथा संवसतस्तस्य मुनीनामाश्रमे सुखं ।
रमतश्चानुकूल्येन ययुः संवत्सरा दश ॥ २८ ॥
तथा परिवसंश्चैव राघवः सह सीतया ।
सुतीक्ष्णस्याश्रमं श्रीमान् पुनरेव जगाम ह ॥ २९ ॥

तत्राश्रमपदे रामो विश्रम्य सुसमाहितः । 1ab ।
तेषामुषितवान् रामः समाः परमसत्त्ववित् । 3ab ।

चतुर्दशसहस्राणि रक्षसां भीमकर्मणां ।
बहुशो लब्धलक्ष्याणां खरस्य वशवर्तिनां ॥ १० ॥
ते त्विदानीं जनस्थाने निवसन्तो महाबलाः ।
संगताः परमायस्ता रामेण किल संयुगे ॥ ११ ॥
तेन संजातरोषेण रामेण रणमूर्धनि ।
अनुक्त्वा परुषं किंचिच्छरैराशीविषोपमैः ॥ १२ ॥
ततस्तानि सहस्राणि राक्षसानां चतुर्दश ।
निहतानि जनस्थाने मानुषेण पदातिना ॥ १३ ॥
खरश्च निहतः संख्ये दूषणस्त्रिशिरास्तथा ।
ऋषीणामभयं दत्तं कृताः क्षेमाश्च दण्डकाः ॥ १४ ॥
दुर्भगातनयो यो ऽसौ सुभगावाक्यकारिणा ।
पित्रा निरस्तः क्रुद्धेन सभार्यः सहलक्ष्मणः ॥ १५ ॥
स हत्वा तस्य सैन्यस्य रामः क्षत्रियपांसनः ।
अशीलः कर्कशो मूर्खो लुब्धस्तीक्ष्णो ऽजितेन्द्रियः ॥ १६ ॥
त्यक्तधर्मस्त्वधर्मज्ञो भूतानामहिते रतः ।
तपस्वी चीरधारी च सभार्यः स धनुर्धरः ॥ १७ ॥
येन वैरं विनारण्ये सत्त्वमाश्रित्य केवलं ।
कर्णनासापहारेण भगिनी मे विरूपिता ॥ १८ ॥
तस्य भार्या विशालाक्षी नाम्ना सीतेति विश्रुता ।
रूपयौवनसंपन्ना श्रीरपद्मेव शोभना ॥ १९ ॥

अथ गत्वा जनस्थाने तामहं लोकसुन्दरीं ।
आनयिष्यामि विक्रम्य सहायस्तत्र मे भव ॥ २० ॥
त्वया ह्यहं सहायेन पार्श्वस्थेन महाबल ।
सेन्द्रानपि सुरान् युद्धे समस्तान् न विचिन्तये ॥ २१ ॥
तत् सहायो भव त्वं मे समर्थोऽसि हि राक्षस ।
वीर्ये शौर्ये च बुद्धौ च नैवास्ति सदृशस्तव ॥ २२ ॥
एतदर्थमहं प्राप्तस्त्वत्सकाशमरिंदम ।
एतन्मम प्रियं तात मारीच कुरु नान्यथा ॥ २३ ॥
तपोवनस्थं नियतं जानामि त्वां महाबलं ।
अर्थगौरवमप्येतत् ततस्त्वां प्रब्रवीम्यहं ॥ २४ ॥
यच्चापि भवता कार्यं तत्र यातेन मे प्रियं ।
तच्छृणु त्वं महाबाहो महावीर्य वचो मम ॥ २५ ॥
सौवर्णस्त्वं मृगो भूत्वा चित्रो रजतबिन्दुभिः ।
आश्रमे तस्य रामस्य सीतायाः प्रमुखे चर ॥ २६ ॥
त्वां हि निःसंशयं दृष्ट्वा निष्क्रम्य मृगरूपिणं ।
गृह्यतामिति भर्तारं लक्ष्मणं चाभिधास्यति ॥ २७ ॥
रामे सलक्ष्मणे याते सीतां शून्ये यथासुखं ।
निरालम्बां हरिष्यामि राहुश्चन्द्रप्रभामिव ॥ २८ ॥
अपयानेऽपि च भवान् समर्थो लघुविक्रमः ।
कार्यस्य गौरवे चापि विक्रमेण भवान् बली ॥ २९ ॥

जनस्थाने कृता ये च राक्षसा भीमविक्रमाः ।
खरो दूषणस्त्रिशिरास्तेषां चैको न ते समः ॥ ३० ॥
त्वन्मार्गमन्विते तस्मिन् राघवे सहलक्ष्मणे ।
कृतायां चापि वैदेह्यां कृते शूर्पणखाप्रिये ॥ ३१ ॥
कृतौजसि सुखं रामे भार्याहरणदुःखिते ।
विस्रब्धं विहरिष्यामि कृतार्थेनान्तरात्मना ॥ ३२ ॥

एतत् प्रियं मे कुरु याच्यमानो
न मे सहायोऽस्ति भवद्विशिष्टः ।
कार्यं च कालं च समीक्ष्य बुद्ध्या
सर्वानुपायान् विदधासि नित्यं ॥ ३३ ॥
स रामवीर्यज्ञतया विचेतनो
महाहवे रावणवाक्यचोदितः ।
कृताञ्जलिश्चेदमुवाच रावणं
हितं च युक्तं परमार्थतो वचः ॥ ३४ ॥

इत्यार्षे रामायणे आरण्यककाण्डे रावणवाक्यं नाम
चत्वारिंशः सर्गः ॥

तस्य रामकथां श्रुत्वा मारीचस्याभवद् भयम् ।
दुःखमासीच्च वदनं परित्रस्तो बभूव सः ॥ 64 ॥

XLI.

सुलभाः पुरुषा राजन् सततं प्रियवादिनः ।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ १ ॥
नूनं न बुध्यसे रामं यथावीर्यं यथाबलं ।
अयुक्तचारश्चपलो महेन्द्रवरुणोपमं ॥ २ ॥
रामेण चेद्राक्षसेन्द्र वर्धते तव विग्रहः ।
सर्वं राक्षसलोकं हि तिष्ठन्तं विद्धि संशये ॥ ३ ॥
अपि स्वस्ति भवेत् तात सर्वेषां भुवि रक्षसां ।
अपि रामो न संक्रुद्धः कुर्याल्लोकमराक्षसं ॥ ४ ॥
अल्पवीर्यो महावीर्यमुत्कृष्टबलपौरुषं ।
रामं त्वं समरे मोहादासादयितुमिच्छसि ॥ ५ ॥
अपि ते जीवितान्ताय नोत्पन्ना जनकात्मजा ।
अपि सीतानिमित्तं ते न भवेद्व्यसनं महत् ॥ ६ ॥
अपि ते स्वस्ति वंशाय अपि स्वस्ति सुताय ते ।
अपि त्वां विपुला लक्ष्मीर्न जह्याद्धनदानुज ॥ ७ ॥
अपि त्वामीश्वरं प्राप्य कामवृत्तमनङ्कुशं ।
न विनश्येत् पुरी लङ्का त्वया सह सराक्षसा ॥ ८ ॥
दुःशीलस्त्वद्विधः पापः कामवृत्तोऽजितेन्द्रियः ।
आत्मानं स्वजनं राजा हन्ति राष्ट्रं च दुर्मतिः ॥ ९ ॥

इत्युक्तस्तु मारीचो दशग्रीवेण रक्षसा ।
उद्भ्रान्तनयनः स्तब्धः प्राञ्जलिर्वाक्यमब्रवीत् ॥ १ ॥

ये च पूर्वं त्वया प्रोक्ता दोषा रामस्य धीमतः ।
दुःश्रुतं तव तद्रक्षः स महात्मा महायशाः ॥१०॥
न स पित्रा परित्यक्तो नामर्यादः कथञ्चन ।
प्रजा न विमनास्तस्य न तस्य विमुखा द्विजाः ॥११॥
निर्मर्यादः स नो वीरो न हीनो राजलक्षणैः ।
न पापो न च दुःशीलो न च क्षत्रियपांसनः ॥१२॥
न रामः कर्कशस्तात नाविद्वान् नाजितेन्द्रियः ।
अनृतं दुःश्रुतं त्वेतद्वचनं तव राक्षस ॥१३॥
न स धर्मगुणैर्हीनः कौशल्यानन्दिवर्धनः ।
न च तीक्ष्णो न भूतानां सर्वेषामहिते रतः ॥१४॥
एते दोषा न रामस्य अनृतं तव भाषितं ।
दुःश्रुतं च त्वया वीर रामो हि गुणवत्तरः ॥१५॥
वञ्चितं पितरं ज्ञात्वा कैकेय्या सत्यवादिनं ।
करिष्यामीति धर्मात्मा ततः प्रव्रजितो वनं ॥१६॥
कैकेय्याः प्रियकामार्थं पितुर्दशरथस्य च ।
हित्वा राज्यं च भोगांश्च प्रविष्टो दण्डकं वनं ॥१७॥
धर्मी विग्रहवान् रामः साधुः सत्यप्रतिश्रुतः ।
मधुरः शीलसंपन्नो मध्यस्थो न च गर्वितः ॥१८॥
गुणैरुपचितः सर्वैः सर्वदोषविवर्जितः ।
राजा सर्वस्य लोकस्य देवानामिव वासवः ॥१९॥

कथं त्वं तस्य वैदेहीं रक्षितां स्वेन तेजसा ।
हर्तुमिच्छसि दुर्बुद्धे प्रभामिव विभावसोः ॥ २० ॥
भार्यां रामस्य सदृशीं हृत्वा दशरथस्नुषां ।
न शक्यं रक्षितुं प्राणान् यस्यापि त्रिदशागतिः ॥ २१ ॥
शरार्चिषमनाधृष्यं घोरचापेन्धनं रणे ।
रामाग्निं सहसा दीप्तं न प्रवेष्टुं त्वमर्हसि ॥ २२ ॥
कार्मुकव्यात्तदीप्तास्यं शरजिह्वास्त्रकेशरं ।
रामसिंहं वने तात न धर्षयितुमर्हसि ॥ २३ ॥
प्रज्ञाधातुं शीलशृङ्गं रूपपुष्पितकाननं ।
रामशैलमशीलस्त्वं न कम्पयितुमर्हसि ॥ २४ ॥
बुद्धिवेलापरिक्षिप्तं धनुर्विस्फारितस्वनं ।
रामसागरमक्षोभ्यं न दोर्भ्यां तर्तुमर्हसि ॥ २५ ॥
खड्गदण्डं धनुष्पाशं शरौघजठरं प्रभुं ।
रामकालमकालेन न कालयितुमर्हसि ॥ २६ ॥
राज्यं सुखं च भोगांश्च जीवितं च यदीच्छसि ।
नैवासादयितव्यो हि त्वया रामः प्रतापवान् ॥ २७ ॥
अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा ।
प्राणेभ्योऽपि प्रियतमा भार्या नित्यमनुव्रता ॥ २८ ॥
न त्वं समर्थस्तां हर्तुं रामबाहुबलाश्रयां ।
दीप्तस्येव हुताशस्य शिखां सीतां सुमध्यमां ॥ २९ ॥

किमुद्यमं व्यर्थमिमं कुर्यास्त्वं राक्षसेश्वर ।
दृष्टौ चावां रणे तेन तद्दत्तं जीवितं च नौ ॥३०॥
जीवितं चैव राज्यं च सुखं चैव सुदुर्लभं ।
राघवेण विरुद्धस्य सर्वं संशयितं तव ॥३१॥
गम्यतां स्वपुरीं त्यक्त्वा रोषं मध्यस्थतां व्रज ।
गुरुलाघवसंयुक्तं मन्त्रिभिः सह मन्त्रय ॥३२॥
तिष्ठन्तु मन्त्रिणः सर्वे राक्षसेन्द्रं विभीषणं ।
सर्वकार्येषु पृच्छ त्वं स ते श्रेयोऽभिधास्यति ॥३३॥
महातपोधनां सिद्धां सर्वदोषवहिष्कृतां ।
त्रिजटां पृच्छ राजेन्द्र सा ते श्रेयोऽभिधास्यति ॥३४॥
दूषणस्य कृते यत् ते हृद्गतं कोपधारणं ।
खरस्य च कृते यच्च रक्षस्त्रिशिरसस्तथा ॥३५॥
कृते शूर्पणखायाश्च तथान्येषां च रक्षसां ।
न ते तद्धृदये कार्यं राक्षसेन्द्र प्रसीद मे ॥३६॥
दोषाणां च गुणानां च संप्रधार्य बलाबलं ।
आत्मनश्च बलं ज्ञात्वा रामस्य च पराक्रमं ॥३७॥
समस्तैर्मन्त्रिभिः सार्धं मन्त्रयित्वा च रावण ।
आयती हितमालोक्य ततस्त्वं कर्तुमर्हसि ॥३८॥
अहं तु मन्ये तव न क्षमं रणे समागमं कोशलराजसूनुना ।
इदं च भूयः शृणु वाक्यमुत्तमं हितं च युक्तं च निशाचराधिप ।३९।

विश्वामित्रोऽथ धर्मात्मा राजसिंहं महाद्युतिं ।
सान्त्वयित्वा महेन्द्राभमिदं वचनमब्रवीत् ॥ २० ॥
कृतं मम नरव्याघ्र सह सैन्येन पार्थिव ।
किं च क्लेशेन भवतो राममेकं विसर्जय ॥ २१ ॥
एवमुक्तस्तु मुनिना राजा दशरथस्तदा ।
प्रत्युवाच महाप्राज्ञं तं मुनिं स पुनस्तदा ॥ २२ ॥
6cd ऊनषोडशवर्षोऽयमकृतास्त्रश्च राघवः । 6ab 6ab
कथं शक्ष्यति तद्रक्ष एकः प्रतिसमासितुं ॥ २३ ॥
अयमव्यक्तनिर्माणो बालो बालमृगेक्षणः ।
न शक्तो राक्षसेन्द्रस्य प्रसीद भगवन्निति ॥ ३४ ॥
8ab एवमुक्तोऽथ नृपतिं स मुनिः पुनरब्रवीत् । 7ab
8cd रामान्नान्यद्बलं लोके पर्याप्तं तस्य रक्षसः ॥ २५ ॥ 7cd
9ab बालोऽप्येष महाबाहुः पर्याप्तस्तस्य निग्रहे । 8ab
9cd यास्यामि राममादाय स्वस्ति तेऽस्तु नराधिप ॥ २६ ॥ 8cd
मया च गुप्तं कः शक्तो रामं वीर्यात् प्रबाधितुं ।
ततः स हर्षमादाय राजा राघवमब्रवीत् ॥ २७ ॥
गमिष्यसि सहानेन वनं किल महर्षिणा ।
पितुः स वचनं श्रुत्वा बाढमित्यब्रवीद्वचः ॥ २८ ॥
रामात् तु वचनं श्रुत्वा विश्वामित्रं मुनिं तदा ।
विचार्य मनसा राजा गम्यतामित्यभाषत ॥ २९ ॥
न युद्धयोग्यतामस्य पश्यामि सह राक्षसैः ।
कामं नयतु मत्सैन्यं सर्वं तेऽत्र प्रतिष्ठितम् ॥7॥

एवमुक्तस्तु स मुनिस्तमादाय नृपात्मजं ।
जगाम परमप्रीतो विश्वामित्रो दृढव्रतः ॥३०॥
स तदा दण्डकारण्ये विश्वामित्राश्रमे बली ।
उपयातेषु विप्रेषु पर्वकाले ह्युपस्थिते ॥३१॥
विश्वामित्रेण मुनिना दत्तशस्त्रो नृपात्मजः ।
बभूवावस्थितो रामश्चिरं विस्फारयन् धनुः ॥३२॥
अजातव्यञ्जनः श्रीमान् बालः श्यामः शुभेक्षणः ।
काकपक्षधरो धन्वी राजत्कुण्डलमालया ॥३३॥
शोभयन् दण्डकारण्यं दीप्तेन स्वेन तेजसा ।
अदृश्यत तदा रामो बालचन्द्र इवोदितः ॥३४॥
कामरूपित्वमादाय महाद्रिशिखरोपमः ।
उपस्थितोऽम्बरस्यान्ते संध्याभ्र इव शारदः ॥३५॥
बली दत्तवरो दर्पादागतोऽस्मि तदाश्रमं ।
तेन दृष्टः प्रविष्टश्च सहसाहं तमाश्रमं ॥३६॥
मां च दृष्ट्वा धनुः सज्यमसंभ्रान्तश्चकार ह ।
राक्षसा ये च पार्श्वस्था मम तत्र महाबलाः ॥३७॥
बालं दृष्ट्वा धनुष्पाणिं चक्रुरास्फालनं तु ते ।
अवज्ञाय च तं मोहाद्बालोऽयमिति राघवं ॥३८॥
विश्वामित्रं परामर्ष्टुमभ्यधावंस्त्वरान्विताः ।
तेन मुक्ता महाबाणं वज्राशनिसमस्वनं ॥३९॥

अथाहं मेघसङ्काशस्तप्तकाञ्चनभूषणः ॥
तेनाहं ताडितस्त्रस्तः समुद्रे पतितः पुरा ॥

हृदये ताडितस्तत्र हृतश्चास्मि नभस्तलात् ।
ततो बाणसहस्राणि मुमोचायतलोचनः ॥४०॥
भ्रामयन् दारयंश्चैव देहं मम सहस्रशः ।
पक्षिवद्भ्रामयित्वा च गगने मां निराकृतं ॥४१॥
वेगेन पातयामास परे पारे महोदधेः ।
भूयश्च शरवर्षेण निरस्तोऽहं विचेतनः ॥४२॥
अवाप्य संज्ञां कृच्छ्रेण लङ्कां प्रतिगतः पुरीं ।
राक्षसा ये च पार्श्वस्था मम तत्र महाबलाः ॥४३॥
ते तु रामेण तत्रैव क्षणेन विनिपातिताः ।
एवमस्मि तदा मुक्तः कथञ्चित् तेन संयुगे ॥४४॥
अकृतास्त्रेण बालेन नीतो ह्येतां दशां पुरा ।
किं पुनः स कृतास्त्रोऽद्य रामः सत्यपराक्रमः ॥४५॥
तन्मया वार्यमाणस्त्वं यदि रामेण विग्रहं ।
करिष्यस्यापदं घोरां क्षिप्रं प्राप्स्यसि दुस्तरां ॥४६॥
क्रीडारतिविधिज्ञानां समाजोत्सवशालिनां ।
राक्षसानां च संतापमनर्थं चोपलप्स्यसे ॥४७॥
हर्म्यप्रासादसंबाधां नानापण्यविभूषितां ।
द्रक्ष्यसि त्वं पुरीं लङ्कामाकुलां मैथिलीकृते ॥४८॥
दिव्यचन्दनदिग्धाङ्गान् दिव्याभरणभूषितान् ।
राक्षसान् निहतान् भूमौ रामेण द्रक्ष्यसे रणे ॥४९॥

अकुर्वन्तो हि पापानि शुचयः पापसंश्रयात् ।
परपापैर्विनश्यन्ति मत्स्या नागह्रदे यथा ॥५०॥
राक्षसानां महाशोकं द्विषतां च प्रियं प्रभो ।
आत्मनश्चापि संदेहं मा कृथास्त्वं कुलस्य च ॥५१॥
हृतदारान् सदारांश्च दश विद्रवतो दिशः ।
हृतशेषानशरणान् द्रक्ष्यसि त्वं निशाचरान् ॥५२॥
शरजालपरिक्षिप्तामग्निज्वालासमावृतां ।
प्रदग्धभवनां लङ्कां द्रक्ष्यसि त्वं न संशयः ॥५३॥
प्रमदानां सहस्राणि तव राजन् परिग्रहः ।
सीताहेतोः समग्राणि विद्रविष्यन्ति रावण ॥५४॥
आत्मनस्त्वं महाराज पुरस्यान्तःपुरस्य च ।
राक्षसानां च नाशाय वैदेहीमानयिष्यसि ॥५५॥
मानं वृद्धिं च राज्यं च जीवितं चेष्टमात्मनः ।
दारांश्च त्यक्ष्यसि क्षिप्रं रणे रामेण संगतः ॥५६॥
मया सुरगणाः सर्वे निर्जिता बहुशस्त्विति ।
यस्ते गर्वो महाराज तं ते रामो हरिष्यति ॥५७॥
सुखं वृद्धिं च राज्यं च जीवितं चेष्टमात्मनः ।
यदीच्छसि चिरं भोक्तुं मा कृथा रामविप्रियं ॥५८॥
निवार्यमाणः सुहृदा मया भृशं प्रसह्य सीतां यदि हर्तुमिच्छसि ।
गमिष्यसि क्षीणतनुस्त्वमाहवे यमक्षयं रामशरात्तजीवितः ॥५९॥

## XLIII.

एवमुक्त्वा तदा तत्र रावणं राक्षसाधिपं ।
हितं तथ्यं च पथ्यं च मारीचः पुनरब्रवीत् ॥ १ ॥
विदितं ते महाराज यथा मे देवसंयुगे ।
शक्रवज्रनिपातैस्तु शरीरं विक्षतं भृशं ॥ २ ॥
विष्णुचक्रावलीढाङ्गः शरवृष्टिपरिक्षतः ।
दैत्यदानवसंघानां नानाप्रहरणैश्चितः ॥ ३ ॥
तथाहं वरदानस्य दर्पोत्सेकेन दर्पितः ।
पदातिना मनुष्येण रामेणैकेन रावण ॥ ४ ॥
अकृतास्त्रेण बालेन काकपक्षधरेण च ।
शरेण हृदये विद्धो बाणैः क्षिप्तोऽस्मि सागरे ॥ ५ ॥
एवमस्मि तदा मुक्तः कथञ्चित् तेन संयुगे ।
इदानीमपि यद्वृत्तं तन्मे शृणु दशानन ॥ ६ ॥
राक्षसाभ्यामहं द्वाभ्यामनिर्विण्णस्तथा कृतः ।
सहितो मृगरूपेण प्रविष्टो दण्डकं वनं ॥ ७ ॥
दीप्तजिह्वो महाकायस्तीक्ष्णशृङ्गो महाबलः ।
व्यचरं दण्डकारण्ये ऋषिमांसानि भक्षयन् ॥ ८ ॥
अग्निहोत्रेषु वेदीषु चैत्यवृक्षेषु रावण ।
अत्यन्तनियताहारांस्तापसांस्तानभक्षयं ॥ ९ ॥

रुधिराणि पिबंस्तेषां भूमौ च विनिपातितान् ।
निहन्मि दण्डकारण्ये मुनीन् धर्मपरायणान् ॥ १० ॥
गतभी राक्षसश्रेष्ठ मुनीनां धर्मदूषकः ।
चरन् रुधिरमत्तोऽहं विश्वस्तो दण्डकं वनं ॥ ११ ॥
तथाहं दण्डकारण्ये विचरंश्च सदूषणः ।
आससाद वने रामं तापसं धर्मचारिणं ॥ १२ ॥
वैदेहीं च महाभागां लक्ष्मणं च महाबलं ।
तापसं नियताहारं चीरकृष्णाजिनाम्बरं ॥ १३ ॥
सोऽहं वनगतं रामं परिभूयामितौजसं ।
तापसोऽयमिति ज्ञात्वा पूर्ववैरमनुस्मरन् ॥ १४ ॥
ततो मोहाच्च रोषाच्च वर्धमानेन तेजसा ।
अवोचं राक्षसौ तौ च भक्ष्योऽयं नो महानिति ॥ १५ ॥
राक्षसाभ्यां वृतस्ताभ्यां ततो हन्तुं महाबलं ।
लुब्धो मानुषमांसेन क्रव्यादगणमोदनः ॥ १६ ॥
अभ्यधावमतिक्रुद्धस्तीक्ष्णशृङ्गो मृगाकृतिः ।
जिघांसुरग्रतस्तस्य संप्रहारमनुस्मरन् ॥ १७ ॥
आपतन्तं च मां दृष्ट्वा नीलवर्णं च भीषणं ।
अपावृतमुखाभ्यां च राक्षसाभ्यां समन्वितं ॥ १८ ॥
तेन लीलायमानेन अविभ्रान्तमविस्मितं ।
विकृष्य सुमहच्चापं राघवेण महात्मना ॥ १९ ॥

मुक्तास्तत्र त्रयो वाणाः शिताः शत्रुभयंकराः । 11ab
संनताः पञ्चपर्वाणः सुपर्णानिलरंहसः ॥ २० ॥ 11cd
9 ab तैर्वाणैर्दण्डकारण्यं मुक्तैराशीविषोपमैः ।
9 cd कृतं वितिमिरं सर्वं रामेणाक्लिष्टकर्मणा ॥ २१ ॥
10 ab ते वाणा वज्रसंकाशाः सुघोरा रक्तभोजनाः । 12ab
10 cd आजग्मुर्निशिताः सर्वे त्रयाणां सुसमाहिताः ॥ २२ ॥ 12cd
11 ab पराक्रमज्ञो रामस्य तथा दृष्टभयः पुरा । 13ab
आपतन्तं शरं दृष्ट्वा मेघगम्भीरनिस्वनं ॥ २३ ॥
ततोऽहं वेगवांस्तत्र वातरंहा निमेषतः ।
अपक्रान्तः परं पारं निवृत्तः सागराच्छरः ॥ २४ ॥
यौ तौ मया सह गतौ राक्षसौ दण्डकं वनं ।
निहतौ तौ शराभ्यां तु पतितौ शोणितोक्षितौ ॥ २५ ॥
11 cd शरेण मुक्तो रामस्य कथञ्चित् प्राप्य जीवितं । 14ab
भयेन महता छन्नो लङ्कां प्राप्य समाश्वसं ॥ २६ ॥
विश्वामित्राश्रमे यश्च प्रहारो हृदि पातितः ।
राघवेण महाबाहो रुजा अद्यापि तस्य मे ॥ २७ ॥
जीवितान्तकरां प्राप्य मानुषाद्धर्षणां तथा ।
कृच्छ्राच्च परमात् तात निर्वेदो मेऽभवत् तदा ॥ २८ ॥
ततो लङ्कां गृहं दारान् राक्षसान् स्वजनं तथा ।
कामभोगांश्च विपुलान् परित्यज्य सुदुर्लभान् ॥ २९ ॥

समीपे यदि [illegible] रक्षेयं तदन्तं जीवितं च मे ।12ab।
राममेव हि पश्यामि रहितं राक्षसेश्वर ।14ab।

जवेनागम्य राजेन्द्र प्राप्येदं सुमहद्वनं ।
अहं प्रव्रजितस्तस्मान्निर्वेदादस्मि रावण ॥ ३० ॥
कथं तस्य प्रभावज्ञः शरसंस्पर्शकोविदः ।
समीपमुपगच्छेयं दृष्टपूर्वबलस्य वै ॥ ३१ ॥
अपि रामसहस्राणि भीतः पश्यामि रावण ।
रामभूतमिदं सर्वमरण्यं प्रतिभाति मे ॥ ३२ ॥
वृक्षे वृक्षे च पश्यामि चीरकृष्णाजिनाम्बरं ।
शरचापधरं रामं पाशहस्तमिवान्तकं ॥ ३३ ॥
राममेवानुपश्यामि रहितेष्वाकुलेषु च ।
दृष्ट्वा स्वप्नगतो राममुद्भ्रमामि विचेतनः ॥ ३४ ॥
रकारादीनि वाक्यानि रामाद्भीतस्य रावण ।
रत्नानि च रमण्यश्च त्रासं संजनयन्ति मे ॥ ३५ ॥
अहं तस्य प्रभावज्ञो युद्धं तेन न ते क्षमं ।
न ते रामकथा कार्या यदि मे श्रोतुमिच्छसि ॥ ३६ ॥
धर्मार्थौ धर्मकामौ च कामार्थावपि केवलौ ।
नित्यमेते प्रदृश्यन्ते संनिपातश्च दृश्यते ॥ ३७ ॥
इच्छया जायते काम ईहयार्थो विवर्धते ।
श्रद्धया वर्धते धर्मस्तेषां फलमिदं त्रिधा ॥ ३८ ॥
तव नान्यत् प्रपश्यामि किंचिद्वीर्यस्य संशयं ।
ऋते रामनिपातात् तु संनिवर्तस्व रावण ॥ ३९ ॥

केनेदमुपदिष्टं ते मृत्युद्वारमपावृतं ।
यत् प्राप्येह विनश्येम वयं सर्वे च राक्षसाः ॥४०॥

यदि त्वया देवगणाः समस्ता
रणे जिता वज्रधरेण सार्धं ।
यमः कुवेरो वरुणस्तथापि
भवान् न शक्तो युधि राघवस्य ॥४१॥

स्थानादपीन्द्रं कुपितः प्रकर्षेद्
यमं समेयाद्वरुणं नियच्छेत् ।
कालस्य कालश्च भवेत् स रामः
संक्षिप्य लोकांश्च सृजेदथान्यान् ॥४२॥

इदं वचो बन्धुजनार्थसिद्धये
मयोच्यमानं यदि नानुपश्यसि ।
ततोऽचिरात् त्यक्ष्यसि जीवितं प्रियं
हतोऽद्य रामेण शरैरजिह्मगैः ॥४३॥

इत्यार्षे रामायणे आरण्यककाण्डे मारीचवाक्यं नाम
एकचत्वारिंशः सर्गः — मारीचवाक्यं नाम
द्वाचत्वारिंशः सर्गः — मारिचवाक्यं
नाम त्रिचत्वारिंशः सर्गः ॥

## XLIV.

मारीचेन तु तद्वाक्यं हितमुक्तो दशाननः ।
मानान्न प्रतिजग्राह्य मर्तुकाम इवौषधं ॥१॥

तं पथ्यहितवक्तारं मारीचं राक्षसेश्वरः ।
अब्रवीत् परुषं वाक्यमयुक्तं कालचोदितः ॥२॥

तत् किमेतदयुक्तार्थं मारीच मयि कथ्यते ।
वाक्यं निष्फलमत्यर्थं बीजमुप्तमिवोषरे ॥३॥

त्वद्वाक्यैर्न मया शक्यं राघवाद्वेतुमाहवे ।
धर्मशीलस्य मूर्खस्य मानुषस्य विशेषतः ॥४॥

यस्त्यक्ता सुहृदो राज्यं मातरं पितरं तथा ।
स्त्रीवाक्यं प्राकृतं श्रुत्वा वनमेकपदे गतः ॥५॥

अवश्यं तु मया तस्य संयुगे खरघातिनः ।
प्राणैस्तुल्या वने सीता कर्तव्या तव संनिधौ ॥६॥

एषा मे निश्चिता बुद्धिर्हृदि मारीच वर्तते ।
न निवर्तयितुं शक्या सेन्द्रैरपि सुरासुरैः ॥७॥

गुणदोषं तथापायमन्यद्वा हेतुमद्वचः ।
उपायमनुपायं वा कार्यस्य च विनिश्चये ॥८॥

सम्यक् पृष्टेन वक्तव्यः सचिवेन कृतात्मना ।
उद्यताञ्जलिना राज्ञा य इच्छेद्भूतिमात्मनः ॥९॥

वाक्यमप्रतिकूलं हि मृदुपूर्वं हितं शुभं ।
उपचारेण संयुक्तं वक्तव्यो वसुधाधिपः ॥१०॥
सोपसर्गं तु यद्वाक्यमायतीहितमुच्यते ।
नाभिनन्दति तद्राजा मानार्हो मानवर्जितं ॥११॥
पञ्चरूपाणि राजानो धारयन्त्यमितौजसः ।
अग्नेरिन्द्रस्य सोमस्य यमस्य धनदस्य च ॥१२॥
प्रसादं चानुकुर्वन्ति तेषां क्रोधं च पार्थिवाः ।
तस्मात् सर्वास्ववस्थासु मान्याः पूज्याश्च पार्थिवाः ॥१३॥
त्वं तु धर्ममविज्ञाय केवलं मोहमाश्रितः ।
अभ्यागतं मां दौरात्म्यात् परुषं बहु भाषसे ॥१४॥
गुणदोषौ न पृच्छामि क्षेमं वापदमात्मनः ।
अस्मिंस्तु तात कृत्ये मे साहाय्यं कर्तुमर्हसि ॥१५॥
सौवर्णस्त्वं मृगो भूत्वा चित्रो रजतविन्दुभिः ।
प्रलोभ्य चैव वैदेहीं यथेष्टं कर्तुमर्हसि ॥१६॥
त्वां हि मायामृगं दृष्ट्वा काञ्चनं जातविस्मया ।
आनयैनमिति क्षिप्रं रामं वक्ष्यति मैथिली ॥१७॥
अपक्रान्ते च काकुत्स्थे लक्ष्मणे च यथासुखं ।
आनयिष्यामि वैदेहीं सुपर्णः पन्नगीमिव ॥१८॥
एवं कृतमिदं कार्यमनपायं भविष्यति ।
गच्छ सौम्य शिवं मार्गं कार्यस्यास्यार्थसिद्धये ॥१९॥

प्राप्य सीतामयुद्धेन वञ्चयित्वा च राघवं ।
लङ्कामभिगमिष्यामि कृतकृत्यस्त्वया सह ॥ २० ॥
एतत् कार्यमवश्यं त्वां कारयिष्ये बलादपि ।
राज्ञां हि प्रतिकूलो यो न जातु सुखमेधते ॥ २१ ॥
तस्मिन् कार्ये च संसिद्धे मारीच भवतेऽप्यहं ।
राज्यस्यार्धं प्रदास्यामि कृतार्थेनान्तरात्मना ॥ २२ ॥
यथा प्राप्स्यामि वैदेहीं तथा तात करिष्यसि ।
तथा व्यवसितं कार्यमेतदस्मद्व्यपाश्रयात् ॥ २३ ॥
बलं चाभिजनं शौर्यमैश्वर्यं वीक्ष्य मामकं ।
कथं रामाद्विहीनार्थाद्भयं पश्यसि दारुणं ॥ २४ ॥
अगतिस्तत्र रामस्य कस्यचिन्मानुषस्य वा ।
आदाय मैथिलीं यत्र गमिष्यामि विहायसा ॥ २५ ॥
त्वं च मायाधरस्तस्मादाश्रमादपनीय तौ ।
मोहयित्वा वने वीरौ क्षिप्रमेव गमिष्यसि ॥ २६ ॥
अपारस्याप्रमेयस्य परं पारमुपाश्रिते ।
किं करिष्यति काकुत्स्थो यतमानः सलक्ष्मणः ॥ २७ ॥
शक्रं च समरे दृष्ट्वा सगणं निर्जितं मया ।
धनाध्यक्षयमौ चापि कस्माद्रामाद्विषीदसि ॥ २८ ॥
विक्रोशन्तीं च रुदतीं वेपमानामितस्ततः ।
सीतां द्रक्ष्यन्ति भूतानि ह्रियमाणां मया बलात् ॥ २९ ॥

एवं कृतेऽस्मिन् कार्ये तु त्वत्सहायेन राक्षस ।
राज्यस्यार्धं प्रदास्यामि मारीच तव सुव्रत ॥ २१ ॥

आपतन्त्तमनाबाधे पथि सिद्धनिषेविते ।
अनुयातुं न पर्याप्तो गरुडो वायुना सह ॥ ३० ॥

आसाद्य तं जीवितसंशयो वा
मृत्युर्ध्रुवस्तेऽद्य मया विरुध्य ।
एवं यथावद्विगणय्य बुद्ध्या
यद्रोचते तत् कुरु यच्च पथ्यं ॥ ३१ ॥

इत्यार्षे रामायणे आरण्यककाण्डे रावणवाक्यं नाम
चतुश्चत्वारिंशः सर्गः ॥

आसाद्य तं जीवितसंशयस्ते
मृत्युर्ध्रुवस्तेऽद्य मया विरोधे ।
एवं ध्रुवं चिन्तय यत् सुनीतं
सञ्चिन्त्य तत्त्वं कुरु यन् मतं मे ॥ २३ ॥

XLV.

आक्षिप्तो रावणेनाथ प्रतिकूलं निशाचरः ।
अब्रवीत् परुषं वाक्यं मारीचो राक्षसेश्वरं ॥१॥
केनायमुपदिष्टस्ते विनाशः पापकर्मणा ।
सपुरस्य सराष्ट्रस्य सामात्यस्य निशाचर ॥२॥
कस्त्वया सुखिना राजन् न हृष्यति न नन्दति ।
केनेदमुपदिष्टं ते मृत्युद्वारमपावृतं ॥३॥
शत्रवस्तव सुव्यक्तं हीनवीर्या निशाचराः ।
इच्छन्ति त्वां विनश्यन्तमुपरुद्धं बलीयसा ॥४॥
तैर्नूनमुपदिष्टं ते विनाशसुखमुत्तमं ।
ये त्वामिच्छन्ति नश्यन्तं स्वकृतेनेह कर्मणा ॥५॥
बध्याः खलु न बध्यन्ते सचिवास्तव रावण ।
ये त्वामुत्पथमारूढं न नियच्छन्ति शाश्वतः ॥६॥
अमात्यैः कामवृत्तो हि राजा विपथमाश्रितः ।
निग्राह्यः सर्वथा सद्भिर्निग्राह्यो न निगृह्यसे ॥७॥
धर्ममर्थं च कामं च यशश्च विपुलं भुवि ।
स्वामिप्रसादात् सचिवाः प्राप्नुवन्ति निशाचर ॥८॥
विपर्ययेन व्यसनं स्वामिनो मन्त्रिणः पुनः ।
वैगुण्याच्च महाराज लभन्ते सह बन्धुभिः ॥९॥

राजमूलो हि धर्मश्च यशश्च जयतां वर ।
तस्मात् सर्वास्ववस्थासु रक्षितव्यो नराधिपः ॥ १० ॥
न चापि प्रतिकूलेन नाविनीतेन रावण ।
राज्यं पालयितुं शक्यं राज्ञा तीक्ष्णेन वा पुनः ॥ ११ ॥
ये तीक्ष्णमनुवर्तन्ते भ्रश्यन्ते सह तेन ते ।
विषमेण रथाः शीर्णा मन्दसारथिना यथा ॥ १२ ॥
अकुर्वन्तोऽपि पापानि शुचयः पापसंश्रयात् ।
परदोषैर्विनश्यन्ति मत्स्या नागह्रदे यथा ॥ १३ ॥
बहवः साधवो लोके युक्ता धर्ममनुव्रताः ।
परेषामपराधेन विनष्टाः सपरिच्छदाः ॥ १४ ॥
स्वामिना प्रतिकूलेन प्रजास्तीक्ष्णेन रावण ।
रक्ष्यमाणा न वर्धन्ते मेषा गोमायुना यथा ॥ १५ ॥
अवश्यं हि विनङ्क्ष्यन्ति सर्वे रावण राक्षसाः ।
येषां त्वं कर्कशो राजा दुर्बुद्धिरजितेन्द्रियः ॥ १६ ॥
तदिदं काकतालीयं वैरमासादितं त्वया ।
अत्र किं शोभनं यस्त्वं सहसैन्यो विनङ्क्ष्यसि ॥ १७ ॥
अनेन कृतकृत्योऽस्मि यन्मां स पुरुषेश्वरः ।
दिव्यास्त्रविन्महेष्वासो मृत्युं समुपदेक्ष्यति ॥ १८ ॥
त्वं तु मोहान्न गृह्णीषे वचनं मम राक्षस ।
कालपाशपरिक्षिप्तो मुमूर्षुरिव भेषजं ॥ १९ ॥

15ab दर्शनादेव रामस्य हतं मामवधारय । 18ab
15cd आत्मानं च हतं विद्धि हृत्वा सीतां सबान्धवं ॥२०॥ 18cd
16ab आनयिष्यसि चेत् सीतामाश्रमात् सहितो मया । 19ab
16cd नैव त्वमसि नैवाहं नैव लङ्का न राक्षसाः ॥२१॥ 19cd

निवार्यमाणस्य मया हितैषिणा
17ab न रोचते ते वचनं दशानन । 20ab
परेतकल्पा हि गतायुषो नरा
17cd हितं न गृह्णन्ति सुहृद्भिरीरितं ॥२२॥ 20cd

इत्यार्षे रामायणे आरण्यककाण्डे मारीचवाक्यं नाम
पञ्चचत्वारिंशः सर्गः ॥

मां निहत्य तु रामोऽसौ न चिरात् त्वां हनिष्यति ।
अनेन कृतकृत्योऽस्मि म्रियेयं द्विषता सह ॥१५॥

## XLVI.

G.E. III, 45.

1ab भूय एव तु मारीचो रावणं राक्षसेश्वरं ।
धर्मार्थसहितं पथ्यमिदं वचनमब्रवीत् ॥ १ ॥
1cd आकेशग्रहणाद्राजन् यतितव्यं मया तव ।
यथा ते न विनाशः स्याद्राघवान्मम चैव हि ॥ २ ॥
2ab पुरस्तादेव रामस्य गुणाः संकीर्तितास्तव ।
2cd भूय एव तु वक्ष्यामि गुणांस्तस्य महात्मनः ॥ ३ ॥
5ab तस्य कर्म निबोध त्वं यत् सुरैरपि दुष्करं ।
सत्यधर्मरुचेर्दारान् न त्वं हिंसितुमर्हसि ॥ ४ ॥
जनस्थानं वशे कृत्वा विराधं बलिनं तथा ।
6ef निहत्य विजनेऽरण्ये रमते लक्ष्मणाग्रजः ॥ ५ ॥
7ab तस्य दारान् तु वीरस्य निकृत्या हरतस्तव ।
7cd विनाशमनुपश्यामि न चिरादात्मनस्तथा ॥ ६ ॥
8ab व्यतिक्रमं कश्चिदन्यं मर्षयेत् स हि राघवः ।
8cd सतां वृत्यमनुस्मृत्य न तु दारप्रधर्षणं ॥ ७ ॥
9ab सर्वस्वहरणादेतत् कर्मातीवजुगुप्सितं ।
9cd स्वान् प्राणान् प्राणिनो यत्र त्यक्त्वा कुर्वन्ति विक्रमं ॥ ८ ॥
10ab स रामो दारहरणान्निकृतस्तेऽन्तको भवेत् ।
10cd तदनागतमेवेदं बोद्धुमर्हसि कारणं ॥ ९ ॥

आत्मनश्च हितं कार्यं तव चैव न संशयः। धर्मं पुरस्कृत्य मया कार्यं हितचिकीर्षया
नं का मात्मतया धर्मं परित्यक्तुमिहार्हसि। सत्यधर्मभृतो दारान् न त्वमानतुमर्हसि ॥ २ ॥
पुरा दृष्टुमिदमस्माभिर्जनस्थानं वशीकृतम् ॥ 5cd ॥ ॥ 3 ॥
विराधश्च सुबाहुश्च दुराधर्षौ महाबलौ। तीक्ष्णदंष्ट्रौ महाकायौ बलिना राक्षसेश्वरौ ॥ 6 ॥

11ab कामवेगादमर्षाच्च प्रकृत्या दृढविक्रमः ।
11cd संतप्यमानस्तेजस्वी समुद्रमपि शोषयेत् ॥ १० ॥
12cd सोऽहमस्मिन् समारम्भे सुनीतस्य कलामपि ।
13ab विमृशन् नाभिपश्यामि रामदाराभिमर्षणे ॥ ११ ॥
13cd यदि वाप्यपनेष्यामि मृगरूपेण राघवं ।
14ab तथाप्यशक्या वैदेही त्वया स्प्रष्टुं निशाचर ॥ १२ ॥
14cd अपनीते मया रामे जीवत्यपि च लक्ष्मणे ।
14ef नैव शक्या त्वया सीता हर्तुं रावण कर्हिचित् ॥ १३ ॥
15ab अथवा रक्षितां ताभ्यां कथञ्चिदुपलप्स्यसे ।
15cd ब्रह्मलोकगतस्यापि न ते स्थानं भविष्यति ॥ १४ ॥
16ab अवाप्य तु वरारोहां सीतां सुरसुतोपमां ।
16cd त्रैलोक्यमपि दुष्प्रापं प्राप्तमित्युपधारय ॥ १५ ॥
17ab अमन्त्रयित्वा सचिवैर्योऽर्थं कृच्छ्रं नृपश्चरेत् ।
17cd न स तिष्ठेच्चिरं राज्ये पुष्करे सलिलं यथा ॥ १६ ॥
18ab सोऽहं विवर्जितं सद्भिरपथ्यं मार्गमञ्जसा ।
18cd नानुवर्तितुमिच्छामि स्मरन् प्रकृतिमात्मनः ॥ १७ ॥
19ab बध्यतो हि ममैकस्य दुःखं तव प्रयोजनं ।
19cd यदि केवलमेतद्धि कार्यस्य निधनं भवेत् ॥ १८ ॥
20ab अनयेनापि मां हत्वा त्वमितो राक्षसान् प्रति ।
20cd प्रतियाहि स्वमावासमगत्वा रामकिल्विषं ॥ १९ ॥

तं भ्रातृभिरनासाद्यमासाद्य न भविष्यसि । 12ab

उच्यमानोऽसकृद्वाक्यं न गृह्णीषे रणप्रिय ।
किं करिष्यामि मन्दात्मा करिष्यामि तव प्रियं ॥ २० ॥
उपस्थितविनाशोऽसि ध्रुवं त्वं राक्षसेश्वर ।
– 22ab कार्यं वा यदिवाकार्यं कृतमेवेच्छति प्रभुः ॥ २१ ॥

इत्यार्षे रामायणे आरण्यककाण्डे मारीचाभ्युपपत्तिर् नाम षट्चत्वारिंशः सर्गः ॥

## XLVII.

Cr.E. III. 46.

1ab मारीचस्य वचः श्रुत्वा करिष्य इति राक्षसः ।
1cd रावणः प्रहसन् वाक्यमिदं मारीचमब्रवीत् ॥ १ ॥
2ab हृतराज्यो हृतधनो मित्रहीनो वने चरः ।
2cd किं करिष्यति काकुत्स्थः शक्रतुल्यबलोऽपि सन् ॥ २ ॥
आत्मनश्च बलज्ञस्त्वं मम चैव न संशयः ।
4ab कथं रामाद्विहीनार्थाद्भयं मारीच गच्छसि ॥ ३ ॥
5ab अगतिर्या तु मर्त्यानां रक्षसां विहिता च सा ।
5cd उत्पतिष्यामि वैदेहीं समादाय विहायसा ॥ ४ ॥
6ab मयि रामः समुद्रस्य परं पारं समाश्रिते ।
6cd किं करिष्यति मूर्खोऽसौ कुर्वन्नपि यथाबलं ॥ ५ ॥
7ab सुराश्चासुरसंघाश्च न मे प्रतिबला युधि ।
7cd त्रयाणामपि लोकानामलमस्मि निवारणे ॥ ६ ॥
8ab मया विक्रम्य शक्रोऽपि मत्तैरावणवाहनः ।
8cd स वज्रपाणिर्निर्भग्नः समस्तैस्त्रिदशैः सह ॥ ७ ॥
9ab भ्राता मे धनदश्चैव यमोऽथ वरुणस्तथा ।
9cd सर्वे च पृथिवीपाला वशे च स्थापिता रणे ॥ ८ ॥
10ab त्रैलोक्यं निर्जितं येन स्थापितं च मया वशे ।
10cd मच्छासनावघुष्टश्च स बिभेति कथं भवान् ॥ ९ ॥

अहृष्यभूतः स वै रामः किं त्वमुद्विजसेऽनघ ।
बलमारभतां संख्ये पुंश्चर्ये च निरीक्षणे ॥ ३ ॥
राज्यभ्रष्टस्य हीनस्य मारीच त्वं बिभेषि किम् ॥ ४cd ॥
हीनसाधनमित्रस्य मानुषस्याल्पमेधसः ॥ ४ef ॥
~~[illegible]~~ ॥ ॥ cd ॥
मनोहरैस्तरुगणैः पुष्पवल्लीविभूषितम् । 12ab

11ab हरः संक्रीडमानश्च उमया सह पर्वते ।
11cd भुजाभ्यामुद्धृतो वीर्यात् तेन तुष्टोऽभवद्भवः ॥ १० ॥
भुञ्जानस्य हि लोकांस्त्रीन् न मे प्रतिबलं क्वचित् ।
दृश्यते दिवि देवेषु यक्षलोकेऽथवा पुनः ॥ ११ ॥
रसातले वा नागेषु का शङ्का मानुषेषु मे ।
12ab गृहीत्वा मैथिलीं चाहं पथानेन विहायसा ॥ १२ ॥
12cd लङ्कामभिगमिष्यामि निमेषेणैव सत्वरः ।
13ab सागरेण परिक्षिप्तां सर्वतः शतयोजनां ॥ १३ ॥
13cd लङ्कां गन्तुं कुतः शक्तिरपि स्वप्नमनोरथैः ।
14ab मायावी त्वं समर्थश्च गतियुक्तोऽथ बुद्धिमान् ॥ १४ ॥
14cd प्रलोभ्य चैव वैदेहीं क्षिप्रं त्वन्तर्हितो भव ।
15ab ममैतद्वचनं कृत्वा मोहयित्वा च राघवौ ॥ १५ ॥
मामेवागच्छ भद्रं ते यास्यावः सहितौ पुरीं ।
सीतामवाप्य तां क्षिप्रं वञ्चयित्वा च राघवौ ॥ १६ ॥
15cd विस्रब्धं विक्रमिष्यावः कृतार्थेनान्तरात्मना ।
16ab एवं स सान्त्वितस्तेन मारीचो रावणेन वै ॥ १७ ॥
16cd विनिश्वसन् मुहुश्चैव दृष्टदुःखश्च राक्षसः ।
19cd प्रतस्थे न चिरादेव दशग्रीवसहायवान् ॥ १८ ॥

इत्यार्षे रामायणे आरण्यककाण्डे मारीचसान्त्वनं
नाम सप्तचत्वारिंशः सर्गः ॥

तमनर्थैः कृष्यमाणमिंद्रियाणां वशानुगम् । अशक्नुवन् वारयितुं मारीचः प्रत्यपद्यत ॥17॥
रामादपि च मर्तव्यं मर्तव्यं रावणादपि । उभाभ्यामपि मर्तव्यं वरं रामो न रावणः ॥18॥
उत्थाय परिदुःखार्तस्त्यक्त्वा जीवितमात्मनः । 19ab

## XLVIII.

आत्मनो मरणं मत्वा संशयं परमं गतः ।
अकामो भयसंविग्नो निःश्वस्य बहुशस्तदा ॥ १ ॥
निश्चितं रावणं दृष्ट्वा मारीचो भयविह्वलः ।
गच्छामीत्यब्रवीद्भीतो दीनो नक्तंचरेश्वरं ॥ २ ॥
प्रहृष्टस्त्वभवत् तेन वचसा राक्षसेश्वरः ।
परिष्वज्य सुसंश्लिष्टमिदं वचनमब्रवीत् ॥ ३ ॥
एतच्छौटीरयुक्तं ते स्वच्छन्दादिव भाषितं ।
इदानीमसि मारीच प्रकृतिं स्वामुपागतः ॥ ४ ॥
आरुह्यतामयं शीघ्रं कामगो रत्नभूषितः ।
मया सह रथो युक्तः पिशाचवदनैः खरैः ॥ ५ ॥
ततो रावणमारीचौ विमानमिव तं रथं ।
आरुह्य ययतुः शीघ्रं तस्मादाश्रममण्डलात् ॥ ६ ॥
पश्यन्तावथ रम्याणि पत्तनानि सरांसि च ।
पर्वतान् सरितश्चैव राष्ट्राणि विविधानि च ॥ ७ ॥
आगत्य दण्डकारण्यं राघवस्याश्रमं ततः ।
ददर्श सहमारीचो रावणो राक्षसेश्वरः ॥ ८ ॥
अवतीर्य रथात् तस्मात् कामगाद्रत्नभूषितात् ।
हस्ते संगृह्य मारीचं रावणो वाक्यमब्रवीत् ॥ ९ ॥

11ab एष रामाश्रमो दूराद्दृश्यते कदलीवृतः । 11ab

12cd क्रियतां तत् सखे शीघ्रं यदर्थं वयमागताः ॥१०॥ 11cd

13ab स रावणवचः श्रुत्वा मारीचस्त्वरयान्वितः । 12ab

तत्क्षणाद्राक्षसं रूपं त्यक्त्वा हैमोऽभवन्मृगः ॥११॥

15ab रौप्यविन्दुशतचित्रः सर्वभूतमनोहरः ।

15cd मसारगल्वर्कनिभैश्चित्रैः पद्मैरलंकृतः ॥१२॥

16ab जातरूपमयैः शृङ्गैश्चतुर्भिर्मणिभूषितैः ।

13cd मृगो भूत्वाश्रमद्वारि रामस्य विचचार ह ॥१३॥ 12cd

17ab ततोऽस्य बुद्धिरभवत् तस्मिन् काले गतायुषः ।

18ab कार्यं वा यदिवाकार्यं कर्तव्यं नात्र संशयः ॥१४॥

18cd भर्तुर्हितार्थिना शीघ्रं स्वर्गं वाप्यभिकाङ्क्षया ।

19ab स्मृत्वा रामस्य वीर्यं च भर्तुराज्ञां च दारुणां ॥१५॥

19cd श्रेयो मे भर्तृवचनं न जीवितमिहात्मनः ।

20ab एतां बुद्धिं समाश्रित्य कृत्वा निश्चयमात्मनः ॥१६॥

20cd मृत्युं चात्मनि संचिन्त्य मारीचः प्रचचार ह ।

21cd समीपे तस्य रामस्य सीतायाश्च मनो हरन् ॥१७॥

अथाससादाभिजनोपपन्नं मारीच उग्रं नरदेवपुत्रं ।

22 रामं प्रतिज्ञानिरतं वनस्थं त्यक्त्वा सुखं धर्मपथे निविष्टं ॥१८॥

तस्याविदूरान्महिषीमनिन्द्यां प्रभामिवास्तोपगतस्य भानोः ।

23 सुन्दस्य पुत्रः स ददर्श सीतां सीता च तं पूर्वतरं ददर्श ॥१९॥

विषाणी तौ अनीयश्च काञ्चनस्याकसप्रभः / रुक्मविन्दुशतैश्चित्रः प्रवालमणिभूषितः ॥14॥
सर्वतश्चार्धचन्द्रैश्च रुक्मताराविचित्रितैः ॥16cd॥ अस्याश्रमपदस्याग्रे परिवर्तितुमोजसा ॥17cd॥
प्रक्रीडितः स विस्रब्धो लाडितः स पदे पदे । 21ab)

L.E. III. 48.

48 = XLIX.

तं तु सीता मृगं दृष्ट्वा वने काञ्चनसुप्रभं ।
हेमराजतचित्राभ्यां पार्श्वाभ्यां समलंकृतं ॥ १ ॥
शृङ्गाभ्यां हेमवर्णाभ्यां कान्तिमद्भ्यां विभूषितं ।
वैदूर्यमणिवर्णाभ्यां कर्णाभ्यां चारुदर्शनं ॥ २ ॥
प्रभया परिराजन्तं सूक्ष्मरोमतनुत्वचं ।
नानारत्नविचित्राङ्गं सा व्यस्मयत भाविनी ॥ ३ ॥
तेन काञ्चनरोम्णा च प्रबालमणिशृङ्गिणा ।
लोहितादित्यजिह्वेन नक्षत्रपथवर्चसा ॥ ४ ॥
सा विस्मितानवद्याङ्गी मृगेण जनकात्मजा ।
उवाच राघवं सीता स्मितपूर्वाभिभाषिणी ॥ ५ ॥
इमं मणिविचित्राङ्गं पश्य हेममयं मृगं ।
आश्चर्यभूतं काकुत्स्थ कामात् स्वयमिहागतं ॥ ६ ॥
ईदृशा दण्डकारण्ये यदि हेममया मृगाः ।
न मिथ्या खलु काकुत्स्थ लोककान्तमिदं वनं ॥ ७ ॥
अस्मिन्नरण्ये दृष्ट्वेमं मृगं हाटकभूषणं ।
स्पृहा मे जायतेऽत्यर्थं तुष्टिश्चाप्यनुवर्तते ॥ ८ ॥
आर्यपुत्र मृगस्यास्य जाम्बूनदनिभां त्वचं ।
स्वशय्यायां परिस्तीर्य सुखमिच्छेयमासितुं ॥ ९ ॥



मणिप्रवरशृङ्गाग्रो असितस्मितमुखाकृतिः ।
किञ्चिदभ्युन्नतग्रीव इन्द्रनीलनिभोदरः ॥ १ ॥
कुन्देन्दुहंससदृशेनोदरेण विराजितः । 2ab

3 — 9 ab = fn 789

18, 25 cd, 26 ab, 20, 27 = fn 789.

also – 23, 24 ab

13ab काममुक्तमिदं रौद्रं स्त्रीणामसदृशं मया ।
13cd वपुषा त्वस्य सत्त्वस्य लोभेनापहृतं मनः ॥ १० ॥
14ab तच्छ्रुत्वा वचनं तस्याः प्रीतायाः पुरुषर्षभः ।
14cd उवाच परिसंहृष्टः सौमित्रिं राघवस्तदा ॥ ११ ॥
15ab पश्य लक्ष्मण वैदेह्या मृगं प्रतिगतां स्पृहां ।
त्वक्प्रधानतया ह्येष मृगोऽद्य न भविष्यति ॥ १२ ॥
अप्रमादेन ते भाव्यं राजपुत्र्यां नृपात्मज ।
यावत् पृषतमेकेन सायकेन निहन्म्यहं ॥ १३ ॥
हत्वैनं चर्म चादाय शीघ्रमेष्यामि लक्ष्मण ।
तावन्न चलितव्यं ते यावन्नाहमिहागतः ॥ १४ ॥
अद्य भ्राजिष्यते सीता चारुणा मृगचर्मणा ।
राङ्कवास्तरणे पूर्वमयोध्यायामिवासने ॥ १५ ॥
शङ्कमानस्तु तं दृष्ट्वा तारामृगसमप्रभं । 14ab
विचार्य बहुधा बुद्ध्या लक्ष्मणो वाक्यमब्रवीत् ॥ १६ ॥ 14cd
यथा नः कथितं पूर्वमृषिभिः पावकोपमैः ।
अयं मायाधरो वीर मारीचो नाम राक्षसः ॥ १७ ॥
चरन्तो मृगयां हृष्टा रथिनो धन्विनो वने ।
अनेन मृगरूपेण राजानो बहवो हताः ॥ १८ ॥
अस्य रूपमिदं दृष्ट्वा नानारत्नविभूषितं ।
अवगन्तुं त्वया युक्तं बुद्ध्या बुद्धिमतां वर ॥ १९ ॥

मृगो हेममयो नैष हेमकस्य मृगस्य च ।
कुतो लोके नरव्याघ्र संयोगः साधु चिन्तय ॥ २० ॥
प्रबालमणिशृङ्गोऽयं न मृगो रत्नलोचनः ।
एतं मायामृगं मन्ये राक्षसं मृगरूपिणं ॥ २१ ॥
एवं ब्रुवाणं काकुत्स्थं प्रतिवार्य शुचिस्मिता ।
उवाच सीता संहृष्टा छद्मना हृतचेतना ॥ २२ ॥
आर्यपुत्राभिरामोऽसौ मृगो हरति मे मनः ।
आनयैनं महाबाहो क्रीडार्थं नो भविष्यति ॥ २३ ॥
इहाश्रमपदेऽस्माकं बहवः पुण्यदर्शनाः ।
मृगाश्चरन्ति सहिताश्चमराः सृमरास्तथा ॥ २४ ॥
न चास्य सदृशो राम दृष्टपूर्वो मृगो मया ।
तेजसा क्षमया दीप्त्या यथायं मृगसत्तमः ॥ २५ ॥
यदि ग्रहणमभ्येति जीवन्नेव मृगस्तव ।
आश्चर्यभूतं भवति विस्मयं जनयिष्यति ॥ २६ ॥
समाप्तवनवासानां राज्यस्थानां च नः पुनः ।
अन्तःपुरेऽपि भूषार्थो मृग एष भविष्यति ॥ २७ ॥
जीवन् न यदि तेऽभ्येति ग्रहणं मृगसत्तमः ।
अजिनं नरशार्दूल रुचिरं तु भविष्यति ॥ २८ ॥
निहतस्यास्य सत्त्वस्य जाम्बूनदसमत्वचि ।
शष्पवृष्यां विनीतायामिच्छाम्यहमुपासितुं ॥ २९ ॥

इति सीतावचः श्रुत्वा दृष्ट्वा च मृगमद्भुतं ।
मोहितो राघवः श्रीमानिदं लक्ष्मणमब्रवीत् ॥३०॥
मृगोऽयमद्य सौमित्रे यदि मायामयो भवेत् ।
सर्वथैनं बधिष्यामि लोभनीयो हि मे दृढं ॥३१॥
न वने नन्दने तस्मिन् नापि चैत्ररथे वने ।
कुतः पृथिव्यां सौमित्रे योऽस्य रूपसमो भवेत् ॥३२॥
अनुलोमाः सुलोमाश्च रुचिरा रोमराजयः ।
शोभन्तेऽस्याश्रिताः काये विस्रब्धं चरतो वने ॥३३॥
पश्यास्य जृम्भमाणस्य दीप्तवह्निशिखोपमां ।
जिह्वां मुखान्निष्पतन्तीमुल्कां प्रज्वलितामिव ॥३४॥
तप्तहेमनिभो ह्येष पादैर्विद्रुमसंनिभैः ।
पार्श्वयोश्चार्धचन्द्राभ्यां रूप्यताराविचित्रितः ॥३५॥
अतिस्निग्धवपुर्ह्येष शङ्खमुक्तानिभाननः ।
कस्य नामातिरूपोऽयं न मनो लोभयेन्मृगः ॥३६॥
अस्य रूपमिदं दृष्ट्वा जाम्बूनदसमप्रभं ।
नानारत्नविचित्राङ्गमतीव च मनोहरं ॥३७॥
पश्यन् रत्नाकुलं चित्रं नरः को नानुलोभयेत् ।
मनो हरति मेऽत्यर्थं दर्शनीयतमो मृगः ॥३८॥
घ्नन्ति लक्ष्मण राजानो मृगयायां वनौकसः ।
मांसहेतोरभिरता विहारार्थे च धन्विनः ॥३९॥

पृथिव्यां यानि रत्नानि विचरन्ति महावने ।
धातवो विविधाश्चैव मणिरत्नसुवर्णजाः ॥४०॥
त्वक्सारमखिलं सर्वं धनं बीजविवर्धनं ।
मनसा चिन्तितं सर्वं यथा शक्रस्य लक्ष्मण ॥४१॥
तथेदमुपपन्नं मे मृगरूपस्य धर्षणं ।
राजार्हाणि च रत्नानि रत्नभाजो वयं ध्रुवं ॥४२॥
एतस्य मृगरूपस्य परार्ध्ये काञ्चनाजिने ।
उपवेक्ष्यति वैदेही मया सह सुमध्यमा ॥४३॥
न पत्रोर्णं न कौशेयं न प्रावेण्यं न चाविकं ।
भवेदेतस्य सदृशं संस्पर्श इति मे मतिः ॥४४॥
श्रीमान् वनमृगश्चायं दिव्यश्चान्यो नभश्चरः ।
उभावेतौ मृगौ दिव्यौ तारामृगमहीमृगौ ॥४५॥
यदि चायं तथा यन्मां भवेद्वदसि लक्ष्मण ।
मृगयामागता येन धन्विनो निहता वने ॥४६॥
निहता राजपुत्राश्च राजानो बलिनस्तथा ।
वने मायाविना येन चरता मृगरूपिणा ॥४७॥
यस्माच्च बहवोऽनेन पार्थिवा मृगयां गताः ।
निहताः परमेष्वासास्तस्माद्वध्यो भवेन्मम ॥४८॥
वातापिर्दीक्षितान् सर्वान् द्विजान् हन्ति स्म लक्ष्मण ।
उदरस्य समुत्थाने स्वगर्भोऽश्वतरीमिव ॥४९॥

स कदाचिच्चिरात् कालादाससाद महामुनिं ।
अगस्त्यं तेजसा दीप्तं भक्षितश्च महात्मना ॥५०॥
समुत्थाने च तद्रूपं कर्तुकामं समुत्थितं ।
सस्मितं भगवान् वाक्यमिदं वातापिमब्रवीत् ॥५१॥
त्वयाभिपद्य वातापे ब्राह्मणस्योदरं यथा ।
भवत्यवज्ञा दुष्टात्मंस्तस्माज्जीर्णो भवेह मे ॥५२॥
मद्विधं योऽवमन्येत धर्मनित्यं जितेन्द्रियं ।
एवमासादयेन्मृत्युं यथा त्वं प्राप्य मामिह ॥५३॥
एषोऽपि मामनुप्राप्य मन्यमानो मृगोत्तमः ।
सौमित्रे लप्स्यते मृत्युमगस्त्यादिव राक्षसः ॥५४॥
अहमेनं बधिष्यामि मृगराजं न संशयः ।
इहाप्रमत्तस्त्वं वीर परिपालय मैथिलीं ॥५५॥
तावन्न चलितव्यं ते यावन्नाहमिहागतः ।
राक्षसा दुष्टभावा हि यतन्ते विक्रियां वने ॥५६॥
एवं समादिश्य रघुप्रवीरः सुलक्षणं लक्ष्मणमुग्रतेजाः ।
पुनः पुनश्चैव समादिदेश यतस्त्वया वीर न खेदितव्यं ॥५७॥

इत्यार्षे रामायणे आरण्यककाण्डे मारीचमृगप्रवेशो
नाम अष्टचत्वारिंशः सर्गः — लक्ष्मणसमादेशो
नाम नवचत्वारिंशः सर्गः ॥

L.

तथा तु तं समादिश्य लक्ष्मणं रघुनन्दनः ।
मतिं कृत्वा बधे तस्य प्रदुद्राव यतो मृगः ॥१॥
गृहीत्वा विनतं चैव चापं हाटकभूषितं ।
बद्ध्वा महेषुधी चापि तथासिं हेमवत्सरुं ॥२॥
आबध्य कवचं चैव प्रदुद्राव वने मृगं ।
मनोमारुतवेगश्च मारीचः प्राद्रवद्वने ॥३॥
नातिदूरेण तं रामो गच्छन्तमनुगच्छति ।
स च रामभयोद्विग्नो मारीचो दण्डके वने ॥४॥
बभूवान्तर्हितस्तत्र क्षणात् पुनरदृश्यत ।
एषोऽयमयमेतीति वेगवान् राघवो ययौ ॥५॥
मुहूर्तादेव ददृशे मुहूर्तान्न प्रकाशते ।
अतिवृत्त इषुत्रासाल्लोभयन् स रघूत्तमं ॥६॥
क्वचिद्दृष्टः क्वचिन्नष्टः क्वचित् त्रासाच्च विद्रुतः ।
क्वचित् स्थितः क्वचिल्लीनः क्वचिद्वेगेन निःसृतः ॥७॥
भयेन महताच्छन्नो मारीचो याति कानने ।
तमपश्यत् ततो रामस्तत्र यान्तमिवाग्रतः ॥८॥
मायामृगं प्रद्रवन्तं धनुरायम्य क्रोधनः ।
तमापतन्तं संप्रेक्ष्य राघवं धन्विनं मृगः ॥९॥

ततस्त्रिविततं चापि तप्तहाटकभूषितं । 1cd
आक्षिप्य च कलापे द्वे जगामोदग्रविक्रमः । असिं बबन्ध धन्वी स प्रदुद्राव तदनुसरन् ॥२॥
स तं संन्हष्ट रूपेण द्योतमानमिवाग्रतः (3ab)
3cd, 3ef, 4ab/6cd/8ab = fn 796, 803, 810

अन्तर्ह्हितो मुहूर्भूत्वा पुनः संदर्शयत्यपि ।
ददृशे मुहुरासन्ने मुहुर्दूराददृश्यत ॥१०॥
दर्शनादर्शनेनैवमपाकर्षत् स राघवं । 4ab
अवेल्याविल्य धावन्तं धनुष्पाणिर्महावने ॥११॥ 5ab
दृश्यमानमदृश्यं च वनोद्देशेषु केषुचित् । 6cd
5cd छिन्नाभ्रैरिव संवीतं शरदीवेन्दुमण्डलं ॥१२॥
इतो गतोऽसौ दृष्टश्च पुनरन्तर्हितो मृगः ।
इति तांस्तान् वनोद्देशान् काकुत्स्थः पर्यधावत ॥१३॥
राघवस्तु ततः क्रुद्धो मुहूर्तं तेन मोहितः । 8cd
अतिष्ठत् स वने तस्मिंश्छायामाश्रित्य शाद्वले ॥१४॥ 9ab
मृगैः परिवृतश्चासावदूरात् प्रत्यदृश्यत । 9cd
अवस्थितैः समीपस्थैस्त्रासादुत्फुल्ललोचनैः ॥१५॥
दृष्ट्वा रामो महातेजास्तं हन्तुं कृतनिश्चयः । 10ab
विकृष्य बलवच्चापं संधाय च शरोत्तमं ॥१६॥
श्रवणान्तमुपानीय व्यवच्छिन्नेन मुष्टिना ।
तमेव मृगमुद्दिश्य तं शरं राघवः शितं ॥१७॥ 11ab
मुमोच ज्वलितं दीप्तमस्त्रं ब्रह्मविनिर्मितं । 11cd
9cd स मारीचस्य हृदयं बिभेदारिनिर्बर्हणः ॥१८॥ 12cd
10ab तेन मर्माणि निर्विद्धः शरेणाप्रतिमेन ह । 15ab
11ab तालमात्रमथोत्पत्य न्यपतत् स शरातुरः ॥१९॥ 13ab

तथा सन्दर्शनेनैव चोपाकर्षत राघवम् । 6ab
स गत्वा दूरमध्वानं राघवस्त्वमगभीप्सया । 7ab
मुमोच ज्वलितं दीप्तमस्त्रं ब्रह्मविनिर्मितम् ॥ 7cd ॥
तमेव मृगमुद्दिश्य व्यवच्छिन्नेन मुष्टिना ॥ 8cd ॥
स रक्षो मृगरूपं तं विनिर्भिद्य वरः शरः । 9ab

ततो विचित्रकेयूरः सर्वाभरणभूषितः । 16ab

हेममाली महादंष्ट्रो राक्षसोऽभूच्छराहतः ॥ २० ॥

व्यनदद्भैरवं नादं धरण्यां शरपीडितः । 13cd

म्रियमाणस्तु मारीचश्चिन्तयन् स्वामिनः प्रियं ॥ २१ ॥ 13ef

12cd रामस्य सदृशं व्यक्तं स्वरमालम्ब्य पापकृत् ।

10cd हा लक्ष्मणेति चुक्रोश त्रायस्वेति महावने ॥ २२ ॥

12ab अन्तकालेऽपि संप्राप्ते तस्य बुद्धिरभूदियं ।

13cd स्वरमेतं यदि श्रुत्वा लक्ष्मणं प्रेरयेदिह ॥ २३ ॥

14ab सीता शून्येन मनसा भर्तृस्निहसमुत्सुका ।

14cd ततो लक्ष्मणहीनां तां रावणो वै हरेदिति ॥ २४ ॥

15ab एतत् संचिन्त्य मनसा तं चकार स्वरं तदा ।

15cd रावणस्य प्रियं कुर्वन्नन्तकाले निशाचरः ॥ २५ ॥

18ab मृगरूपं च तत् त्यक्त्वा राक्षसं रूपमास्थितः । 15cd

18cd स चक्रे सुमहत् कायं मारीचो जीवितं त्यजन् ॥ २६ ॥ 15ef

19ab तं दृष्ट्वा पतितं भूमौ राक्षसं भीमदर्शनं । 17ab

19cd जगाम मनसा सीतां रामो हृष्टतनूरुहः ॥ २७ ॥ 17cd

स तस्य रौद्रस्य हतस्य रूपं तद्राक्षसं घोरमवेक्षमाणः ।

रामः प्रतस्थे सुविषण्णचेतास्तेनैव तेनैव पथा निवृत्तः ॥ २८ ॥

इत्यार्षे रामायणे आरण्यककाण्डे मारीचवधो

नाम पञ्चाशः सर्गः ॥



तत्र विचित्रकेयूरो दिव्याभरणभूषितः।

हेममालीमहादंष्ट्रो राक्षसोऽभूच्छराहतः ॥ 16 ॥

तत्र रामे भयं तीव्रमाविवेश विषादजम् । राक्षसं मृगरूपं तं हत्वा श्रुत्वा च तं स्वरम् ॥20॥

न जघान मृगानन्यान् मांसकृते न राघवः। गमने त्वरितो ऽभूत् आश्रमाभिमुखः स्थितः ॥21॥

LI.

आर्तस्वरं तु विज्ञाय तं भर्तुः सदृशं वने ।
उवाच लक्ष्मणं सीता गच्छ जानीहि राघवं ॥ १ ॥
न हि मे जीवितं स्थाने हृदयं चावतिष्ठते ।
क्रोशतः परमार्तस्य श्रुतः शब्दो मया भृशं ॥ २ ॥
सहायं भ्रातरं ज्येष्ठं सङ्कपन्थानमागतं ।
क्रन्दन्तमेवं सौमित्रे परित्रातुं त्वमर्हसि ॥ ३ ॥
तं क्षिप्रमभिधावस्व भ्रातरं शरणैषिणं ।
रक्षसां वशमापन्नं सिंहानामिव गोपतिं ॥ ४ ॥
तस्यास्तद्वचनं श्रुत्वा स्त्रीस्वभावप्रदूषितं ।
उवाच लक्ष्मणः सीतां त्रासादुत्फुल्ललोचनां ॥ ५ ॥
न मे शक्यस्त्रिभिर्लोकैः सेन्द्रैरपि सुरासुरैः ।
भ्राता धर्षयितुं वाढमित्युवाच स जानकीं ॥ ६ ॥
कनिष्ठायामप्यङ्गुल्यां भ्रातुर्मम स राक्षसः ।
दुःखं कर्तुमपर्याप्तो देवि कस्माद्विषीदसि ॥ ७ ॥
न जगाम तयोक्तोऽपि भ्रातुराज्ञाय शासनं ।
तमुवाच ततः सीता कुपिता जनकात्मजा ॥ ८ ॥
अमित्रो मित्ररूपेण भ्रातुस्त्वमसि लक्ष्मण ।
यस्त्वमस्यामवस्थायां भ्रातरं नाभिपद्यसे ॥ ९ ॥

7ab व्यसनं ते प्रियं मन्ये स्नेहो भ्रातरि नास्ति ते । 7ab
7cd येन तिष्ठसि विस्रब्धस्तमपश्यन् महाद्युतिं ॥१०॥
इच्छसि त्वं विनश्यन्तं रामं लक्ष्मण मत्कृते ।
न मे शुश्रूषसे वाक्यं यस्मादभिहितं मया ॥११॥
वर्तयेयं न रामेण मुहूर्तमपि वर्जिता ।
कुरु मे वचनं वीर भ्रातरं पाहि मा चिरं ॥१२॥
8ab किं हि संशयमापन्ने तस्मिन्निह मया तव ।
8cd मुहूर्तमप्यजीवन्त्या यन्नान्वेष्यसि राघवं ॥१३॥
9ab इति ब्रुवाणां वैदेहीं बाष्पशोकपरिप्लुतां । 9ab
9cd अब्रवील्लक्ष्मणस्त्रस्तां सीतां मृगबधूमिव ॥१४॥ 9cd
10ab देवि देवमनुष्येषु गन्धर्वपतगेषु च । 10ab
10cd राक्षसेषु पिशाचेषु किन्नरेषूरगेषु च ॥१५॥ 10cd
11ab दानवेषु च घोरेषु विद्यते न च शोभने । 11ab
11cd यो रामं प्रतियुध्येत महेन्द्रमिव मानुषः ॥१६॥ 11cd
12ab अबध्यः समरे रामो नैवं त्वं वक्तुमर्हसि । 12ab
12cd नोत्सहे त्वां विरहितुं शून्येऽहं राघवं विना ॥१७॥ 12cd
16ab न्यासभूतासि वैदेहि न्यस्ता मयि महात्मना ।
16cd रामेण सत्यसंधेन न त्वां त्यक्तुमिहोत्सहे ॥१८॥
17ab कृतवैराश्च कल्याणि वयमेतैर्निशाचरैः ।
17cd सुक्रुद्धैः सह भद्रं ते जनस्थानबधं प्रति ॥१९॥

अनिवार्यं बलं तस्य बलैर्बलवतामपि ।
त्रिभिर्लोकैः समुद्युक्तैः सामरैरपि सेश्वरैः ॥ 13 ॥
नैव व्यक्तं स्वरं मन्ये दर्शनं किञ्चिदेव तु ।
गन्धर्वनगरप्रख्या मायैषा रक्षसा कृता ॥ 15 ॥

18ab रक्षांसि विविधा वाचो विसृजन्ति महावने । 18ab
18cd हिंसाविहारे वैदेहि न चिन्तयितुमर्हसि ॥ २० ॥ 18cd
19ab अप्रमेयं हि तत्तेजः शक्यं तुलयितुं न वै ।
19cd अविचार्यं बलं तस्य नैवं त्वं वक्तुमर्हसि ॥ २१ ॥
हृदयं निर्वृतं तेऽस्तु संतापस्त्यज्यतामयं । 14ab
आगमिष्यति भर्ता ते शीघ्रं हत्वा मृगोत्तमं ॥ २२ ॥ 14cd
20ab न तस्यायं स्वरो देवि विस्वरो यस्त्वया श्रुतः ।
20cd कष्टायामप्यवस्थायां न रामो गर्हितं वदेत् ॥ २३ ॥
22ab एवमुक्ता तु वैदेही क्रुद्धा संरक्तलोचना । 19ab
22cd अब्रवीत् परुषं वाक्यं लक्ष्मणं पथ्यवादिनं ॥ २४ ॥ 19cd
हानार्य करुणारम्भ नृशंस कुलपांसन । 20ab
अहं तव प्रिया मन्ये येनैवं त्वं प्रभाषसे ॥ २५ ॥ 20cd
23ab नैतच्चित्रं सपत्नेषु पापं लक्ष्मण यद्भवेत् । 21ab
23cd त्वद्विधेषु मनुष्येषु नित्यं प्रच्छन्नचारिषु ॥ २६ ॥ 21cd
24ab संदुष्टस्त्वं वने नूनं राममेकोऽनुधावसि । 22ab
24cd मम हेतोः प्रतिच्छन्नः प्रयुक्तो भरतेन वा ॥ २७ ॥ 22cd
25ab कथमिन्दीवरश्यामं रामं कमललोचनं । 23ab
25cd उपसंगृह्य भर्तारं कामयेयं पृथग्जनं ॥ २८ ॥ 23cd
अपि चाहं प्रवेक्ष्यामि प्रदीप्तं हव्यवाहनं । 24ab
न चापि राघवादन्यं पादेनापि नरं स्पृशे ॥ २९ ॥ 24cd

लक्ष्मणश्चिन्तयामास सीतां प्रति महाबलः ।
कर्तव्यं किं समुत्सृज्य नेति बुद्ध्या विचारयन् ॥ २५ ॥
अश्रुपूर्णमुखी सीता तथोक्त्वा पुनरब्रवीत् ।
अहं तावत् प्रपश्यामि हतो रामो महाबलवान् ॥ 26 ॥

इति लक्ष्मणमाक्रुश्य सीता सुरसुतोपमा ।
पाणिभ्यां रुदती तत्र उरः परिपिपेष सा ॥३०॥
27ab इत्युक्तः परुषं वाक्यं सीतया लोमहर्षणं । 25ab
27cd अब्रवील्लक्ष्मणः सीतां प्राञ्जलिश्चलितेन्द्रियः ॥३१॥ 25cd
28ab उत्तरं नोत्सहे वक्तुं दैवतं भवती मम । 26ab
28cd वाक्यमप्रतिरूपं हि न चित्रं स्त्रीषु मैथिलि ॥३२॥ 26cd
29ab स्वभावश्चैव नारीणामेष लोकेषु दृश्यते । 27ab
29cd विमुक्तधर्माश्चपला भ्रातृभेदकराः स्त्रियः ॥३३॥ 27cd
30ab उपशृण्वन्तु मे सर्वे साक्षीभूता वने चराः । 28ab
30cd न्यायवादी यथान्यायमुक्तोऽहं परुषं त्वया ॥३४॥ 28cd
31ab धिक् त्वामस्तु विनश्य त्वं यन्मामेवं विशङ्कसे । 29ab
31cd स्त्रीस्वभावेन दुष्टेन गुरुवाक्ये व्यवस्थितं ॥३५॥ 29cd
उक्त्वेति परुषं वाक्यं पश्चात् तापसमन्वितः ।
सामपूर्वं पुनः सीतां वक्तुमारब्धवानिदं ॥३६॥
32ab गच्छामि यत्र काकुत्स्थः स्वस्ति तेऽस्तु वरानने । 30ab
32cd रक्षन्तु त्वां विशालाक्षि समग्रा वनदेवताः ॥३७॥ 30cd
33ab निमित्तानि हि घोराणि यानि प्रादुर्भवन्ति मे । 31ab
33cd अपि त्वां सह रामेण पश्येयं पुनरागतः ॥३८॥ 31cd
34ab लक्ष्मणेनैवमुक्ता सा वैदेही जनकात्मजा । 32ab
34cd प्रत्युवाच ततो वाक्यं सीता साश्रुपरिप्लुता ॥३९॥ 32cd

35ab गोदावरीं प्रवेक्ष्यामि हीना रामेण लक्ष्मण । 33ab
35cd उद्बन्धिष्येऽथवा त्यक्ष्ये विषमे देहमात्मनः ॥४०॥ 33cd
36ab अपि वाहं भृशं दीप्तं प्रविशेयं हुताशनं । 34ab
36cd स्पृशेयं राघवादन्यं पदापि पुरुषं न हि ॥४१॥ 34cd
इति लक्ष्मणमुक्त्वा सा सीता दुःखसमन्विता । 35ab
भृशं रुदन्ती पाणिभ्यामुरः परिपिपेष सा ॥४२॥ 35cd
तामार्तरूपां रुदतीं तदानीं
37ab सौमित्रिरालोक्य विशालनेत्रां । 36ab
आश्वासयामास न चैव भर्तुस्
37cd तं भ्रातरं किंचिदुवाच सीता ॥४३॥ 36cd
ततस्तु सीतामभिवाद्य लक्ष्मणः
कृताञ्जलिः किंचिदभिप्रणम्य च । 37ab
अवेक्षमाणश्च पुनः स मैथिलीं
जगाम रामस्य समीपमात्मवान् ॥४४॥ 37cd

इत्यार्षे रामायणे आरण्यककाण्डे लक्ष्मणप्रयाणं
नाम एकपञ्चाशः सर्गः ॥

[1] रामेण हि विनाभूता न त्वहं स्थातुमुत्सहे । 36ab

## LII. ~44

L.E. III, 51

1ab तथा परुषमुक्तस्तु कुपितो राघवानुजः ।
जगाम यत्र रामोऽसौ सीतां त्यक्त्वा महावने ॥ १ ॥
मारीचेनापकृष्टे तु राघवे सहलक्ष्मणे ।
कृतकृत्यमिवात्मानं रावणः सममन्यत ॥ २ ॥
लक्ष्मणश्चापि धर्मात्मा भयेन महताकुलः ।
1cd अकाम इव विप्रेक्ष्य प्रतस्थे न चिरादिव ॥ ३ ॥
2ab एतदन्तरमासाद्य दशग्रीवः प्रतापवान् ।
2cd अभिचक्राम वैदेहीं परिव्राट्छद्मना तदा ॥ ४ ॥
3ab तामपश्यत् ततो बालां भ्रातृभ्यां रहितां वने । 4ab
3cd रहितामर्कचन्द्राभ्यां संध्यामिव महत् तमः ॥ ५ ॥ 4cd
स दृष्ट्वाप्रतिरूपां तां रहिते राक्षसेश्वरः ।
ततस्तत्र दशग्रीवश्चिन्तयामास दुर्मतिः ॥ ६ ॥
इयं विरहिता यावद्भर्त्रा सौमित्रिणापि च ।
कालो मम ततस्तावदभ्युपेतुं वराननां ॥ ७ ॥
चिन्तयित्वा दशग्रीवः क्षिप्रमन्तरमात्मनः । 8ab
उपतस्थे तदा सीतां भिक्षुरूपेण रावणः ॥ ८ ॥ 8cd
सूक्ष्मकाषायसंवीतः शिखी छत्री सपादुकः ।
सव्यांसासक्तभारश्च सत्रिदण्डकमण्डलुः ॥ ९ ॥

विहीनां रामचन्द्रेण पतितां कमलेक्षणाम् ।
रोहिणीं शशिना हीनां दिवि घोर इव ग्रहः ॥ ५ ॥

तमुग्रतेजःकर्माणं जनस्थानरुहद्रुमाः ।
तथैव विविधा वल्ल्यः सत्त्वानि सह पक्षिभिः ॥ १० ॥
समीक्ष्य न व्यकम्पन्त प्रववौ न च मारुतः ।
शीघ्रवेगागतं दृष्ट्वा विष्ठितं राक्षसेश्वरं ॥ ११ ॥
स्तिमितं गन्तुमारेभे तदा गोदावरी नदी ।
जनस्थानसमीपे च पञ्चवट्यां तपोवने ॥ १२ ॥
पक्षिणो ये मृगाश्चैव भयात् तस्य प्रदुद्रुवुः ।
स रामस्यान्तरप्रेक्षी रावणस्तदनन्तरं ॥ १३ ॥
आससाद तदा सीतां भिक्षुरूपेण संवृतः ।
अभव्यो भव्यरूपां तां भर्तारमनुशोचतीं ॥ १४ ॥
अभ्यवर्तत वैदेहीं चित्रामिव शनैश्चरः ।
स पापस्तेन रूपेण तृणैः कूप इवावृतः ॥ १५ ॥
अतिष्ठत् प्रेक्ष्य रामस्य पत्नीं सीतां तु रावणः ।
स तां रुचिरदन्तौष्ठीं पूर्णचन्द्रनिभाननां ॥ १६ ॥
आसीनां पर्णशालायां वाष्पशोकपरिप्लुतां ।
रामलक्ष्मणहीनां तां चिन्ताशोकपरायणां ॥ १७ ॥
तमसा महताच्छन्नामचन्द्रां रजनीमिव ।
ददर्श पश्यद्वैदेह्या गात्रं चक्षुर्मनोहरं ॥ १८ ॥
न शशाक ततो हर्तुं दृशं मग्नामिवात्र सः ।
फुल्लपद्मविशालाक्षीं पीतकौषेयवासिनीं ॥ १९ ॥

अभ्यागच्छत वैदेहीं दुष्टचेता निशाचरः ।
तां मन्मथशराविष्टो ब्रह्मघोषमुदीरयन् ॥ २० ॥
अब्रवीत् प्रसृतं वाक्यं रहिते राक्षसेश्वरः ।
विभ्राजमानां वपुषा काञ्चनीं प्रतिमामिव ॥ २१ ॥
अनुत्तमां त्रिलोकेषु पद्महीनामिव श्रियं ।
विभ्राजमानां वपुषा रावणः प्रशशंस ह ॥ २२ ॥
चारुस्मिते चारुमुखि चारुनेत्रे विलासिनि ।
अतीव भ्राजसे भीरु वनराजीव पुष्पिता ॥ २३ ॥
मणिप्रवेकाभरणौ रुचिरौ ते पयोधरौ ।
मुक्ताहेमचितौ पीनौ रत्नजुष्टौ मनोहरौ ॥ २४ ॥
हृद्यावुपचितौ वृत्तौ संहतौ ते विराजतः ।
का त्वं काञ्चनगर्भाभे पीतकौषेयवासिनि ॥ २५ ॥
मालां पद्मोत्पलयुतां बिभ्रती प्रियदर्शना ।
ह्रीः कीर्त्तिः श्रीः शुभा लक्ष्मीरासां का त्वं वरानने ॥ २६ ॥
भूतिर्वा त्वं वरारोहे रतिर्वा स्वैरचारिणी ।
समाः शिखरिणः स्निग्धाः पाण्डरा दशनास्तव ॥ २७ ॥
सुसंस्थिते च काले च भ्रुवौ नयनभूषणे ।
सुप्रभौ सुकुमारौ च अनुरूपौ सुसंस्थितौ ॥ २८ ॥
सुपीनौ दर्शनीयौ च संहतौ च वरानने ।
अनुरूपौ च वक्त्रस्य कपोलौ तव सुन्दरि ॥ २९ ॥

तप्तकाञ्चनसंवीतौ स्वभावात् संस्कृतौ शुभौ ।
श्रवणौ ते विराजेते प्रमाणेन समुन्नतौ ॥३०॥
करौ च तव सुश्रोणि पद्मपत्रारुणौ शुभौ ।
अनुरूपं च ते मध्यं दुर्बलं चारुहासिनि ॥३१॥
रोम राज्या विभक्तं च द्विधेव तव सुन्दरि ।
18ab विशालं जघनं पीनमूरू गजकरोपमौ ॥३२॥ 18ab
सुकुमाराङ्गुली दिव्यौ सुकुमारतलौ शुभौ ।
चरणौ संहतावेतौ परस्परविभूषणौ ॥३३॥
संचाररम्यौ च शुभौ पद्मकोषसमप्रभौ ।
17cd विशाले विमले नेत्रे रक्तान्ते नीलतारके ॥३४॥
18cd करसंवृतमध्यासि सुकेशी संहतस्तनी । 21ab
19ab नैव देवी न गन्धर्वी न यक्षी न च किन्नरी ॥३५॥ 21cd
19cd एवंरूपा मया नारी दृष्टपूर्वा महीतले । 21ef
20ab रूपमग्र्यं च ते लोके सौकुमार्यं च शाश्वतं ॥३६॥ 22ab
20cd इह वासश्च कान्तारे चित्तामुत्पादयन्ति मे । 22cd
21ab संप्रतीक्ष्य च भद्रं ते न त्वं वस्तुमिहार्हसि ॥३७॥ 23ab
21cd राक्षसानामयं वासो घोराणां कामचारिणां । 23cd
22ab प्रासादाग्र्याणि रम्याणि नगरोपवनानि च ॥३८॥ 24ab
22cd सपद्मानि च तोयानि देवोद्यानानि चैव हि । 24cd
नन्दनादीनि दिव्यानि युक्तान्यासेवितुं त्वया ॥३९॥

वरं माल्यं वरं रत्नं वरं वस्त्रं च शोभने ।
भर्तारं च वरं मन्ये ते युक्तमसितेक्षणे ॥ ४० ॥
भूमिशय्या परिक्लिष्टा वने मूलफलाशना ।
वस्तुं नार्हसि कल्याणि सुखार्हा सुखवर्जिता ॥ ४१ ॥
का त्वं भवसि रुद्राणां मरुतां वा शुचिस्मिते ।
वसूनां वा वरारोहे देवता प्रतिभासि मे ॥ ४२ ॥
एतासां देवतानां तु का त्वं भवसि शोभने ।
गन्धर्वी वा महाभागे अप्सरा वा सुमध्यमे ॥ ४३ ॥
नेहागच्छन्ति गन्धर्वा न देवा न च मानुषाः ।
राक्षसानामयं वासः कथं नु त्वमिहागता ॥ ४४ ॥
इमे शालामृगाः सिंहा व्याघ्रा द्वीपिमृगास्तथा ।
ऋक्षास्तरक्षवः कोकाः कथं तेभ्यो न ते भयं ॥ ४५ ॥
मत्तानां गिरिकल्पानां कुञ्जराणां तरस्विनां ।
कथमेका महारण्ये न बिभेषि शुचिस्मिते ॥ ४६ ॥
कासि कस्य कुतश्च त्वं किंनिमित्तं च दण्डके ।
एकाकिनी प्रविष्टासि घोरे राक्षससेविते ॥ ४७ ॥
इत्यसौ रावणेनोक्ता दुष्टेन जनकात्मजा ।
अविश्वासभयात् तत्र शङ्किता पर्यसर्पत ॥ ४८ ॥
विश्वासं पुनरागत्य ब्राह्मणेति सुमध्यमा ।
प्रत्युवाचानवद्याङ्गी रावणं भिक्षुरूपिणं ॥ ४९ ॥

29ab द्विजातिदर्शनं साथ दृष्ट्वा राक्षसमागतं । 31ab
29cd सर्वैरतिथिसत्कारैः पूजयामास मैथिलीव ॥५०॥ 31cd
30ab उपनीयोदकं पूर्वं वन्येनोपनिमन्त्र्य च । 32ab
30cd अब्रवीत् सिद्धमित्येवं तं पापं सौम्यदर्शनं ॥५१॥ 32cd

निमन्त्रयन्तीं परिपूर्णभाषिणीं
33ab नरेन्द्रपुत्रीं प्रसमीक्ष्य रावणः । 35ab
प्रसह्य तस्या हरणे दृढव्रतः
33cd सकाममात्मानमसावमन्यत ॥५२॥ 35cd
स तां वरोरुं मृगयागतं पतिं
34ab प्रतीक्षमाणां सह लक्ष्मणेन च । 36ab
निरीक्षमाणो रहिते समन्ततो
34cd महावने प्रीतमना बभूव ह ॥५३॥ 36cd

इत्यार्षे रामायणे आरण्यककाण्डे सीतारावणसंवादो
नाम द्विपञ्चाशः सर्गः ॥

द्विजातिरूपेण हि वीक्ष्य रावणं समागतं शस्त्रकृशान्तपाणिनम् ।
अशक्यमुद्वेष्टुमुपायदर्शनं न्यमन्त्रयद् ब्राह्मणमेवमङ्गना ॥ ३१ ॥
इयं बृसी ब्राह्मण काममास्यतामिदं च पाद्यं प्रतिगृह्यतां त्वया ।
इदं च सिद्धं परमान्नमुत्तमं त्वदर्थमग्र्यं तदिहोपभुज्यताम् ॥ ३२ ॥

## LIII.

अथोक्तं मधुरं वाक्यं रावणेन वराङ्गना ।
चिन्तयित्वा तु वैदेही ततो वचनमब्रवीत् ॥१॥
इक्ष्विता जनकस्याहं मैथिलस्य महात्मनः ।
सीता नाम्नास्मि भद्रं ते भार्या रामस्य धीमतः ॥२॥
संवत्सरं चाध्युषिता राघवस्य निवेशने ।
भुञ्जाना मानुषान् भोगान् सर्वकामसमृद्धिनी ॥३॥
ततः संवत्सरादूर्ध्वं सममन्यत मे पतिं ।
अभिषेचयितुं राजा संमन्त्र्य सचिवैः सह ॥४॥
तस्मिन् संक्रियमाणे तु राघवस्याभिषेचने ।
कैकेयी नाम भर्तारमनार्या श्वशुरं मम ॥५॥
प्रतिगृह्य प्रणयिनी प्रथमं सुकृतेन वै ।
मम प्रव्राजनं भर्तुर्देवी वरमयाचत ॥६॥
न शयिष्ये न पास्यामि न च भोक्ष्ये कदाचन ।
एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते ॥७॥
यस्त्वया मे वरो दत्तः पुरा देवासुरे प्रभो ।
तत्सत्यं कुरु राजेन्द्र प्रतिज्ञापारगो भव ॥८॥
अनेनैवाभिषेकेण भरतो मेऽभिषिच्यतां ।
राघवश्च वनं घोरमद्यैव प्रतिपद्यतां ॥९॥

चतुर्दश हि वर्षाणि चीरकृष्णाजिनाम्बरः ।
रामश्च प्रेष्यतां शीघ्रं भरतश्चाभिषिच्यतां ॥ १० ॥
8ab इति ब्रुवाणां कैकेयीं श्वशुरो मे महारथः ।
8cd वाक्यैरयाचत धर्म्यैर्न तदाज्ञां चकार सा ॥ ११ ॥
9ab मम भर्ता महावीर्यो गुणवान् सत्यवाक् शुचिः ।
10ab रामेति प्रथितो लोके सर्वभूतहिते रतः ॥ १२ ॥
11ab तं च राज्ञा महातेजाः पिता दशरथः स्वयं ।
11cd कैकेय्याः प्रियकामार्थं रामं नैवाभ्यषेचयत् ॥ १३ ॥
12ab अथाभिषेकाय पितुः समीपं राममागतं ।
12cd कैकेयी मम भर्तारमित्युवाच दृढव्रतं ॥ १४ ॥
13ab तव पित्राभ्यनुज्ञातं ममेदं शृणु राघव ।
13cd भरताय प्रदास्यामि पितृराज्यमकण्टकं ॥ १५ ॥
14ab त्वया च खलु वस्तव्यं नव वर्षाणि पञ्च च ।
14cd वने प्रव्रज काकुत्स्थ पितरं मोचयानृतात् ॥ १६ ॥
15ab तथेत्युवाच तां रामः कैकेयीं पितुरग्रतः ।
15cd चकार वचनं तस्या मम भर्ता दृढव्रतः ॥ १७ ॥
16ab दद्यान्न प्रतिगृह्णीयान्न ब्रूयादनृतां गिरं ।
16cd एतद्ब्राह्मण रामस्य व्रतं ध्रुवमनुत्तमं ॥ १८ ॥
17ab तस्य भ्राता तु वैमात्रो लक्ष्मणो नाम वीर्यवान् ।
17cd रामस्य पुरुषव्याघ्रः सहायः समपद्यत ॥ १९ ॥

अष्टादश तु वर्षाणि ममाप्यायुर्विगण्यते ॥ ९cd ॥
विशालाक्षो महाबाहुः सर्वभूतहिते रतः ॥ १०cd ॥

तेनोच्यमानस्तेजस्वी राघवो हेतुमद्वचः ।
लक्ष्मणं प्रत्युवाचेदं सत्ये मे रमते मनः ॥ २० ॥
तं भ्राता लक्ष्मणो धीमान् धर्मचारी महाबलः ।
अन्वगच्छद्धनुष्पाणिः प्रव्रजन्तं मया सह ॥ २१ ॥
ते वयं प्रच्युता राज्यात् कैकेय्या वचनात् त्रयः ।
विचरामो द्विजश्रेष्ठ वनं गम्भीरमोजसा ॥ २२ ॥
तस्मिन् व्यालसमाकीर्णे वने प्रतिवसामहे ।
समाश्वसिहि तावत् त्वं शक्यं वस्तुमिह त्वया ॥ २३ ॥
आगमिष्यति मे भर्ता वन्यमादाय पुष्कलं ।
स त्वं नाम च गोत्रं च कुलं चाचक्ष्व तत्त्वतः ॥ २४ ॥
एकश्च दण्डकारण्ये किमर्थं चरसि द्विज ।
रामो मे संशयो नास्ति यथा त्वां सत्करिष्यति ॥ २५ ॥
यतयश्च प्रियास्तस्य भर्ता प्रियकथश्च मे ।
एवं ब्रुवत्यां सीतायां रामपत्न्यां महाबलः ॥ २६ ॥
कामबाणार्दितस्तत्र राक्षसस्त्विदमब्रवीत् ।
शृणु यश्च यतश्चाहं श्रुत्वा मां प्रतिमानय ॥ २७ ॥
अनेन छद्मना भद्रे स्वयं त्वां द्रष्टुमागतः ।
येन विद्राविता लोकाः सामराः सामराधिपाः ॥ २८ ॥
अहं स रावणो नाम सर्वलोकप्रतापनः ।
यस्यादेशाच्च सुश्रोणि खरो रक्षति दण्डकं ॥ २९ ॥

भ्राता वैश्रवणस्याहं सापत्नो वरवर्णिनि ।
पुत्रो विश्रवसः शूर औरसोऽहं महात्मनः ॥ ३० ॥
पुलस्त्यो ब्रह्मणः पुत्रः पौत्रस्तस्याहमङ्गने ।
स्वयम्भुवा दत्तवरः कामरूपी मनोगतिः ॥ ३१ ॥
दशग्रीव इति ख्यातो लोके ख्यातपराक्रमः ।
विश्रुतं कर्मजं नाम रावणोऽस्मि शुचिस्मिते ॥ ३२ ॥
त्वां तु काञ्चनगर्भाभां पीतकौषेयवासिनीं ।
रतिं स्वकेषु दारेषु नाधिगच्छामि चिन्तयन् ॥ ३३ ॥
बह्वीनामुत्तमस्त्रीणां भार्याणां मम मैथिलि ।
सर्वासामेव तासां त्वं ममाग्रमहिषी भव ॥ ३४ ॥
लङ्का नाम समुद्रस्य द्वीपश्रेष्ठा पुरी मम ।
सागरेण परिक्षिप्ता निविष्टा गिरिमूर्धनि ॥ ३५ ॥
तप्तहेममयैः शृङ्गैरुच्छ्रितैरभ्यलंकृता ।
खातगम्भीरपरिखा प्रासादाट्टावतंसका ॥ ३६ ॥
विश्रुता त्रिषु लोकेषु यथेन्द्रस्यामरावती ।
नीलजीमूतवर्णानां राक्षसानां महापुरी ॥ ३७ ॥
विश्वकर्मकृता दिव्या त्रिंशद्योजनविस्तृता ।
तत्र सीते मया सार्धं वनेषु विचरिष्यसि ॥ ३८ ॥
न चास्यारण्यवासस्य स्पृहयिष्यसि भाविनि ।
मम मूर्धाभिषिक्तस्य राक्षसानां महात्मनां ॥ ३९ ॥

सुरूपा बह्वो भार्यास्तासां त्वं प्रथमा भव ।
पञ्चदासीशतानि त्वां सर्वाभरणभूषितां ॥४०॥
सीते परिचरिष्यन्ति भार्या मे भव शोभने ।
सप्तसप्तकवेत्ताहमष्टाष्टकविभूषितः ॥४१॥
पञ्चपञ्चकतत्त्वज्ञो रावणोऽहं भजस्व मां ।
रावणेनैवमुक्ता सा रुषिता जनकात्मजा ॥४२॥
प्रत्युवाचानवद्याङ्गी तमनादृत्य राक्षसं ।
महाचलमिवाकम्प्यं महेन्द्रसदृशं पतिं ॥४३॥
महोदधिमिवाक्षोभ्यमहं राममनुव्रता ।
पूर्णचन्द्रनिभं शूरं राजपुत्रं जितेन्द्रियं ॥४४॥
पृथुकीर्तिं महावीर्यमहं राममनुव्रता ।
महाबलं महोरस्कं सिंहविक्रान्तगामिनं ॥४५॥
सिंहं सिंहीव विक्रान्तमहं राममनुव्रता ।
त्वं पुनर्जम्बुको व्याघ्रीं मामिच्छसि सुदुर्लभां ॥४६॥
नाहं शक्या त्वया स्प्रष्टुमादित्यस्य प्रभा यथा ।
पादपान् काञ्चनान् नूनं बहून् पश्यसि दुर्मते ॥४७॥
राघवस्य प्रियां भार्यां यस्त्वं हर्तुमिहेच्छसि ।
कोपितस्येव बलिनो मृगशत्रोस्तरस्विनः ॥४८॥
सिंहस्य खादतो मांसं मुखादादातुमिच्छसि ।
यो रामस्य प्रियां भार्यां बलात् त्वं हर्तुमिच्छसि ॥४९॥

35 ab त्वं क्षुरं जिह्वया लेढि सूच्या स्पृशसि लोचने ।
35 cd यो रामस्य प्रियां भार्यां पापबुद्ध्या निरीक्षसे ॥५०॥ 36 cd
36 ab व्याघ्र्यास्तरुणपुत्रायाः प्रजामादातुमिच्छसि ।
यो रामस्य प्रियां भार्यां विध्वंसयितुमिच्छसि ॥५१॥ 37 cd
अवसज्य शिलां कण्ठे सागरं तर्तुमिच्छसि । 37 ab
रामस्य दयितां भार्यां यस्त्वं हर्तुमिहेच्छसि ॥५२॥
अयोमुखानां शूलानामग्रे चरितुमिच्छसि । 39 ab
रामस्य सदृशीं भार्यां यदि त्वं नेतुमिच्छसि ॥५३॥ 39 cd
अग्निं प्रज्वलितं बद्ध्वा वस्त्रान्ते नेतुमिच्छसि । 38 ab
कल्याणवृत्तां रामस्य भार्यां यो हर्तुमिच्छसि ॥५४॥ 38 cd
कृष्णसर्पमतिक्रुद्धं निश्वसन्तं महाविषं ।
स्प्रष्टुमिच्छसि हस्तेन यन्मां त्वमभिकाङ्क्षसे ॥५५॥

यदन्तरं सिंहसृगालयोर्वने
37 ab यदन्तरं स्यन्दनिकासमुद्रयोः । 40 ab
सुराष्ट्रसौवीरकयोर्यदन्तरं
37 cd तदन्तरं वै तव राघवस्य ॥५६॥ 40 cd
यदन्तरं काञ्चननीललोहयोर्
38 ab यदन्तरं चन्दनवारिपङ्कयोः ।
यदन्तरं हस्तिविडालयोर्भवेत्
38 cd तदन्तरं स्यात् तव राघवस्य ॥५७॥

सिंह सुहृ वन दुर्गा माख्याद दो धूयसे पद ॥36 cd॥

यदन्तरं वायसवैनतेययोर्
39ab यदन्तरं वर्द्धिणलावयोर्भवेत् । 42ab
यदन्तरं सारसगृध्रयोर्भवेत्
39cd तदन्तरं ते रघुनन्दनस्य च ॥५८॥ 42cd
तस्मिन् सहस्राक्षसमप्रभावे
40ab रामे स्थिते कार्मुकबाणपाणौ । 43ab
हृतापि तेऽहं न जरां गमिष्ये
40cd वज्रं यथा मक्षिकया निगीर्णं ॥५९॥ 43cd
शक्या शची वज्रधरस्य हर्तुं
शिखापि वा दीप्तशिखस्य वह्नेः ।
स्थाणोरुमा वा जगदीश्वरस्य
नाहं त्वया रावण राघवस्य ॥६०॥
इतीव तद्वाक्यमदुष्टभावा
41ab सुदुष्टमुक्ता रजनीचरेण । 44ab
प्रत्युच्य सीता व्यथिता चकम्पे
41cd छिन्नेव युक्ता कदली गजेन ॥६१॥ 44cd
42ab तां वेपमानामभिवीक्ष्य सीतां स रावणो मृत्युसमप्रभावः । 45ab
42cd कुलं बलं नाम तथैव वीर्यं समाचचक्षे भयकारणार्थं ॥६२॥ 45cd

इत्यार्षे रामायणे आरण्यककाण्डे सीतारावणसंवादो
नाम त्रिपञ्चाशः सर्गः ॥

LIV.

एवं ब्रुवत्यां सीतायां संरब्धपरुषाक्षरं ।
ललाटे भ्रूकुटीं बद्धा रावणः प्रत्युवाच ह ॥ १ ॥
भ्राता वैश्रवणस्याहं सापत्नो वरवर्णिनि ।
रावणो नाम भद्रं ते दशग्रीवः प्रतापवान् ॥ २ ॥
यस्य देवाः सगन्धर्वाः सपिशाचाः सपन्नगाः ।
विद्रवन्ति भयाद्भद्रे मृत्योरिव मुखात् प्रजाः ॥ ३ ॥
येन वैश्रवणो राजा वैमात्रः कारणान्तरे ।
क्रुद्धेन द्वन्द्वमासाद्य मया विक्रम्य निर्जितः ॥ ४ ॥
यद्भयात् संपरित्यज्य स्वमधिष्ठानमृद्धिमत् ।
कैलासं पर्वतश्रेष्ठमध्यास्ते नरवाहनः ॥ ५ ॥
तस्यैतत् पुष्पकं नाम विमानं कामगं महत् ।
वीर्यादवजितं भद्रे येन यामि विहायसा ॥ ६ ॥
मम संजातरोषस्य मुखं दृष्ट्वैव मैथिलि ।
विद्रवन्ति परित्रस्ताः सर्वे लोका दिशो दश ॥ ७ ॥
मया शक्रोऽपि विक्रम्य मत्तैरावणगर्वितः ।
वृतः सुरगणैः सर्वैः समरे निर्जितः पुरा ॥ ८ ॥
पाशहस्तो विपाशस्तु रणे वरुण एव च ।
भग्नः प्रयातः सहसा मया सीते ह्यपां पतिः ॥ ९ ॥

कालमुद्गरहस्तश्च मृत्युप्रहरणो रणे ।
यमो याम्यां दिशं नीतो मद्भयान्न विचेष्टते ॥१०॥
त इमे लोकपाला वै समग्रैर्दैवतैः सह ।
मामग्रे यान्ति गच्छन्तं शङ्किताः सर्वतो दिशः ॥११॥
7ab यत्र तिष्ठाम्यहं तत्र मारुतो वाति शङ्कितः । 8ab
7cd तीक्ष्णांशुः शिशिरांशुत्वं भयात् संपद्यते रविः ॥१२॥
8ab निष्कम्पपर्णास्तरवो नद्यश्च तिमितोदकाः । 9ab
8cd भवन्ति तत्र यत्राहं तिष्ठामि विचरामि च ॥१३॥ 9cd
9ab मम पारे समुद्रस्य लङ्का नाम महापुरी । 10ab
9cd संपूर्णा राक्षसैर्घोरैरिन्द्रस्येवामरावती ॥१४॥ 10cd
10ab प्राकारेण प्रवृद्धेन पाण्डरेण समावृता । 11ab
10cd हेमकक्षा दृष्टिरम्या वैदूर्यमणितोरणा ॥१५॥ 11cd
11ab हस्त्यश्वरथसंबाधा तूर्यनादनिनादिता । 12ab
11cd सर्वकामफलैर्वृक्षैरुद्यानैश्चैव भूषिता ॥१६॥ 12cd
12ab तस्मिन् वसन्ती त्वं सीते राजपुत्री मया सह । 13ab
12cd न स्मरिष्यसि नारीणां मानुषीणां मनस्विनि ॥१७॥ 13cd
13ab भुञ्जानामानुषान् भोगान् दिव्यांश्च वरवर्णिनि । 14ab
13cd न स्मरिष्यसि रामस्य मानुषस्य गतायुषः ॥१८॥ 14cd
14ab स्थापयित्वा प्रियं पुत्रं राज्ये दशरथो नृपः । 15ab
14cd मन्दवीर्यं ततो ज्येष्ठं पुत्रं प्रास्थापयद्वनं ॥१९॥ 15cd

15ab तेन किं भ्रष्टराज्येन रामेण गतचेतसा । 16ab
15cd करिष्यसि विशालाक्षि तापसेन तपस्विनी ॥२०॥ 16cd
16ab सर्वराक्षसभर्तारं कामात् स्वयमिहागतं । 17ab
16cd न मन्मथशराविष्टं प्रत्याख्यातुं त्वमर्हसि ॥२१॥ 17cd
17ab प्रत्याख्याय हि मां भीरु परितापं गमिष्यसि । 18ab
17cd ताडयित्वेव पादेन पुरूरवसमुर्वशी ॥२२॥ 18cd
18ab एवमुक्ता तु वैदेही क्रुद्धा संरक्तलोचना । 19ab
18cd अब्रवीत् परुषं वाक्यं रहिते राक्षसेश्वरं ॥२३॥ 19cd
19ab कथं वैश्रवणं देवं सर्वसत्त्वनमस्कृतं । 20ab
19cd भ्रातरं त्वं व्यपदिशन् पापं कर्तुमिहेच्छसि ॥२४॥ 20cd
20ab अवश्यं हि विनङ्क्ष्यन्ति सर्वे रावण राक्षसाः । 21ab
20cd येषां त्वं कर्कशो राजा दुर्बुद्धिरजितेन्द्रियः ॥२५॥ 21cd
21ab अपनीय शचीं भार्यां शक्यमिन्द्रस्य जीवितुं । 22ab
21cd न तु मामपनीयेह शक्यं रामस्य जीवितुं ॥२६॥ 22cd
22ab जीवेच्चिरं वज्रधरस्य पत्नीं शचीं प्रहृत्यापि निशाचरेश । 23ab
22cd न त्वेव रामस्य विधाय पापं शक्तश्चिरं जीवितुमन्तकोऽपि ॥२७॥
23ab श्रियमिह विपुलां विहाय रौद्रीं द्विजगणसिद्धगणान् निमथ्य संख्ये ।
23cd यमविषयमितो गमिष्यसि त्वं हत इह राघवसायकैः प्रदीप्तैः ॥२८॥

इत्यार्षे रामायणे आरण्यककाण्डे सीतारावणसंवादो
नाम चतुःपञ्चाशः सर्गः ॥

## LV.

सीतायास्तद्वचः श्रुत्वा दशग्रीवः प्रतापवान् ।
हस्ते हस्तं विनिष्पिष्य चकार सुमहद्वपुः ॥ १ ॥
स परिव्राजकच्छद्मा महाकायशिरोधरः ।
प्रतिपेदे स्वकं रूपं रावणो राक्षसाधिपः ॥ २ ॥
सद्यः सौम्यं परित्यज्य भिक्षुरूपं निशाचरः ।
स्वं रूपं कालरूपाभं भेजे वैश्रवणानुजः ॥ ३ ॥
महाललाटो रक्ताक्षो व्यूढोरस्को महाभुजः ।
सिंहदंष्ट्रो वृषस्कन्धश्चित्राङ्गो दीप्तमूर्धजः ॥ ४ ॥
कृष्णः संहृष्टरोमाङ्गः कृष्णाञ्जनगिरिप्रभः ।
रक्ताम्बरधरो घोरस्तप्तकाञ्चनकुण्डलः ॥ ५ ॥
स तामसितकेशान्तां विप्रनष्टविशेषकां ।
रुचिराभरणोपेतां प्रत्युवाच निशाचरः ॥ ६ ॥
यदि मां स्वेन रूपेण भर्तारं न त्वमिच्छसि ।
वशे त्वां हि करिष्यामि स्वयमेवाबले बलात् ॥ ७ ॥
वत्स्यसे यच्च वीर्येण रामं त्वद्गतचेतसं ।
उन्मत्ते न श्रुतं मन्ये मम वीर्यं त्वयातुलं ॥ ८ ॥
उद्वहेयं भुजाभ्यां हि मेदिनीमम्बरे स्थितः ।
आपिबेयं समुद्रं च मृत्युं हन्यां रणे स्थितः ॥ ९ ॥

अर्कं रुन्ध्यां शरैस्तीक्ष्णैर्निर्भिन्द्यां मेदिनीतलं ।
कामरूपिणमुन्मत्ते पश्य मां कामदं पतिं ॥ १० ॥
एवमुक्ता तु वैदेही रावणेन शिखिप्रभे ।
ददर्श रक्तपर्यन्ते नेत्रे क्रुद्धस्य रक्षसः ॥ ११ ॥
स च संरक्तनयनस्तप्तकाञ्चनकुण्डलः ।
दशास्यः कार्मुकी वाणी बभूव क्षणदाचरः ॥ १२ ॥
संरक्तनयनः पापः कालजीमूतसंनिभः ।
रक्ताम्बरधरस्तस्थौ स्त्रीरत्नं प्रेक्ष्य मैथिलीं ॥ १३ ॥
स तामसितकेशान्तां भास्करस्य प्रभामिव ।
वसनाभरणोपेतां रावणः प्राह मैथिलीं ॥ १४ ॥
कथं रामं च वैदेहि चीरवल्कलवाससं ।
वातातपाभ्यां तप्ताङ्गं दुर्बुद्धिमनुरज्यसे ॥ १५ ॥
त्रिषु लोकेषु विख्यातं यदि भर्तारमिच्छसि ।
मां भजस्व चिराय त्वमहं श्लाघ्यस्तवाश्रयः ॥ १६ ॥
नैवायासं क्वचिद्भद्रे प्राप्स्यसे न च विप्रियं ।
त्यज्यतां मानुषे भावो मयि भावो विधीयतां ॥ १७ ॥
राक्षसेति समुद्वेगं न त्वमागन्तुमर्हसि ।
अहं तव वशे भीरु भविष्यामि न संशयः ॥ १८ ॥
संवत्सरं तत्र गतां न त्वां वक्ष्यामि विप्रियं ।
यावद्रामस्य निर्वेदस्तव वै चित्तमागतः ॥ १९ ॥

राज्यच्युतमसिद्धार्थं रामं परिमितायुषं ।
कैर्गुणैरनुरक्तासि मूढे पण्डितमानिनि ॥ २० ॥
यः स्त्रिया वचनाद्राज्यं विहाय च सुहृज्जनं ।
अस्मिन् व्यालानुचरिते वने वसति दुर्मतिः ॥ २१ ॥
इत्युक्त्वा मैथिलीं वाक्यं दुष्टात्मा काममोहितः ।
जग्राह रावणः सीतां खे बुधो रोहिणीमिव ॥ २२ ॥
प्रत्युवाच ततः सीता क्रुद्धा साश्रुपरिप्लुता ।
हतस्त्वं तेजसा पाप राघवस्य महात्मनः ॥ २३ ॥
सानुगस्त्यक्ष्यसि प्राणान् दुर्बुद्धे राक्षसाधम ।
एवमुक्तस्य वैदेह्या रावणस्य दुरात्मनः ॥ २४ ॥
भृशं जीमूतवर्णानि वदनानि चकाशिरे ।
अग्निज्वालाप्रभैर्नेत्रैर्भ्रूजिह्मैः सुविभीषणैः ॥ २५ ॥
वैदेहीं रावणः क्रुद्धो निर्दहन्निव राक्षसः ।
सव्येन सीतां पद्माक्षीं मूर्धजेषु करेण सः ॥ २६ ॥
ऊर्वोस्तु दक्षिणेनैनामग्रहीत् पाणिना शुभां ।
सा गृहीता विचुक्रोश राक्षसेन बलीयसा ॥ २७ ॥
हार्यपुत्र न मां पासि वीरहा लक्ष्मणेति च ।
तं दृष्ट्वा गिरिशृङ्गाभं तीक्ष्णदंष्ट्रं महाबलं ॥ २८ ॥
व्यद्रवन्त सुसंत्रस्ता भयार्ता वनदेवताः ।
रामकामां स कामार्तः पन्नगेन्द्रवधूमिव ॥ २९ ॥

चेष्टमानां परिगृह्य उत्पपात ततो नभः ।
गृहीत्वा स तु बाहुभ्यामुत्पपात महाबलः ॥ ३० ॥
गरुडः शीघ्रमादाय पन्नगेन्द्रवधूमिव ।
18ab स च मायामयो दिव्यः खरयुक्तः खरस्वनः ॥ ३१ ॥
18cd प्रत्यदृश्यत हेमाङ्गो रावणस्य महारथः ।
19ab ततस्तां परुषैर्वाक्यैरभितर्ज्य महास्वरः ॥ ३२ ॥
19cd अङ्केनादाय वैदेहीं रथमारोपयत् तदा ।
अर्धरात्रार्धदिवसे अर्धचन्द्रार्धभास्करे ॥ ३३ ॥
रक्षो जग्राह वैदेहीं शूद्रो वेदश्रुतीमिव ।
20ab सा गृहीता प्रचुक्रोश राक्षसेन मनस्विनी ॥ ३४ ॥
20cd हार्यपुत्रेति दुःखार्ता पतिं दूरचरं वने ।
22ab ततः सा राक्षसेन्द्रेण ह्रियमाणा विहायसा ॥ ३५ ॥
22cd मत्तेव मन्दं प्रोवाच भ्रान्तचित्तेव चातुरा ।
23ab हा लक्ष्मण महाबाहो गुरुचित्तप्रसादक ॥ ३६ ॥
23cd ह्रियमाणां न जानीषे राक्षसेन दुरात्मना ।
ननु रामाविनीतानां विनेतासि परंतप ॥ ३७ ॥
धर्मशील महाबाहो सत्यव्रत महायशः ।
24cd ह्रियमाणामनाथां मां राक्षसेन न पश्यसि ॥ ३८ ॥
25ab रक्षसामविनीतानां विनेतासि परंतप ।
25cd कथमेवंविधं पापं न त्वं शास्सि च रावणं ॥ ३९ ॥

तामनाथां सुदुःखार्तां पन्नगेन्द्रवधूमिव ।
चेष्टमानां परिष्वज्य खमुत्पपात रावणः ॥ २१ ॥
जीवितं सुखमैश्वर्यं धर्महेतोः परित्यजन् । 24ab
कालेऽयन्तो भवेद्यत्र सस्यानामिव पक्तयः ॥ 26cd ॥
स कर्म कृतवानेष कालोपहतचेतनः । 27ab

तत्त्वधर्मापनीतस्य दृश्यते कर्मणः फलं ।
जीवितान्तफलं नूनं रावणः समवाप्स्यति ॥४०॥
हन्तेदानीं सकामास्तु कैकेयी सह बान्धवैः ।
ह्रिये ऽहं धर्मकामस्य धर्मपत्नी चिराय यत् ॥४१॥
भवतश्च प्रहृष्टा सा कैकेयी दुष्टचारिणी ।
यया प्रस्थापितो रामः सभार्यो निर्जनं वनं ॥४२॥
आमन्त्रये जनस्थानं वन्दे वृक्षांश्च पुष्पितान् ।
क्षिप्रं रामाय शंसध्वं सीतां हरति रावणः ॥४३॥
उच्चवन्तं शिखरिणं वन्दे प्रस्रवणं गिरिं ।
क्षिप्रं रामाय शंसेथाः सीतां हरति रावणः ॥४४॥
सुखगन्धाश्च वन्दे ऽहं वनराजीः सुपुष्पिताः ।
क्षिप्रं रामाय शंसध्वं सीतां हरति रावणः ॥४५॥
हंससारससंघुष्टां वन्दे गोदावरीं नदीं ।
क्षिप्रं रामाय शंस त्वं सीतां हरति रावणः ॥४६॥
दैवतानि च यान्यस्मिन् वने विविधपादपे ।
नमस्करोम्यहं तेभ्यो भर्तुः शंसत मां हृतां ॥४७॥
यानि कानिचिदप्यस्मिन् निवसन्ति महावने ।
सर्वाणि शरणं यामि सत्त्वानि विविधान्यहं ॥४८॥
यावान् पक्षिगणः कश्चिद्दंष्ट्रिणाश्च महाबलाः ।
तिष्ठन्तीह महारण्ये तानहं शरणं गता ॥४९॥

असान्निध्यात् तु रामस्य लक्ष्मणस्य च धीमतः ।
रावणेनापकृष्टास्मि रामायेच्छामि शंसितुं ॥५०॥
32ab क्रियमाणां प्रियां भर्तुः प्राणेभ्योऽपि गरीयसीं ।
32cd विवशां रक्षसानेन शंसध्वं राघवाय मां ॥५१॥
33ab मां विदित्वा महाबाहुर्हृतेति स महामनाः ।
33cd आनयिष्यति विक्रम्य यमस्य विषयादपि ॥५२॥

इत्यार्षे रामायणे आरण्यककाण्डे सीताहरणं
नाम पञ्चपञ्चाशः सर्गः ॥

इदं मम प्रशातव्यं भ्राता व्हरणं त्वेवरा ।
रामलक्ष्मणयोः ...पमा... ॥ ३४ ॥
रावणो नाम दुर्बुद्धी राक्षसो धनदानुजः ।
सीतां हरति दुष्टात्मा तत्र प्रतिविधीयताम् ॥ ३५ ॥

LVI.

, III. 55.

अथ रम्ये गिरिप्रस्थे कानने विविधाश्रये ।
पक्षिराजो महातेजा महाबलपराक्रमः ॥ १ ॥
प्रसुप्तः पृष्ठतः कृत्वा दीप्यमानं दिवाकरं ।
तं शब्दं शुश्रुवे तत्र स्वप्ने वाक्यमिवाहृतं ॥ २ ॥
तेन वाक्येन पक्षीन्द्रः प्रविष्टेन श्रुतेः पथं ।
वज्रस्येव निपातेन ताडितो हृदये भृशं ॥ ३ ॥
प्रतिबुद्धस्तु वेगेन स्नेहाद्दशरथस्य च ।
रथशब्दं स शुश्राव मेघगर्जितनिःस्वनं ॥ ४ ॥
स निरीक्ष्य दिशः सर्वा जटायुः क्रमशो नभः ।
अपश्यद्रावणं सोऽथ क्रन्दन्तीं तां च जानकीं ॥ ५ ॥
ह्रियमाणां तु तां दृष्ट्वा स्नुषामथ स पक्षिराट् ।
क्रोधेन महताविष्टो वेगेनोत्पतितो नभः ॥ ६ ॥
समुत्पत्य ततः पक्षी स बली तस्य रक्षसः ।
रथमार्गमवष्टभ्य स्थितः क्रोधादिव ज्वलन् ॥ ७ ॥
स रुद्ध्वा रथमार्गं तु पक्षिराडिव पर्वतः ।
1cd वनस्पतिगतः श्रीमान् व्याजहार शुभां गिरं ॥ ८ ॥
2ab दशग्रीव स्थितो धर्मे पुराणे सत्यसंश्रयः । 3ab 3ab
2cd जटायुर्नाम नाम्नाहं गृध्रराजो महाबलः ॥ ९ ॥ 3cd 3cd

ततः पर्वतकूटाभस्तीक्ष्णतुण्डः खगोत्तमः । 1ab

त्वं च राक्षसवंशस्य प्रवरः सुमहाबलः ।
विबुधाश्च त्वया राजन् बहुशो निर्जिता रणे ॥ १० ॥
मम वृद्धस्य पौलस्त्य बलहीनस्य पक्षिणः ।
विक्रमं द्रक्ष्यसे युद्धे जीवंश्चैव न यास्यसि ॥ ११ ॥
3 ab राजा सर्वस्य लोकस्य महेन्द्रवरुणोपमः ।
3 cd लोकानां च हिते युक्तो रामो दशरथात्मजः ॥ १२ ॥
4 ab तस्यैषा लोकनाथस्य धर्मपत्नी यशस्विनी ।
4 cd सीता नाम वरारोहा यां त्वं हर्तुमिहोद्यतः ॥ १३ ॥
5 ab कथं राजा स्थितो धर्मे परदारान् परामृषेत् ।
5 cd रक्षणीया विशेषेण परदारा महीभृतां ॥ १४ ॥
6 ab निवर्तय मतिं नीच परदाराभिमर्षणात् ।
7 ab मा त्वां वृक्षादिव फलं पातयिष्ये रथोत्तमात् ॥ १५ ॥
7 cd समाचरेन्न तद्धीरो यत् परेषां विगर्हितं । 7ab
8 ab यथात्मनस्तथान्येषां रक्ष्या दारा विमृश्यतां ॥ १६ ॥ 7cd
9 ab कामं स्वभावो यो यस्य न स शक्यः प्रमार्जितुं ।
9 cd न हि दुष्टात्मनामार्या निवसन्त्यालये चिरं ॥ १७ ॥
10 ab अर्थं वा यदि वा कामं नयशास्त्रेष्वनागतं । 8ab
10 cd व्यवस्येन्न नरः पापं धर्मात् पौलस्त्यनन्दन ॥ १८ ॥ 8cd
11 ab राजा धर्मस्य कामस्य द्रव्याणां चोत्तमो निधिः । 9ab
11 cd धर्मं शुभं वाप्यशुभं राजमूलात् प्रवर्तते ॥ १९ ॥ 9cd

मया साम्ना प्रोच्यमानो यदि सीतां न त्यक्ष्यसि ॥ 6 cd ॥
आत्मानमुपमां कृत्वा स्वेषु दारेषु रम्यताम् ॥ 8 cd ॥

पापस्वभावश्चपलः कथं त्वं राक्षसाधम ।
ऐश्वर्यमपि संप्राप्तो विमानमिव दुष्कृती ॥ २० ॥
विषये वा पुरे वापि यदा रामस्तवानघः ।
नापराध्यति धर्मात्मा कथं तस्यापराध्यसि ॥ २१ ॥
यदि शूर्पणखाहेतोर्जनस्थानगतः खरः ।
अतिवृत्तो हतः पापः को दोषो राघवस्य तु ॥ २२ ॥
चतुर्दशसहस्राणि राक्षसानां यदा ययुः ।
रामलक्ष्मणनाशाय राघवेण च ते हताः ॥ २३ ॥
अत्र ब्रूहि यथासत्यं को रामस्य व्यतिक्रमः ।
यस्य त्वं लोकनाथस्य भार्यां हर्तुमिहोद्यतः ॥ २४ ॥
क्षिप्रं विसृज वैदेहीं मा त्वां घोरेण चक्षुषा ।
दहेद्दहनभूतेन वृत्रमिन्द्राशनिर्यथा । २५ ॥
सर्पमाशीविषं बद्ध्वा वस्त्रान्ते नावबुध्यसे ।
ग्रीवायां च समासक्तं कालपाशं न बुध्यसे ॥ २६ ॥
स भावो मूढ हर्तव्यो यो नरं नावसादयेत् ।
न रत्नं प्रतिवोढव्यं यद्रत्नं क्षयमावहेत् ॥ २७ ॥
यत् कृत्वा न भवेद्धर्मो यत् कृत्वा न भवेद्यशः ।
शरीरदोषश्च भवेन्न तत् कर्म समाचरेत् ॥ २८ ॥
षष्टिवर्षसहस्राणि मम जातस्य रावण ।
पितृपैतामहं राज्यं यथावदनुशासतः ॥ २९ ॥

21cd वृद्धोऽहं त्वं युवा वीर रथस्थः कवची शरी ।
21ef न चाप्यादाय वैदेहीं कुशली त्वं गमिष्यसि ॥ ३० ॥
22ab न शक्तस्त्वं बलाद्धर्तुं वैदेहीं मम पश्यतः ।
22cd हेतुभिर्न्यायसंबद्धैः शूद्रो वेदश्रुतीमिव ॥ ३१ ॥
A.E. III.56. 1ab इत्युक्तस्य यथान्यायं राक्षसस्य जटायुषा । III
1cd क्रुद्धस्याग्निनिभा घोरा विरेजुर्विंशतिर्दृशः ॥ ३२ ॥
2ab संरक्तनयनः कोपात् तप्तकाञ्चनकुण्डलः ।
2cd राक्षसेन्द्रोऽभिदुद्राव पतगेन्द्रममर्षणः ॥ ३३ ॥
3ab स संप्रहारस्तुमुलस्तयोस्तस्मिन् महावने ।
3cd बभूव वातोद्धुतयोर्गगने मेघयोरिव ॥ ३४ ॥
तुण्डपक्षप्रहारेण जटायुश्चरणायुधः ।
रावणश्च महावीर्यौ युयुधाते परस्परं ॥ ३५ ॥
4ab तद्बभूवाद्भुतं युद्धं गृध्रराक्षसयोर्महत् ।
शब्दस्तयोर्भृशं तत्र गगने मेघयोरिव ॥ ३६ ॥ 4cd
5ab ततो नालीकनाराचैस्तीक्ष्णाग्रैश्च विकर्णिभिः । 4ab
5cd अभ्यवर्षन्महाघोरैर्गृध्रराजं शरोर्मिभिः ॥ ३७ ॥ 5cd
6ab स तानि शरजालानि गृध्रः पत्ररथेश्वरः । 6ab
6cd जटायुः प्रतिजग्राह रावणास्त्राणि संयुगे ॥ ३८ ॥ 6cd
ततः स क्रोधसंरक्तो विकीर्ण इव पर्वतः ।
पृष्ठेऽस्य न्यपतद्गृध्रो नखैश्च विचकर्त सः ॥ ३९ ॥

न श्रुतं मया मे हि परदाराभिमर्शनम् | 21ab |
युध्यस्व यदि वीरोऽसि मुहूर्तं तिष्ठ रावण |
~~पितृपितामहे सत्ये यथावदनुतिष्ठतः ॥ २० ॥~~
शायिष्यसे हतो भूमौ यथा भ्राता खरस्तव ॥ 23 ।

7ab तस्य तीक्ष्णनखाभ्यां तु चरणाभ्यां महाबलः ।
7cd चक्रे सरुधिरान् गात्रे व्रणांश्च पतगेश्वरः ॥ ४० ॥
स चाप्यशनिसंकाशैः स्वर्णपुङ्खैरजिह्मगैः ।
निर्बिभेद गृध्रपतिमतिक्रुद्धो दशाननः ॥ ४१ ॥
स रावणविमुक्तांस्तु शरान् वै पतगेश्वरः ।
अचिन्तयन् प्रहारांस्तान् रावणं समुपाद्रवत् ॥ ४२ ॥
उत्पत्य च महाबाहुः पक्षावुद्यम्य मूर्धनि ।
पक्षाभ्यामतिसंरब्धस्ताडयामास रावणं ॥ ४३ ॥
10ab ततोऽस्य सशरं चापं मणिमुक्ताविभूषितं ।
11ab चरणाभ्यां महातेजा बभञ्ज पतगेश्वरः ॥ ४४ ॥
भङ्क्त्वाग्निसदृशं दिव्यं रावणस्य शरासनं । 12ab
पक्षाभ्यां स महातेजा दुद्राव पतगेश्वरः ॥ ४५ ॥ 12cd
ततो बहुश आविध्य तत्किरीटं महाबलः ।
जाम्बूनदमयं दिव्यं सर्वरत्नोपशोभितं ॥ ४६ ॥
व्यसर्जयत पक्षीन्द्रो रोषाविष्टो नभस्तले ।
अशोभत पतत् तच्च सूर्यमण्डलसंनिभं ॥ ४७ ॥
12ab काञ्चनावच्छदान् हत्वा पिशाचवदनान् खरान् । 13ab
विकृष्य तरसा पक्षी क्षिप्रं प्राणैर्व्ययोजयत् ॥ ४८ ॥
कामगं तु महाघोरं चक्रकूवरभूषणं ।
13cd मणिहेमविचित्राङ्गं बभञ्ज च महारथं ॥ ४९ ॥ 14cd

असकृत् संयुगे येन निहता दैत्यदानवाः । न चिरात् चीरवासास्त्वां रामो युधि वधिष्यति ॥ २४ ॥
किं तु शक्यं मया कर्तुं गतौ दूरं नृपात्मजौ । क्षिप्रं त्वं नश्यसे नीच तयोर्भीतो न संशयः ॥ २५ ॥
नहि मे जीवमानस्य नयिष्यसि निशाचर । सीतां कमलपत्राक्षीं रामस्य महिषीं प्रियाम् ॥ २६ ॥
अवश्यं तु मया कार्यं प्रियं तस्य महात्मनः । जीवितेनापि रामस्य तथा दशरथस्य च ॥ २७ ॥
तिष्ठ तिष्ठ दशग्रीव मुहूर्तं पश्य मे बलम् । युद्धातिथ्यं प्रदास्यामि यथाप्राणं निशाचर ॥ २८ ॥
सीतां संस्थापयिष्यामि स्थिरो भव सुदुर्मते ॥ २८-५ ॥

समाक्षिप्य रथात् तस्मात् सारथिं पतगेश्वरः ।
गजाङ्कुशनिभेनाशु दारयित्वा पदासृजत् ॥५०॥
L.E. III.57. 1ab स भग्नधन्वा विरथो हताश्वो हतसारथिः ।
" 1cd अङ्केनादाय वैदेहीं पपात भुवि रावणः ॥५१॥
दृष्ट्वा निपतितं भूमौ रावणं भग्नवाहनं ।
साधु साध्विति भूतानि गृध्रराजमपूजयन् ॥५२॥
ततस्तु तं परबलयानभञ्जनं
14ab सुरासुरैः समरमुखेष्वनिर्जितं ।
पराजितं पतगवरेण रावणं
14cd विसिस्मियिरे सुरमुनिभिर्विलोक्य तं ॥५३॥
ततोऽस्तुवन् पतगवरं दिवौकसः
15ab सुदुष्करं कृतमिह कर्म तेन यत् ।
प्रशस्यते तु विहगराजसत्तमो
15cd व्यवस्थितः पुनरपि युद्धमर्षितः ॥५४॥

इत्यार्षे रामायणे आरण्यककाण्डे जटायुरावणयुद्धं
नाम षट्पञ्चाशः सर्गः ॥

अथ क्रोधात् दशग्रीवो जग्राह दश मार्गणान् । मृत्युदण्डसमान् घोरान् शत्रुमर्मावभेदिनः ॥४॥
स तैर्बाणैर्महावीर्यो रुक्मपुङ्खैरजिह्मगैः । बिभेद निशितैर्घोरैर्गृध्रं तीक्ष्णैः शिलाशितैः ॥ १॥
गृध्राश्यां स महातेजा जग्राह पतगेश्वरः ॥10cd॥
तस्याग्निसदृशं दिव्यं रावणस्याशु देशनम् ॥ ॥ab)
सारथिं च रथोपस्थात् स जघान नखाङ्कुशैः ॥ ॥cd॥
पूर्णचन्द्रप्रतीकाशं छत्रं तस्य न्यपातयत् ॥12cd॥

## LVII.

कृत्वा तु तन्महत् कर्म जटायुर्जरयान्वितः ।
परिश्रान्तो बभूवाथालक्षयत् तं च रावणः ॥ १ ॥
परिश्रान्तं स तं दृष्ट्वा जरया पक्षिपुङ्गवं ।
उत्पपात पुनर्हृष्टः सीतामादाय रावणः ॥ २ ॥
तां प्रगृह्य निजे चाङ्के हरन्तं जनकात्मजां ।
गृध्रराजः खमुत्पत्य जटायुरिदमब्रवीत् ॥ ३ ॥
वज्रसंस्पर्शवाणस्य भार्यां रामस्य रावण ।
अल्पबुद्धे हरस्येतां बधाय खलु रक्षसां ॥ ४ ॥
समित्रबन्धुः सबलः सामात्यः सपरिच्छदः ।
विषपानं पिबस्येतत् पिपासित इवोदकं ॥ ५ ॥
अनुबन्धमजानन्तः कर्मणामविचक्षणाः ।
शीघ्रमेव विनश्यन्ति यथा त्वं हि विनङ्क्ष्यसि ॥ ६ ॥
बद्धस्त्वं कालपाशेन क्व गतस्तस्य मोक्ष्यसे ।
वडिशामिषमादाय बधार्थं मकरो यथा ॥ ७ ॥
सिंहो वा धर्षणां प्राप्य पादस्पर्शमिवोरगः ।
मैथिल्याः स परामर्षं राघवो न सहिष्यति ॥ ८ ॥
न हि जातु दुराधर्षौ धर्मदारपराभवं ।
धर्षणां वाश्रमस्येह सहेते रामलक्ष्मणौ ॥ ९ ॥

इमां तस्करभावेन क्रूर पाप नृशंसकृत् ।
यतोऽपनयसे सीतां प्रोक्षितस्त्वं यथा पशुः ॥ १० ॥
8 ab हत्वा वा हन्यते शूरः शेते वा निहतः शरैः ।
तस्कराचरितो मार्गो नैव शूरनिषेवितः ॥ ११ ॥
युध्यस्व यदि शूरोऽसि मुहूर्तं तिष्ठ रावण ।
शयिष्यसि हतो भूमौ यथा भ्राता खरस्तव ॥ १२ ॥
असकृत् संयुगे येन निहता दैत्यदानवाः ।
9 ab न चिराच्चीरवासास्त्वां राघवो निहनिष्यति ॥ १३ ॥
रामो दाशरथिः श्रीमान् क्षत्रधर्मव्यवस्थितः ।
एवमुक्तो राक्षसेन्द्रः पक्षीन्द्रेण स गर्वितः ॥ १४ ॥
रोषसंरक्तनयन इदं वचनमब्रवीत् ।
सौहार्दं दर्शितं राज्ञस्त्वया दशरथस्य हि ॥ १५ ॥
रामस्य हि तथानृण्यं गतस्त्वं मा कृथाः श्रमं ।
एवमुक्तोऽब्रवीद्वाक्यमविभ्रान्तः खगोत्तमः ॥ १६ ॥
यत् ते तेजो बलं शक्तिः पौरुषं यच्च ते महत् ।
तद्दर्शय न मे क्रूर जीवन् प्रतिगमिष्यसि ॥ १७ ॥
10 ab परीतकालः पुरुषो यत् कर्म प्रतिपद्यते । 26 ab
10 cd विनाशायात्मनस्तस्मात् प्रतिपन्नोऽसि तच्च हि ॥ १८ ॥ 26 cd
11 ab पापानुबन्धो यस्य स्यात् कर्मणः पाप को नु तत् । 27 ab
11 cd कुर्वीत लोकाधिपतिः स्वयम्भूर्भगवानपि ॥ १९ ॥ 27 cd

अनुबन्धमजानन्तः कर्मणामविचक्षणाः । 12ab ।
समित्रबान्धवजनाः सामात्याः सपरिच्छदाः ॥ 12cd ॥
क्षिप्रमेव विनश्यन्ति तथा त्वं विनशिष्यसि ॥ 12ef ॥

अक्षमोऽसत्यसंधश्च परदारी नृशंसकृत् ।
पच्यते नरके घोरे दह्यमानः स्वकर्मणा ॥ २० ॥
13 ab एवमुक्त्वा शुभं वाक्यं जटायुस्तस्य रक्षसः ।
13 cd निपपात भृशं पृष्ठे दशग्रीवस्य वीर्यवान् ॥ २१ ॥
गजाङ्कुशनिभैस्तीक्ष्णैर्दारयित्वा भुजान्तरे ॥
नखतुण्डप्रहारैस्तु राक्षसो विदलीकृतः ॥ २२ ॥
14 ab स गृहीतो नखैस्तीक्ष्णैर्विचचाल समन्ततः ।
14 cd अधिरूढे गजारोहे यथा स्याच्चलितो गजः ॥ २३ ॥
15 ab विददार नखैस्तस्य पृष्ठं स पतगेश्वरः ।
तीक्ष्णतुण्डार्पणैर्ग्रीवां नखैः सर्वां व्यदारयत् ॥ २४ ॥
वेदनापीडितास्त्रीणि वदनानि चकार सः ।
15 cd केशांश्चोत्पाटयामास पक्षतुण्डनखायुधैः ॥ २५ ॥
16 ab स तथा गृध्रराजेन कृष्यमाणो मुहुर्मुहुः ।
16 cd अमर्षात् स्फुरमाणोष्ठः समकम्पत राक्षसः ॥ २६ ॥
17 ab परिगृह्य च वैदेहीं वामेनाङ्केन रावणः ।
17 cd तलेनाभिजघानाशु संक्रुद्धस्तु जटायुषं ॥ २७ ॥
जटायुरपि संक्रुद्धः पक्षतुण्डनखैर्मुहुः ।
चकार रावणं संख्ये फुल्लाशोकसमप्रभं ॥ २८ ॥
18 ab पुनः क्रुद्धो दशग्रीवः सीतामुत्सृज्य वीर्यवान् ।
18 cd मुष्टिभ्यां चरणाभ्यां च गृध्रराजमपोथयत् ॥ २९ ॥

तयोर्मुहूर्त्तं संग्रामो बभूवाद्भुतवीर्य्ययोः ।
राक्षसानां च मुख्यस्य पक्षिणां प्रवरस्य च ॥ ३० ॥
तस्य प्रयतमानस्य रामस्यार्थे स रावणः ।
पक्षौ पादौ च पार्श्वं च चिच्छेदोद्यम्य सायकं ॥ ३१ ॥
स च्छिन्नपक्षः सहसा रक्षसा रौद्रकर्मणा ।
निपपात ततो गृध्रो धरण्यां मन्दजीवितः ॥ ३२ ॥
तं दृष्ट्वा पतितं भूमौ क्षतजार्द्रं जटायुषं ।
अभ्यधावत वैदेही स्वबन्धुमिव दुःखिता ॥ ३३ ॥

तं कृष्णजीमूतनिकाशकायं
सुपाण्डरोरस्कमुदारसत्त्वं ।
ददर्श लङ्काधिपतिर्जटायुषं
हतं पृथिव्यां कृपणं स्फुरन्तं ॥ ३४ ॥
ततस्तु तं पत्त्ररथं महीतले
निपातितं रावणखड्गनिर्जितं ।
भृशं परिष्वज्य शशिप्रभानना
रुरोद सीता जनकात्मजा तदा ॥ ३५ ॥

इत्यार्षे रामायणे आरण्यककाण्डे जटायुर्बधो
नाम सप्तपञ्चाशः सर्गः ॥

LVIII. — 50

G. E. III. 55.

1ab तमल्पजीवितं भूमौ स्फुरन्तं राक्षसाधिपः ।
1cd दृष्ट्वा निपातितं तत्र शोणितार्द्रं विचेतनं ॥ १ ॥
न्यस्तां भूमौ च वैदेहीं सारथिं चावलोकयन् ।
पिशाचवदनांस्तांश्च रथं मायामयं च तं ॥ २ ॥
रावणश्छत्रधारं च बालव्यजनधारिणौ ।
निहतान् गृध्रराजेन सोऽपश्यद्धरणीतले ॥ ३ ॥
2ab सा तु ताराधिपमुखी रावणेन परिक्षतं ।
2cd गृध्रराजं निपतितं विललाप सुदुःखिता ॥ ४ ॥
3ab निमित्तलक्षणज्ञानं शाकुनं स्वप्नदर्शनं ।
3cd अवश्यं सुखदुःखेषु नराणां प्रतिदृश्यते ॥ ५ ॥
त्वं हि तातो नरेन्द्रस्य राघवस्य महात्मनः ।
निधनं तव पक्षीन्द्र मत्कृते जातमीदृशं ॥ ६ ॥
त्वं हि राजा दशरथो मिथिलाधिपतिः पिता ।
त्वं हि नाथो नरेन्द्रस्य राघवस्य महात्मनः ॥ ७ ॥
भवता पक्षपातेन राघवस्य महात्मना ।
कृतं युद्धं महाप्राज्ञ प्राप्तश्चान्तः सुदारुणः ॥ ८ ॥
जीवन्तीं योऽपि मां रामे ब्रूयादेवं गतां सतीं ।
स शेते निहतो भूमौ कालोऽयं मरणस्य मे ॥ ९ ॥

नूनं रामो न जानाति मद्व्यसनमागतं ।
न चासौ खलु काकुत्स्थः सज्यधन्वात्र चारिणां ॥१०॥
सकृद्रामं पुनः श्वश्रूं तथा लक्ष्मणमेव च ।
संत्रस्ता सा तु वैदेही क्रन्दति स्म पुनः पुनः ॥११॥
तां क्लिष्टमाल्याभरणां विवर्णवदनां पुनः ।
अभ्यधावत वैदेहीं रावणो राक्षसाधिपः ॥१२॥
पादपाग्रेषु सज्जन्तीमालिङ्गन्तीं महाद्रुमान् ।
मुञ्च मुञ्चेति बहुशः क्रोशन्तीं मधुरस्वरां ॥१३॥
तां तु क्षामस्वरां दीनां रामेण रहितां वने ।
जीवितान्ताय केशेषु जग्राहान्तकसंनिभः ॥१४॥
क्लिष्टाश्च व्यथिताश्चासन् समस्ताः परमर्षयः ।
दृष्ट्वा सीतां परामृष्टां दण्डकारण्यवासिनः ॥१५॥
प्रधर्षितायां सीतायां बभूव सचराचरं ।
जगत् सर्वममर्यादमन्धेन तमसावृतं ॥१६॥
दृष्ट्वा सीतां परामृष्टां दीनां दिव्येन चक्षुषा ।
कृतं कार्यमिति श्रीमान् व्याजहार पितामहः ॥१७॥
स तु तां राम रामेति रुदन्तीं लक्ष्मणेति च ।
जगामाकाशमादाय रावणो जनकात्मजां ॥१८॥
तप्ताभरणजुष्टाङ्गी पीतकौषेयवाससी ।
राजपुत्री रराजाथ व्योम्नि सौदामिनी यथा ॥१९॥

14ab उद्धूतेन च वस्त्रेण तस्याः पीतेन रावणः ।
14cd अधिकं परिबभ्राज गिरिर्दीप्त इवाग्निना ॥ २० ॥
नीलजीमूतवर्णाभस्तप्तकाञ्चनकुण्डलः ।
वायुक्षिप्त इवादाय भाति सौदामिनीं घनः ॥ २१ ॥
तस्याः कौषेयमुद्धूतमाकाशे रजतप्रभं ।
बभूवादित्यरागेण ताम्रमभ्रमिवातपे ॥ २२ ॥
15ab तस्याः परमकल्याण्यास्ताम्राणि सुरभीणि च ।
15cd च्युतानि पद्मपत्राणि रावणं समवाकिरन् ॥ २३ ॥
अनसूयया यद्दत्तं दिव्यमाच्छादनं तथा ।
अङ्गरागः स्रजश्चैव गगने तदशोभत ॥ २४ ॥
16ab तस्यास्तद्विमलं वक्त्रमाकाशे रावणाङ्कगं ।
16cd बभूव जलदं नीलं भित्त्वा चन्द्र इवोदितः ॥ २५ ॥ 18ab
19ab सा हेमवर्णा नीलाङ्गं मैथिली राक्षसाधिपं । 21ab
19cd शुशुभे काञ्चनी काञ्ची नीलं मणिमिवाश्रिता ॥ २६ ॥ 21cd
20ab सा पद्मवर्णा मेघाभं रावणं जनकात्मजा । 22ab
20cd विद्युद्घनमिवाविध्य शुशुभे तप्तभूषणा ॥ २७ ॥ 22cd
22ab तस्या भूषणघोषेण वैदेह्या राक्षसाधिपः । 23ab
22cd बभूव गगने नीलः सघोष इव तोयदः ॥ २८ ॥ 23cd
23ab उत्तमाङ्गच्युता तस्याः पुष्पवृष्टिर्मनोहरा । 24ab
23cd सीताया ह्रियमाणायाः पपात धरणीतले ॥ २९ ॥ 24cd



सुललाटं सुकेशान्तं पद्मपत्राभमव्रणम् ।
उदितस्यापमृष्टास्रं चन्द्रवत् प्रियदर्शनम् ॥ 17 ॥
सुनासं चारुताम्रौष्ठमाकाशे कनकप्रभम् । 18ab
राक्षसेन्द्रसमाधूतं तस्यास्तद्वदनं शुभम् ॥ 18cd ॥
शुशुभे न विना रामं दिवा नक्तमिवोडुपः ॥ 18ef ॥

24ab सा तु रावणवेगेन समुद्भूता समन्ततः ।
पुष्पवृष्टिर्दशग्रीवं पुनरेवाभ्यवर्षत ॥ ३० ॥
24cd अभ्यवर्षत पुष्पाणां धारा वैश्रवणानुजं ।
25ab तरुप्रवरमुक्तेव पुष्पवृष्टिर्महीधरं ॥ ३१ ॥
चरणान्नूपुरं भ्रष्टं वैदेह्याः पावकोपमं ।
विद्युन्मण्डलसंकाशं पपात धरणीतले ॥ ३२ ॥
निष्टप्तकनकाभा सा नीलाङ्गं राक्षसाधिपं ।
शोभयामास वैदेही गजं कक्षेव काञ्चनी ॥ ३३ ॥
तां महोल्कामिवाकाशे दीप्यमानां स्वतेजसा ।
जहाराकाशमाविश्य सीतां वैश्रवणानुजः ॥ ३४ ॥
26ab तस्यास्तान्यग्निवर्णानि भूषणानि महीतले ।
26cd सद्यः खान्निर्व्यशीर्यन्त क्षीणास्तारा इवाम्बरात् ॥ ३५ ॥
30ab विशीर्णः पाण्डरः श्रीमांस्तस्या हारः स्तनान्तरात् ।
30cd वैदेह्या निपतन् भाति गङ्गेव नभसश्च्युता ॥ ३६ ॥
31ab ततस्तु वाताभिहता नानाद्विजकुलावृताः ।
31cd मा भैषीरिति धूताग्रा व्याजह्रुरिव पादपाः ॥ ३७ ॥
32ab नलिन्यो ध्वस्तकमलास्त्रस्तमीनजलेचराः ।
32cd वयस्या इव चामुष्याः शोचन्ति जनकात्मजां ॥ ३८ ॥
33ab तथा महावने क्रुद्धाः सिंहव्याघ्रमृगद्विपाः ।
33cd अन्वधावंस्तदा सीतां सर्वे छायानुगामिनः ॥ ३९ ॥

भूषणैर्विविधैः सा तु राक्षसेन्द्रमशोभयत् ॥25cd॥ नक्षत्रमाला विमला मेरुं नगमिवोत्तमम् ॥ 25 ॥
चरणान्नूपुरं भ्रष्टं वैदेह्याः पावकोपमम् । विद्युन्मण्डलसङ्काशं पपात मधुरस्वनम् ॥ 27 ॥
अशोभयत वैदेही गजकक्षेव काञ्चनी ॥ 28ab ॥
तां महोल्कामिवाकाशे दीप्यमानां स्वतेजसा । जहाराकाशमाविश्य सीतां वैश्रवणानुजः ॥ 29 ॥

34ab जलप्रपातविस्रुतैः शृङ्गैरुच्छ्रितबाहवः ।
34cd सीतायां ह्रियमाणायां विक्रोशन्तीव पर्वताः ॥ ४० ॥
35ab ह्रियमाणां तु वैदेहीं दृष्ट्वा दीनो दिवाकरः ।
35cd परिध्वस्तप्रभाजाल आसीत् पाण्डरमण्डलः ॥ ४१ ॥
36ab नास्ति धर्मः कुतः सत्यं नार्जवं नानृशंसता ।
36cd यत्र रामस्य वैदेहीं सीतां हरति रावणः ॥ ४२ ॥
37ab इति सर्वाणि भूतानि गगने पर्यदेवयन् ।
37cd दृष्ट्वा सीतां परामृष्टां रावणेन यशस्विनीं ॥ ४३ ॥
हा लक्ष्मणेति रामेति क्रोशन्तीं मधुराक्षरं ।
अवेक्षमाणां वैदेहीं बहुशो धरणीतलं ॥ ४४ ॥
40ab स तामाकुलकेशान्तां विप्रनष्टविशेषकां ।
40cd जहारात्मविनाशाय दशग्रीवो मनस्विनीं ॥ ४५ ॥
ततस्तु सा वै रुदती शुचिस्मिता
41ab विनाकृता बन्धुजनेन मैथिली ।
अपश्यती राघवलक्ष्मणावुभौ
41cd विवर्णवक्त्रा भयमोहमूर्छिता ॥ ४६ ॥

इत्यार्षे रामायणे आरण्यककाण्डे रावणप्रतिप्रयाणं नाम अष्टापञ्चाशः सर्गः ॥

त्रस्तका दीनमुखका उन्मुखा मृगपोतकाः ।
उद्वीक्ष्योद्वीक्ष्य नयनैरस्रुपाताविलेक्षणाः । 38 ॥
संप्रवेपितगात्राश्च बभूवुर्वनदेवताः ।
विक्रोशन्तीं भृशं सीतां दृष्ट्वा दुःखं तथागताम् ॥ 39 ॥

Li.E. III. 59.

## LIX.

गच्छन्ती साथ वैदेही रावणाङ्के मनस्विनी ।
5cd रोषरोदनताम्राक्षी भीमाक्षं राक्षसाधिपं ॥ १ ॥ 2ab
6ab रुदती रावणं सीता ह्रियमाणेदमब्रवीत् । 2cd
परमं खलु वीर्यं ते दृश्यते राक्षसाधिप ॥ २ ॥
7ab न व्यपत्रपसे नीच कर्मणानेन रावण । 3ab
7cd ज्ञात्वा विरहितां यो मां बलात् त्वं कर्तुमिच्छसि ॥ ३ ॥ 3cd
8ab त्वयैव नूनं दुष्टात्मन् भीरुणा कर्तुमिच्छता । 4ab
8cd ममापवाहितो भर्ता मृगरूपेण मायया ॥ ४ ॥ 4cd
9ab परमं खलु वीर्यं ते दृश्यते राक्षसाधिप । 5ab
9cd विश्राव्य नामधेयं ते युद्धेनास्मि विनिर्जिता ॥ ५ ॥ 5cd
रामस्य सदृशेनैव स्वरेण करुणं च यत् ।
विक्रुष्टं त्वत्प्रयोगोऽसावस्मद्धृदयतापनः ॥ ६ ॥
10ab ईदृशं गर्हितं कर्म कथं कृत्वा न लज्जसे । 6ab
10cd स्त्रियाश्च हरणं नीच रहिते च परस्य च ॥ ७ ॥ 6cd
11ab कथयिष्यन्ति ते लोके जनाः कर्म जुगुप्सितं । 7ab
11cd सुनृशंसमधर्मिष्ठं तव शौटीर्यमानिनः ॥ ८ ॥ 7cd
12ab धिक् ते वीर्यं च सत्त्वं च यत् त्वया कथितं स्वयं । 8ab
12cd कुलाक्रोशकरं लोके धिक् ते चारित्रमीदृशं ॥ ९ ॥ 8cd

खमुत्पतन्तं तं दृष्ट्वा मैथिली जनकात्मजा ।
दुःखिता परमोद्विग्ना भये महति वर्तते ॥ १ ॥
यो हि मामुद्यतस्त्रातुं सोऽप्ययं विनिपातितः ॥ 8cd ॥

2 – 5ab = Ṭi. 1010

13ab एवं गते तु किं शक्यं कर्तुं यस्त्वं पलायसे ।
13cd मुहूर्तमपि तिष्ठ त्वं न जीवन् प्रतियास्यसि ॥१०॥
14ab न हि चक्षुःपथं प्राप्य तयोः पुरुषसिंहयोः ।
14cd ससैन्योऽपि समर्थस्त्वं मुहूर्तमपि जीवितुं ॥११॥
15ab न त्वं शक्तः शरस्पर्शं तयोः सोढुं कथञ्चन ।
15cd वने प्रज्वलितस्येव स्पर्शमग्नेर्विहङ्गमः ॥१२॥
18ab येन त्वं व्यवसायेन बलान्मामभिवाञ्छसि ।
18cd व्यवसायः स ते पाप भविष्यति निरर्थकः ॥१३॥ 13 cd
19ab न ह्यहं तमपश्यन्ती भर्तारं विबुधोपमं । 14 ab
19cd उत्सहे शत्रुवशगा प्राणान् धारयितुं चिरं ॥१४॥ 14 cd
सत्यो लोकप्रवादोऽयं श्रूयते भुवि राक्षस ।
यदि ते न श्रुतं पूर्वं तरुण्याः श्रूयतां मम ॥१५॥
दीपनिर्वाणगन्धं च सुहृद्वाक्यमरुन्धतीं ।
न जिघ्रति मुमूर्षुर्यो न शृणोति न पश्यति ॥१६॥
20ab नूनं त्वं नात्मनः श्रेयः समवेक्षितुमिच्छसि । 15ab
शूरनाथवतीमेवं यो मां त्वं हर्तुमिच्छसि ॥१७॥
21cd मुमूर्षूणां हि सर्वेषां यत् पथ्यं तन्न रोचते । 16 ab
22ab पश्याम्येव हि कण्ठे त्वां कालपाशावपाशितं ॥१८॥ 16cd
22cd यथा चास्मिन् भयस्थाने न बिभेषि दशानन । 17 ab
23ab नूनं हिरण्मयान् मोहात् त्वं पश्यसि ~~महीरुहान्~~ ॥१९॥ 17 cd

मुञ्च मां रावणासाध्वो/साध्वो मुञ्चस्व रावण ।
कुप्या सिञ्चन्न्य शमनेन त्वरस्यसि यथा तथा ॥ 16 ॥
मत्प्रधर्षणरुष्टो हि सह भ्रात्रा पतिर्मम ।
विधास्यति विनाशं ते देशात् तेनापमोक्ष्यसे । 17 ॥
मृत्युकाले यथा मर्त्यो विपरीतानि सेवते । (21ab)

23cd नदीं वैतरणीं मृत्योः क्षारगम्भीरवाहिनीं ।
23ef खड्गपत्रबलं तत्र भीमं द्रक्ष्यसि रावण ॥ २० ॥
24ab तप्तकाञ्चनप्रख्यां च वैदूर्यहरितच्छदां ।
24cd द्रक्ष्यसे शाल्मलीं कीर्णां तीक्ष्णैरायसकण्टकैः ॥ २१ ॥
26ab बद्धस्त्वं कालपाशेन दुर्निवारेण रावण ।
26cd क्व गतो लप्स्यसे शर्म भर्तुर्मम महात्मनः ॥ २२ ॥
25ab न हि त्वमीदृशं कृत्वा तस्यामीवं दशानन ।
25cd जीवितुं शक्यसि चिरं विषं पीत्वेव दुर्मतिः ॥ २३ ॥
27ab निमेषान्तरमात्रेण विना भ्रात्रा महात्मना ।
27cd रक्षसां निहतान्याजौ सहस्राणि चतुर्दश ॥ २४ ॥
28ab स कथं राघवो वीरः सर्वास्त्रकुशलो बली ।
28cd न त्वां हन्याच्छरैस्तीक्ष्णै रिपुं भार्यापहारिणं ॥ २५ ॥
29ab एतच्चान्यच्च परुषं मैथिली रावणाङ्कगा ।
29cd दुःखशोकसमाविष्टा करुणं विललाप ह ॥ २६ ॥

तथा भृशार्त्तां बहुशस्तदातुरां
30ab विलापपूर्वां करुणाभिभाषिणीं ।
जहार पापः कृपणां सुदुःखितां
30cd विचेष्टमानां धृतवास्पवेपथुं ॥ २७ ॥

इत्यार्षे रामायणे आरण्यककाण्डे रावणभर्त्सनं नाम
नवपञ्चाशः सर्गः ॥

LX.

संभ्रान्तश्चैव संहृष्टः प्रगृह्य जनकात्मजां ।
जवेन महताविष्टः संप्रयातो नभस्तलं ॥ १ ॥
पूर्वां दिशं जनस्थानान्मूढचेता जगाम सः ।
जटायुषं निहत्यासौ घोरविक्रमशालिनं ॥ २ ॥
वीक्षमाणो दिशः सर्वा नेत्रैरनिमिषैरिव ।
संभ्रान्तोऽथ स दिङ्मूढः पम्पामभिमुखो ययौ ॥ ३ ॥
उपर्युपरि पम्पायामृष्यमूकं च पर्वतं ।
जगामादाय रुदतीं मैथिलीं राक्षसेश्वरः ॥ ४ ॥
क्रियमाणा तु वैदेही क्वचिन्नाथमपश्यती ।
ददर्श गिरिशृङ्गस्थान् पञ्च वानरपुङ्गवान् ॥ ५ ॥
तेषां मध्ये विशालाक्षी कौषेयं कनकप्रभं ।
उत्तरीयं वरारोहा शुभान्याभरणानि च ॥ ६ ॥
मुमोच यदि रामस्य शंसेयुरिति जानकी ।
वसुधासक्तनयना नेत्रजं वारि मुञ्चती ॥ ७ ॥
वस्त्रं सभूषणं क्षिप्रं तेषां मध्ये न्यपातयत् ।
संभ्रमात् तु दशग्रीवः सीतां नैवावबुद्धवान् ॥ ८ ॥
भूषणानि च सर्वाणि दिव्यं चूडामणिं विना ।
विसृजन्तीं वरारोहां तदा वानरसंनिधौ ॥ ९ ॥

पिङ्गाक्षास्ते विशालाक्षीं नेत्रैरनिमिषैरिव ।
विक्रोशन्तीं तदा सीतां ददृशुर्वानरर्षभाः ॥ १० ॥
5ab तस्या विचेष्टमानायाः शस्तं वसनमुत्तमं ।
5cd स्रजश्च विविधाश्छिन्नाः पेतुराभरणानि च ॥ ११ ॥
तानि वै कलधौतानि पावकार्चिर्निभानि च ।
नक्षत्रविमलाभानि निपेतुर्गिरिसानुषु ॥ १२ ॥
संभ्रमात् तु दशग्रीवो वैदेह्यीं नोपलब्धवान् ।
भूषणानि विधुन्वन्तीं तेषां मध्ये वनौकसां ॥ १३ ॥
ऋष्यमूकं तु दृष्ट्वा स पम्पां चैव निशाचरः ।
उपलभ्य दिशस्तत्र चकार गमने मतिं ॥ १४ ॥
6ab स तु पम्पामतिक्रम्य लङ्कामभिमुखः पुरीं । 6ab
6cd जगामादाय रुदतीं मैथिलीं राक्षसाधिपः ॥ १५ ॥ 6cd
8ab वनानि सरितः शैलान् सरांसि च विहायसा । 7ab
8cd क्षिप्रं समतिचक्राम चापाच्छर इव च्युतः ॥ १६ ॥ 7cd
11ab अन्तरीक्षगता वाचः ससृजुश्चारणास्तदा ।
11cd एतदन्तो दशग्रीव इति हृष्टतनूरुहाः ॥ १७ ॥
तिमिनक्रनिकेतं तु वरुणालयमक्षयं ।
क्षणेनैवातिचक्राम सागरं सरितां पतिं ॥ १८ ॥
10ab सधूमः परिवृत्तोर्मिः क्रुद्धमीनमहोरगः ।
10cd वैदेह्यां ह्रियमाणायां बभूव वरुणालयः ॥ १९ ॥

जहार तां सुसंहृष्टो रूपिणीं मृत्युमात्मनः ।
उत्सङ्गेनैव भुजगीं तीक्ष्णदंष्ट्रां महाविषाम् ॥ 7 ॥
मीननक्राकुलं तं तु वरुणालयमक्षयम् ।
सरितः समतिक्रम्य समतीयाय सागरम् ॥ 9 ॥

स सागरमतिक्रम्य लङ्कामासाद्य रावणः ।
विवेशादाय तां शीघ्रं सीतां मृत्युमिवात्मनः ॥ २० ॥
स प्रविश्य पुरीं लङ्कां सुविभक्तमहापथां ।
निदधे रावणः सीतां मयो मायामिवासुरः ॥ २१ ॥
संदिदेश दशग्रीवः पिशाचीर्घोरदर्शनाः ।
रक्षणार्थं समाहूय वैदेह्या राक्षसेश्वरः ॥ २२ ॥
कृताञ्जलिपुटाः सर्वाः सहिताः पुरतः स्थिताः ।
यथा नैनां पुमान् स्त्री वा सीतां पश्येदसंमतः ॥ २३ ॥
तथैव प्रयतितव्यमप्रमत्ताभिरेव हि ।
मणिमुक्तासुवर्णानि वस्त्राण्यजिनचन्दनं ॥ २४ ॥
यद्यदिच्छति वैदेही तद्देयं विदितं मया ।
या च वक्ष्यति वैदेहीं वचनं किञ्चिदप्रियं ॥ २५ ॥
अज्ञानाद्यदि वा ज्ञानान्न तस्या जीवितं प्रियं ।
तथा स राक्षसीरुक्त्वा राक्षसेन्द्रः प्रतापवान् ॥ २६ ॥
निष्क्रम्यान्तःपुरात् तस्थौ किं कृत्यमिति चिन्तयन् ।
स चिन्तयित्वा सुचिरं रावणो राक्षसेश्वरः ॥ २७ ॥
आजुहाव महावीर्यानष्टौ राक्षसपुङ्गवान् ।
स तान् भीमान् महावीर्यान् वरदानेन मोहितः ॥ २८ ॥
उवाच वचनं स्निग्धं प्रशस्य बलवीर्यतः ।
नानाप्रहरणाः क्षिप्रमितो गच्छत राक्षसाः ॥ २९ ॥

19cd जनस्थानं कृतस्थानं भूतपूर्वं खरालयं ।
20ab तत्रोष्यतां जनस्थाने शून्ये निहतराक्षसे ॥३०॥
20cd पौरुषं बलमाश्रित्य त्रासमुत्सृज्य दूरतः ।
21ab बलं हि सुमहद्यन्मे जनस्थाने निवेशितं ॥३१॥
21cd सदूषणाखरं संख्ये हतं तद्रामसायकैः ।
हतेन तेन महता मया सृष्टेन राक्षसाः ॥३२॥
22ab संजातं सुमहद्वैरं रामं प्रति सुदारुणं ।
23ab निर्यातयितुमिच्छामि वैरं तस्य दुरात्मनः ॥३३॥
23cd न हि लप्स्याम्यहं निद्रामहत्वा राघवं रणे ।
तस्माद्भवद्भिस्तत् कार्यं यथा बध्येत मे रिपुः ॥३४॥
24ab तमहं निहतं श्रुत्वा खरदूषणघातिनं । 24ab
24cd रामं शर्माभिगच्छेयं धनं लब्धेव निर्धनः ॥३५॥ 24cd
26ab जनस्थाने भवद्भिस्तु वसद्भी रामसंश्रया । 25ab
26cd प्रवृत्तिरुपनेतव्या किं करोतीति तत्वतः ॥३६॥ 25cd
27ab अप्रमादश्च कर्तव्यः सर्वैरेव निशाचरैः । 26ab
27cd कर्तव्यश्च सदा यत्नो राघवस्य बधं प्रति ॥३७॥ 26cd
28ab युष्माकं हि बलं ज्ञात्वा बहुशो रणकर्मणि । 27ab
28cd अतश्च विनियोगेऽस्मिन् भवन्तो विनियोजिताः ॥३८॥ 27cd
29ab ततः प्रियं वाक्यमवेक्ष्य राक्षसा यथार्थमष्टावभिवाद्य रावणं । 28ab
29cd विहाय लङ्कां सहिताः प्रतस्थिरे यतो जनस्थानमलक्ष्यदर्शनाः ॥३९॥

तस्य क्रोधान्महामर्षो वीर्यं च समवर्धत । 22ab । 28cd
मया हतस्य समरे चीरवल्कलधारिणः ।
क्रव्यादा भक्षयिष्यन्ति तस्याङ्गानि दुरात्मनः ॥25।

ततस्तु सीतां प्रतिलभ्य रावणः सुसंप्रहृष्टः परिगृह्य मैथिलीम् ।
प्रसह्य रामेण च वैरमुत्तमं मुदान्वितो राक्षसराड् बभूव ह ॥३०॥

LXI.

L.E. III. 61

1ab राक्षसांस्तु समादिश्य रावणोऽष्टौ महाबलान् ।
1cd आत्मानं बुद्धिदौर्बल्यात् कृतकृत्यममन्यत ॥ १ ॥
2ab स चिन्तयानो वैदेहीं कामबाणप्रपीडितः ।
2cd प्रविवेश गृहं रम्यं सीतां द्रष्टुमतित्वरन् ॥ २ ॥
संप्रविश्य तु तद्वेश्म रावणो राक्षसाधिपः ।
अपश्यद्राक्षसीमध्ये सीतां शोकपरायणां ॥ ३ ॥
4ab मृगयूथपरिभ्रष्टां मृगीं श्वभिरिवावृतां ।
4cd तां तु शोकवशां दीनां स बली राक्षसाधिपः ॥ ४ ॥
6ef विवशां दर्शयामास गृहं देवगृहोपमं ।
7ab हर्म्यप्रासादसंबाधं स्त्रीसहस्रनिषेवितं ॥ ५ ॥
7cd नानापक्षिगणैर्जुष्टं नानामृगसमाकुलं ।
8ab काञ्चनैस्तापनीयैश्च स्फाटिकै राजतैस्तथा ॥ ६ ॥
8cd वज्रवैदूर्यगर्भैश्च स्तम्भैर्दृष्टिमनोहरैः ।
आक्रीडालंकृतं स्फीतं सुविभक्तं सुसंस्कृतं ॥ ७ ॥
चन्द्रार्कपथमावृत्य स्थितं श्वेतघनोपमं ।
पर्वतस्येव शिखरं सुमेरोर्ज्वलितप्रभं ॥ ८ ॥
काञ्चनी वडभी यस्य सूर्यमार्गपथे स्थिता ।
अर्करश्मिप्रतिहता ज्वलदग्निचयोपमा ॥ ९ ॥

अश्रुपूर्णमुखीं दीनां मलिनामपि शोभिताम् ।
वायुवेगैरिवाक्रान्तां मज्जन्तीं नावमर्णवे ॥ 3 ।
चन्द्रलेखामिवाम्भोदैराच्छन्नामम्बरे निशि । [illegible] वनादुपानीतां त्रस्तां वत्सतरीमिव ॥ 5 ।
सर्वा दिशश्च वीक्षन्तीमथैत्य स निशाचरः । [illegible] बलवान् राक्षसेश्वरः ॥ 6 ।
दिव्यदुन्दुभिनिर्ह्रादं तप्तकाञ्चनतोरणम् । 10ab ।

प्रासादः पाण्डरो यस्य तप्तकाञ्चनवेदिकः ।
काञ्चनाङ्गदसंवीतः कान्तेन्दुरिव दृश्यते ॥ १० ॥
क्वचित् काञ्चनसंबाधं क्वचिद्रजतवेदिकं ।
क्वचिन्मणिविचित्रं च मुक्ताफलविभूषितं ॥ ११ ॥
सोपानं काञ्चनं चित्रमारुह्याथ तया सह ।
दर्शयामास तत् तस्या रामपत्न्या गृहोत्तमं ॥ १२ ॥
दान्तिकै राजतैश्चैव गवाक्षैः प्रियदर्शनैः ।
हेमजालावृतैश्चैव रम्यैः सायवितानकैः ॥ १३ ॥
पुष्पकं च विमानं तु दैवं सद्मनिवेशितं ।
अदर्शयद्दशग्रीवः कामगं कामरूपिणं ॥ १४ ॥
मुक्तामणिविचित्रांश्च भूमिभागांस्ततस्ततः ।
दशग्रीवः स्वभवने दर्शयामास राक्षसः ॥ १५ ॥
चित्रशालाश्च विविधाः कृत्रिमांश्चैव पर्वतान् ।
रम्यान् क्रीडागृहांश्चैव सोऽदर्शयदितस्ततः ॥ १६ ॥
तप्तकाञ्चनसोपाना वापीः कमलपिङ्गलाः ।
दीर्घिकाः पुष्करिणीश्च नानावृक्षसमाकुलाः ॥ १७ ॥
रावणो दर्शयामास नानापतगसंवृताः ।
नन्दनप्रतिमान्येव तथैवोद्यानकान्यपि ॥ १८ ॥
प्रहृष्टः सोऽप्यहृष्टां तां विवशां राक्षसो बलात् ।
रावणः पश्य पश्येति दीनास्यामब्रवीत् पुनः ॥ १९ ॥

13 ab दर्शयित्वा त्वकामाया वैदेह्यास्तद्गृहोत्तमं ।
13 cd उवाच वाक्यं पापात्मा रावणो जनकात्मजां ॥ २० ॥
शृणु मैथिलि वाक्यं मे यत् त्वां वक्ष्यामि भाविनि ।
प्रमाणं कथयिष्यामि राक्षसानां वरानने ॥ २१ ॥
14 ab त्रिंशत्कोटिसहस्राणि द्वात्रिंशद्रक्षसां तथा ।
द्विस्तावच्च पिशाचानां येषामहमिहेश्वरः ॥ २२ ॥
15 ab तेषामपि च शूराणां संग्रामेष्वनिवर्तिनां ।
एकैकस्य पृथक् संख्ये सहस्रमनुयायिनां ॥ २३ ॥
लङ्कायां विषयान्तेषु राक्षसा घोरविक्रमाः ।
देवदत्तवराः सर्वे समरेष्वनिवर्तिनः ॥ २४ ॥
तेषां शतसहस्राणि द्वे च त्रीणि च पञ्च च ।
एकैकस्य विशालाक्षि सप्तचत्वारि पृष्ठतः ॥ २५ ॥
16 ab एतन्मे सुमहत् सैन्यमक्षयं रिपुनाशनं ।
16 cd वर्जयित्वा जरावृद्धान् बालांश्च रजनीचरान् ॥ २६ ॥
ऋद्धस्फीतजनपदा लङ्केयं नगरी शुभा ।
कोषश्च विपुलो भद्रे रत्नानि च सहस्रशः ॥ २७ ॥
17 ab तदिदं राष्ट्रतन्त्रं मे त्वयि सर्वं प्रतिष्ठितं । 16 ab
17 cd जीवितं च विशालाक्षि त्वं हि प्राणैर्गरीयसी ॥ २८ ॥ 16 cd
18 ab बहूनि स्त्रीसहस्राणि मम यानि परिग्रहः । 17 ab
18 cd तेषां त्वमीश्वरी सीते मम चैव भवेश्वरी ॥ २९ ॥ 17 cd

येषां प्रभुरहं सीते शूराणां भीमकर्मणाम् ॥ 14 cd ॥
सहस्रमेकमेकस्य समीपुर्थे पुरःसरा४ ॥ 15 cd ॥

साधु किं तेऽन्यया बुद्ध्या रोचयस्व वचो मम ।
भद्रे कामाभितप्तस्य प्रसादं कुरु जानकि ॥ ३० ॥
परिक्षिप्ता समुद्रेण लङ्का वै शतयोजना ।
नेयं धर्षयितुं शक्या सेन्द्रैरपि सुरासुरैः ॥ ३१ ॥
न देवेषु न यक्षेषु न गन्धर्वपतत्रिषु ।
न तं पश्याम्यहं लोके यो मे प्रतिबलो भवेत् ॥ ३२ ॥
राज्यभ्रष्टेन दीनेन तापसेन गतायुषा ।
किं करिष्यसि रामेण मानुषेणाल्पतेजसा ॥ ३३ ॥
मामेव भज भद्रं ते भर्तारं सदृशं तव ।
अध्रुवं यौवनं भीरु रम तस्मान्मया सह ॥ ३४ ॥
रामसंदर्शनयुतां सीते बुद्धिं निवर्तय ।
कस्य शक्तिरिहागन्तुमपि स्वप्नमनोरथैः ॥ ३५ ॥
न शक्यो वायुराकाशे पाशैर्बन्द्धुं मनोजवः ।
दीप्यमानस्य वा वह्नेर्ग्रहीतुं विमलाः शिखाः ॥ ३६ ॥
न तं पश्यामि पुरुषं त्रिषु लोकेषु मैथिलि ।
विक्रमेण नयेद्यस्त्वां मद्बाहुपरिपालितां ॥ ३७ ॥
लङ्कायां सुमहद्राज्यमिदं प्राप्य सुदुर्लभं ।
अभिषेकोदकक्लिन्ना हृष्टा रम मया सह ॥ ३८ ॥
दुष्कृतं यत् पुरा कर्म वनवासेन तद्गतं ।
यच्च ते सुकृतं कर्म तस्येदं फलमाप्नुहि ॥ ३९ ॥

29 ab इह सर्वाणि माल्यानि दिव्यगन्धानि मैथिलि ।
29 cd भूषणानि च मुख्यानि निषेवस्व मया सह ॥ ४० ॥
30 ab पुष्पकं नाम सुश्रोणि भ्रातुर्वैश्रवणस्य मे ।
30 cd विमानं सूर्यसंकाशं तरसा निर्जितं मया ॥ ४१ ॥
31 ab विशालं रमणीयं च तद्विमानं मनोजवं ।
31 cd तत्र सीते मया सार्धं विहरस्व यथासुखं ॥ ४२ ॥
32 ab अमलं पद्मसंकाशं वदनं चारुदर्शनं ।
32 cd शोकार्तं तव रम्भोरु भ्राजते न वरानने ॥ ४३ ॥
इत्युक्तायां मुखं तस्याः पूर्णचन्द्रसमप्रभं ।
दग्धं विरूपतां यातं तद्वाक्येन च वह्निना ॥ ४४ ॥
तस्या विवर्णतां दृष्ट्वा रावणो लोकरावणः ।
अब्रवीद्वचनं तत्र सान्त्वयित्वा नृपात्मजां ॥ ४५ ॥
33 ab अलं व्रीडेन वैदेहि धर्मतापकृतेन ते । 32 ab
33 cd कर्णोऽयं देवि विस्पष्टो यस्त्वामुपगमिष्यति ॥ ४६ ॥ 32 cd
34 ab एतौ पादौ मया स्निग्धौ शिरोभिरवपीडितौ । 33 ab
34 cd प्रसादं कुरु मे क्षिप्रं पश्य दासोऽहमस्मि ते ॥ ४७ ॥ 33 cd
35 ab नेमाः शून्याः कृथा वाचः शुष्यमाणेन भाषिताः । 34 ab
35 cd न चापि रावणो याचेन्मूर्ध्ना काञ्चिदपि स्त्रियं ॥ ४८ ॥ 34 cd
36 ab एवमुक्त्वा दशग्रीवो मैथिलीं जनकात्मजां । 35 ab
36 cd कृतान्तवशमापन्नो ममेयमिति मन्यते ॥ ४९ ॥ 35 cd
सान्त्वयित्वैवंप्रेक्ष्य तां सीतां रावणो विरराम ह ॥ 37ab ॥

L. E. III. 62. 62 = LXII.

1 ab सा तथोक्ता तु वैदेही निर्भया शोककर्षिता ।
1 cd तृणमन्तरतः कृत्वा रावणं वाक्यमब्रवीत् ॥ १ ॥
2 ab राजा दशरथो नाम धर्मसेतुरिवाचलः ।
2 cd सत्यसंधः परिख्यातो यस्य पुत्रः स राघवः ॥ २ ॥
3 ab रामो नाम स धर्मात्मा त्रिषु लोकेषु विश्रुतः ।
3 cd दीर्घबाहुर्विशालाक्षो दैवतं स पतिर्मम ॥ ३ ॥
4 ab इक्ष्वाकूणां कुले जातः सिंहस्कन्धो महाबलः ।
4 cd लक्ष्मणेन सह भ्रात्रा स ते प्राणान् हरिष्यति ॥ ४ ॥
5 ab प्रत्यक्षं यद्यहं तस्य भवेयं वै हृता त्वया ।
सुव्यक्तं त्वं सह प्राणैर्मुच्येथाश्चैव मां युधि ॥ ५ ॥
6 ab यानि ते राक्षसास्त्राणि घोराणि च बहूनि च ।
6 cd तानि रामेऽफलानि स्युः सुपर्णो पन्नगा इव ॥ ६ ॥
7 ab तस्य ज्याविप्रमुक्तास्तु शराः काञ्चनभूषणाः ।
7 cd शरीरं विधमिष्यन्ति गङ्गाकूलमिवोर्मयः ॥ ७ ॥
8 ab असुरैर्वा सुरैर्वा त्वं यदि रावण रक्ष्यसे ।
9ab उत्पाद्य सुमहद्वैरं जीवंस्तस्य न मोक्ष्यसे ॥ ८ ॥
तं विरोध्य महात्मानं राघवं रघुनन्दनं ।
प्रेषितस्तच्छरैराशु गन्तासि यमसादनं ॥ ९ ॥
शयिष्यसे त्वं जनस्थाने यथा संख्ये हतः खरः ॥ 5cd ॥
मृतः संख्ये च दुर्वृत्त सर्वैश्च ज्ञातिभिर्वृतः ॥ 8cd ॥

9cd स ते जीवितशेषस्य जीवनान्तकरो बली ।
10ab पशोर्व्युपगतस्येव जीवितं तव दुर्लभं ॥ १० ॥
11ab यदि पश्येच्च ते रामो रोषतीव्रेण चक्षुषा ।
11cd सुव्यक्तं तच्छरैर्दग्धो गच्छेराशु पराभवं ॥ ११ ॥
12ab यश्चन्द्रं नभसो भूमौ तरसा पातयेदिह ।
12cd सागरं शोषयेद्वापि स सीतां मोहयेदिह ॥ १२ ॥
सहस्ररश्मिरादित्यो दीप्तिं जह्यान्महातपाः ।
न तु मां मोह आगच्छेत् त्वं तु मोहाद्विमुह्यसे ॥ १३ ॥
अपि यास्ये क्षयं पाप न तु यास्यामि ते वशं ।
गतायुस्त्वं गतश्रीश्च गतसत्त्वो गतेन्द्रियः ॥ १४ ॥ 13ab
13cd लङ्का वैधव्यसंयुक्ता त्वत्कृतेन भविष्यति । 13cd
प्रत्यक्षं तस्य वीरस्य यो मामपहरेद्बलात् ॥ १५ ॥
तदेव बाणैर्निर्दग्धो नेमां वाचमुदीरयेः ।
14ab इदं पाप न ते कर्म सुखोदर्कं भविष्यति ॥ १६ ॥ 13ab
14cd याहं नीता विना भावं पतिहस्ताद्बलात् त्वया । 13cd
15ab स दिव्यभावसंपन्नो मम भर्ता महायशाः ॥ १७ ॥ 14ab
15cd निर्भयो वीर्यमाश्रित्य शून्ये वसति दण्डके । 14cd
15ef मां प्रधृष्य स ते कालः प्राप्तोऽयं राक्षसाधम ॥ १८ ॥ 17ab
आत्मनो रक्षसां चैव पुरस्यान्तःपुरस्य च । 17cd
16ab स ते दर्पं बलं वीर्यं मानं चैव निशाचर ॥ १९ ॥ 15ab



गतायुस्त्वं गतश्रीको गतसत्त्वो गतेन्द्रियः । 13ab

16cd अपनेष्यति गात्रेभ्यः शरवर्षेण संयुगे ।
17ab यदा विनाशकालो वै लक्ष्यते दैवनिर्मितः ॥ २० ॥
तदा वै विपरीतेषु मनः प्रकुरुते नरः ।
प्राप्तानुरागपुरुषो नयोऽयमिति मन्यते ॥ २१ ॥
स चानयं प्रकुर्वीत कृतान्तमतिमोहितः ।
मां प्रधृष्य स ते कालः संप्राप्तो दुरतिक्रमः ॥ २२ ॥
नैर्ऋतानां च सर्वेषां राक्षसाधम पापकृत् ।
19ab न शक्या यज्ञमध्यस्था वेदी स्रुग्भाण्डमण्डिता ॥ २३ ॥
19cd द्विजातिमन्त्रसंयुक्ता चाण्डालेनाभिमर्दितुं ।
राक्षसेन्द्र नरेन्द्रेण प्राकृतेन न धार्यते ॥ २४ ॥
20ab इदं शरीरं निःसंज्ञं पीड्यतां भक्ष्यतामपि । 19ab
20cd वर्तामि विषये तेऽहमिह क्रोधो विधीयतां ॥ २५ ॥
21ab नेदं शरीरं रक्षामि जीवितं वापि रावण । 19cd
21cd न तु शक्नोम्युपक्रोशं पृथिव्यां धातुमात्मनः ॥ २६ ॥ 19ef
22ab एवमुक्त्वा तु वैदेही क्रोधात् स परुषं वचः । 20ab
22cd रावणं मैथिली तत्र ततो नोवाच किञ्चन ॥ २७ ॥ 20cd
स सीताया वचः श्रुत्वा परुषं लोमहर्षणं । 21ab
25cd रावणः क्रोधरक्ताक्ष इदं वचनमब्रवीत् ॥ २८ ॥ 21cd
26ab शीघ्रमायान्तु राक्षस्यो विकृता घोरदर्शनाः । 24ab
26cd दर्पमस्या विनेष्यन्ति मांसशोणितभोजनाः ॥ २९ ॥ 24cd

तदानार्याः प्रवर्तन्ते नराः कालवशं गताः ॥ 17cd ॥
स प्रविश्य च ते कालः प्राप्तोऽयं राक्षसाधम ।
आत्मनो राक्षसानां च वधायान्तःपुरस्य च ॥ 18 ॥
प्रत्युवाच ततः सीतां स भयं दर्शयन् वचः ।
शृणु मैथिलि मद्वाक्यं मासद्वादशकेन वै ॥ 23 ॥

27ab आगतो वचनादेव तस्याथ राक्षसीगणः ।
27cd प्राञ्जलिर्वन्दयित्वा च मैथिलीं पर्यवारयत् ॥ ३० ॥
28ab निश्वासा राक्षसीनां तु कम्पयन्ति नभस्तलं ।
भीषणैश्चरणाकम्पैः कम्पयन्तीव मेदिनीं ॥ ३१ ॥
उवाच राक्षसीस्तास्तु स्फुरमाणाधराननाः ।
29ab अशोकवनिकामेव मैथिली नीयतामिति ॥ ३२ ॥
29cd तत्रेमां तर्जनैर्घोरैः पुनः सान्त्वैश्च योक्ष्यथ ।
30ab तत्रैव वसतां चापि युष्माभिः परिपालिता ॥ ३३ ॥
30cd आनयध्वं वशं सीतां वन्यां गजवधूमिव ।
31ab इति प्रतिसमादिष्टा राक्षस्यो रावणेन ताः ॥ ३४ ॥ 29ab
31cd अशोकवनिकां जग्मुर्मैथिलीं परिगृह्य तां । 29cd
32ab सर्वकामप्रदैर्वृक्षैर्नानापुष्पफलैर्वृतां ॥ ३५ ॥ 30ab
दिव्यगन्धैश्च कुसुमैः सुगन्धैः सर्वतो वृतां ।
सर्वकालमदैश्चैव नानापक्षिभिरावृतां ॥ ३६ ॥ 30cd
मकरन्दरससुसंवीतैः सलिलैश्च ततस्ततः ।
32cd सा तु शोकपरीताङ्गी मैथिली जनकात्मजा । 31ab
33ab राक्षसीनां वशं प्राप्ता व्याघ्रीणां हरिणी यथा ॥ ३७ ॥ 31cd
33cd न विन्दते तत्र तु शर्म मैथिली विरूपरूपाभिरुपेत्य रक्षिता । 32ab
33ef पतिं स्मरन्ती दयितं च देवरं विनिश्वसन्ती भयशोकपीडिता । ३८ । 32cd

कालेनाल्पेन नाश्योऽपि ... चारुहासिनी)
ततस्त्वां सत्वराः सर्वे तदा छेत्स्यन्ति खण्डशः ॥ 24 ।
स राक्षसान् समीपस्थान् क्रूरकर्मा निशाचरः । 25ab ।
स रावणः चरणोत्क्षेपैर्दारयन्निव मेदिनीम् ॥ 28cd ।

## LXIII.

प्रवेशितायां सीतायां लङ्कां प्रति पितामहः ।
ब्रह्मा प्रोवाच देवेन्द्रं परितुष्टः शतक्रतुं ॥ १ ॥
त्रैलोक्यस्य हितार्थाय रक्षसामहिताय च ।
लङ्कां प्रवेशिता सीता रावणेन दुरात्मना ॥ २ ॥
पतिव्रता महाभागा नित्यं चैव सुखोषिता ।
अपश्यन्ती च भर्तारं पश्यन्ती राक्षसानथ ॥ ३ ॥
राक्षसीभिस्तर्ज्यमाना भर्तृशोकेन चाकुला ।
निविष्टा च पुरीं लङ्कां द्वीपे नदनदीपतेः ॥ ४ ॥
कथं ज्ञास्यति मां राम इहस्थां धर्मचारिणीं ।
एवं सा चिन्तयन्ती च विवशा परिदुर्बला ॥ ५ ॥
प्राणयात्रामकुर्वाणा प्राणांस्त्यक्ष्यत्यसंशयं ।
स भूयः संशयो जातः सीतायाः प्राणधारणे ॥ ६ ॥
स त्वं शीघ्रमितो गत्वा सीतां सान्त्वय वासव ।
प्रयच्छास्याः प्रविश्य त्वं सीताया हविरुत्तमं ॥ ७ ॥
स एवमुक्तो देवेन्द्रः पुरीं रावणपालितां ।
अगच्छन्निद्रया सार्धं भगवान् पाकशासनः ॥ ८ ॥
उवाच निद्रे इह त्वं राक्षसीः संप्रमोहय ।
सा तथोक्ता भगवता देवी परमहर्षिता ॥ ९ ॥
देवराजस्य सिद्ध्यर्थं प्रास्वापयत राक्षसीः ।

10cd एतस्मिन्नन्तरे देवः सहस्राक्षः शचीपतिः ॥१०॥
11ab आससाद ततः सीतामभयं च ददौ प्रभुः ।
11cd देवराजोऽस्मि भद्रं ते पश्य मां त्वं शुचिस्मिते ॥११॥
12ab राघवस्य सह भ्रात्रा कुशलं जनकात्मजे ।
12cd आगमिष्यति धर्मात्मा लङ्कां रावणपालितां ॥१२॥
ऋक्षवानरकोटीनां सहस्रैरभिसंवृतः ।
निहत्य राक्षसान् सर्वान् स्वबाहुबलमाश्रितः ॥१३॥
नयिष्यति त्वां स्वपुरीं हत्वा रावणमाहवे ।
सानुजः सबलश्चैव राघवो जनकात्मजे ॥१४॥
सबलं रावणं हत्वा त्वामितो नेष्यते बली ।
पुष्पकेण विमानेन जहि त्वं मानसं ज्वरं ॥१५॥
13ab अहं च कार्यसिद्ध्यर्थं तस्य राज्ञो महात्मनः ।
13cd साहाय्यं कल्पयिष्यामि मा शुचो जनकात्मजे ॥१६॥
14ab मत्प्रसादात् समुद्रं हि तरिष्यति महाबलः ।
14cd मयैवेह स्म राक्षस्यो मायया मोहिताबले ॥१७॥
इदं मयोद्यतं तुभ्यं पायसं स्वादु चोत्तमं ।
गृह्य प्राश महाभागे मा च कालात्ययं कुरु ॥१८॥
16ab एतत् प्राश्य क्षुधा देवि न त्वां बाधिष्यते शुभे ।
16cd रुजाश्च घोरा धर्मिष्ठे वैवर्ण्यं वापि भाविनि ॥१९॥
17ab एवमुक्ता तु देवेन्द्रमुवाच परिशङ्किता ।

तस्माद्गृहाणमिदं सीते हविष्याभमहं स्वयम ।
थन्नात् संगृह्य वैदेही आगतः सहनिद्रया ॥15॥

18ab कथं ज्ञास्यामि देवेन्द्रं त्वामिहस्थं शचीपतिं ॥ २०॥
18cd देवलिङ्गानि यान्यासन् श्रुतानि गुरुसंनिधौ ।
19ab तानि मे दर्शय क्षिप्रं यदि त्वं देवराट् स्वयं ॥ २१॥
19cd सीताया वचनं श्रुत्वा तथा चक्रे स वासवः ।
20ab पृथिवीं नास्पृशत् पद्भ्यामनिमेषेक्षणो बभौ ॥ २२॥
21ab तं दृष्ट्वा देवराजं च संहृष्टा प्राह मैथिली ।
22ab यथा मे श्वशुरो राजा पिता च मिथिलेश्वरः ॥ २३॥
22cd तथा त्वामद्य पश्यामि सनाथो मे पतिस्त्वया ।
त्वया नाथेन देवेन्द्र दिष्ट्या जीवति राघवः ॥ २४॥
सह भ्रात्रा महावीर्य दिष्ट्या च श्रुतिरागता ।
23ab तवाज्ञया च देवेन्द्र पयोऽमृतमनुत्तमं ।
23cd प्राशिष्यामि त्वया दत्तं रघूणां कुलवर्धनं ॥ २५॥
24ab इन्द्रहस्तात् ततो गृह्य पायसं सा शुचिस्मिता ।
24cd न्यवेदयत भर्त्रे सा लक्ष्मणाय च मैथिली ॥ २६॥
25ab चिरं जीवतु मे भर्ता भ्रात्रा सह महाबलः ।
25cd इत्येवमुक्त्वा वैदेही प्राश्नीयात् पायसं शुभं ॥ २७॥
26ab तथा तु तत् प्राश्य वराननासौ जहौ तदा तृट्समुद्भवं क्लमं ।
27cd संश्राव्य वार्त्तां स पुनर्महेन्द्रो जगाम देव्यामुदितस्तदा सः ॥ २८॥
26cd इन्द्रात् प्रवृत्तिं प्रतिलभ्य सीता काकुत्स्थयोः प्रीतिमना बभूव ।
27ab स चापि देवो विबुधेशस्तदा प्रीत्या ययौ राघवकर्महेतौ ॥ २९॥

अरजोऽम्बरधारी च ह्यम्लानकुसुमस्तथा ॥ २० cd॥
उवाच वाक्यं रुदती भगवन् राघवः पतिः
सह भ्राता महाबाहुर्दिष्ट्या मे श्रुतिमागतः ॥ २१ ॥

## LXIV.

G.E III. 64.

1ab राक्षसं मृगरूपेण चरन्तं कामरूपिणं ।
1cd निहत्य रामो मारीचमथारण्यान्न्यवर्तत ॥ १ ॥
2ab तस्य संत्वरमाणस्य द्रष्टुकामस्य मैथिलीं ।
2cd क्रूरस्वरो भयंकरो गोमायुः पृष्ठतोऽनदत् ॥ २ ॥
3ab स तस्य स्वरमाज्ञाय व्याहृतं लोमहर्षणं ।
3cd रामः प्रोवाच गोमायोः स्वरेण परिशङ्कितः ॥ ३ ॥
4ab अशुभं वत रक्षोऽयं गोमायुर्वाशते यथा ।
4cd स्वस्ति स्यादपि वैदेह्या रक्षोभ्यो रक्षणं विना ॥ ४ ॥
5ab मारीचेन हि विज्ञाय स्वरमालम्ब्य मामकं ।
5cd प्रक्रुष्टं मृगरूपेण लक्ष्मणः शृणुयादिति ॥ ५ ॥
6ab तं सौमित्रिः स्वरं श्रुत्वा व्यक्तं हित्वैव मैथिलीं ।
6cd स्वरमाकर्ण्य संतप्तो भविष्यति विचेतनः ॥ ६ ॥
असहन्ती च विक्रुष्टं स्नेहात् पिहितमानसा ।
विवशं लक्ष्मणं सीता प्रेषयिष्यति विह्वला ॥ ७ ॥
तया च प्रेषितः क्षिप्रं मत्समीपं प्रतापवान् । 6 cd
नूनमेष्यति सौमित्रिः सीतावाक्यप्रचोदितः ॥ ८ ॥
नूनं रहसि रक्षोभिर्मैथिल्याश्चिन्तितो बधः । 7 ab
मारीचेन तथोत्क्रुष्टं स्वरमालम्ब्य मामकं ॥ ९ ॥
राक्षसेन हृता नूनमारण्यात्तः सीतया तदा ।
राक्षसेन मम क्रोधात् स्वर आवेदितस्तथा ॥ ५ ॥

8ab इतीव चिन्तयन् रामः श्रुत्वा गोमायुवाशितं ।
9ab न्यवर्तत तदा रामो जवेनाश्रममण्डलं ॥ १० ॥
9cd आत्मनश्चापनयनं चिन्तयन् परिशङ्कितः ।
10ab काञ्चनः स मृगो भूत्वा राक्षसोऽभूच्छराहतः ॥ ११ ॥
10cd हा लक्ष्मण हतोऽस्मीति यद्वाक्यं व्याजहार ह ।
तेन शब्देन रक्षोभिर्लब्धं हि ध्रुवमन्तरं ॥ १२ ॥
12ab अपि स्वस्ति भवेत् तस्यै रहितायै महावने ।
12cd जनस्थाननिमित्तं हि कृतवैरोऽस्मि राक्षसैः ॥ १३ ॥
13ab इति सीतां वरारोहां लक्ष्मणं च महाबलं ।
13cd आजगाम जनस्थानं चिन्तयन्नेव राघवः ॥ १४ ॥
तं दीनमानसं शून्यमासाद्य मृगपक्षिणः । 11ab
सव्यं चक्रुर्महात्मानं घोरांश्च ससृजुः स्वरान् ॥ १५ ॥ 11cd
तानि दृष्ट्वा निमित्तानि महाघोराणि राघवः । 12ab
14ab ततो लक्ष्मणमायान्तं ददर्श विगतप्रभं ॥ १६ ॥ 12cd
15ab स्वयं दीनतरो दीनं मुखेन परिशुष्यता ।
15ab विषण्णं तं विषण्णो वै दुःखितं दुःखितोऽब्रवीत् ॥ १७ ॥ 13cd
17ab अहो लक्ष्मण वाच्याः स्म त्वयेहागच्छता कृताः । 16ab
17cd सीतां विहाय तां शून्ये वने राक्षससेविते ॥ १८ ॥ 16cd
18ab नास्ति मे संशयो वीर सर्वथा जनकात्मजा । 17ab
18cd विनष्टा भक्षिता वापि राक्षसैर्वनसेविभिः ॥ १९ ॥ 17cd

आत्मनश्चापनयनं मृगरूपेण राक्षसा ॥ 8cd ॥
एतद् दृष्ट्वा महाघोरं निमित्तं महदद्भुतम् ।
सीतामेव जनस्थाने जगाम मनसा प्रियाम् ॥ ॥
अविदूरेऽथ रामेण समियाय स लक्ष्मणः ॥ 14cd ॥

18ef अशुभाश्चैव भूयिष्ठा यथा प्रादुर्भवन्ति नः ।
उत्पाता अपि वैदेहीं समग्रां प्राप्नुयामहि ॥ २० ॥
अयं हि सत्त्वो मृगसंनिकाशः
19ab प्रलोभयन् मामपकृष्य दूरं ।
हतः कथञ्चिन्महता श्रमेण
19cd मृगत्वमुत्सृज्य बभूव राक्षसः ॥ २१ ॥

इत्यार्षे रामायणे आरण्यककाण्डे सीतालङ्काप्रवेशो नाम षष्टितमः सर्गः — सीतानुनयो नाम एकषष्टितमः सर्गः — सीताविभूतिदर्शनं नाम द्विषष्टितमः सर्गः — सीतासमाश्वासो नाम त्रिषष्टितमः सर्गः — लक्ष्मणसंदर्शनं नाम चतुःषष्टितमः सर्गः ॥

विजनेऽथ तं भ्राता ज्येष्ठो लक्ष्मणमागतम् ॥ 15cd ॥
गृहीत्वा च करे सव्ये लक्ष्मणं लक्ष्मणाग्रजः । 16ab ।
उवाच रामो वचनमिदं तर्केण बुद्धिमान् ॥ 16cd ॥
तथापि भ्राता विपिने त्यक्ता त्वया मया रहिता मानपुत्री ।
असंशयं लक्ष्मण नास्ति सीता हृता मृता व्याघ्रैश्च भक्षिता वा ॥ 20 ।

## LXV.

L. E. III. 65

तथोक्ता लक्ष्मणं सोऽथ रामो दीनो भयाकुलः ।
पर्यपृच्छत् ततः शून्यं वैदेह्या तं विनागतं ॥ १ ॥
प्रस्थितं दण्डकारण्यं या मामनुजगाम ह ।
क्व सा लक्ष्मण वैदेही यां हित्वा त्वमिहागतः ॥ २ ॥
राज्यभ्रष्टस्य दीनस्य दण्डकं परिधावतः ।
क्व सा दुःखसहाया मे वैदेही तनुमध्यमा ॥ ३ ॥
यां विना नोत्सहे सौम्य मुहूर्तमपि जीवितुं ।
क्व सा प्राणसमा मेऽद्य सीता सुरसुतोपमा ॥ ४ ॥
सिद्धत्वममरत्वं वा पृथिवीं वापि लक्ष्मण ।
विना तां नवहेमाभां नेच्छेयं जनकात्मजां ॥ ५ ॥
कच्चिज्जीवति वैदेही प्राणैः प्रियतरा मम ।
कच्चित् प्रव्रजनं सौम्य न मे मिथ्या भविष्यति ॥ ६ ॥
कच्चित् सकामा सुखिनी कैकेयी न भविष्यति ।
सीतानिमित्तं सौमित्रे मृते वनगते मयि ॥ ७ ॥
यदि जीवति वैदेही गमिष्यामि पुरीं पुनः ।
सुवृत्ता यदिवा वृत्ता प्राणांस्त्यक्ष्यामि लक्ष्मण ॥ ८ ॥
यदि मामाश्रमगतमभिभाषेत मैथिली ।
पुनः प्रहसिता बाला न विनङ्क्ष्यामि लक्ष्मण ॥ ९ ॥

सा पुत्रराज्यसिद्धार्था मृतपुत्रा तपस्विनी ॥7cd॥
उपस्थास्यति कौसल्या कच्चित् सौम्य न कैकयीम् ।8ab।

9cd बूहि लक्ष्मण वैदेही यदि जीवति वा न वा ।
10ab सीता त्वया प्रमुक्ता सा भक्षिता वा निशाचरैः ॥१०॥
10cd सुकुमारी च बाला च नित्यं चादुःखदर्शिनी ।
11ab मद्वियोगेन वैदेही दुःखं शोचति दुःखिता ॥११॥
11cd सर्वथा रक्षसा तेन जिह्मेन सुदुरात्मना ।
12ab वदता लक्ष्मणेत्युच्चैस्तवापि जनितं भयं ॥१२॥
12cd श्रुतश्च शङ्के वैदेह्या स स्वरः सदृशो मम ।
13ab त्रस्तया प्रेषितस्त्वं च द्रष्टुं मां शीघ्रमागतः ॥१३॥
13cd सर्वथा ते कृतं वाच्यं सीतामुत्सृजता वने ।
13ef प्रतिकर्तुं नृशंसानां रक्षसां दत्तमन्तरं ॥१४॥
14ab निश्चिताः खरघातेन राक्षसाः पिशिताशनाः ।
14cd तैः सीता भक्षिता घोरैर्भविष्यति न संशयः ॥१५॥
15ab अपारेऽस्मिन् वयं मग्नाः सर्वथा शोकसागरे ।
15cd किं विदानीं करिष्यामः प्राप्ता व्यसनमीदृशं ॥१६॥
16ab इति सीतां वरारोहां चिन्तयन्नेव राघवः ।
16cd आजगाम जनस्थानं त्वरमाणः सलक्ष्मणः ॥१७॥ 18cd
19ab विगर्हयन् लक्ष्मणमाययौ तदा स्वमाश्रमं क्षुत्श्रमशोककर्षितः । 19ab
19cd विनिश्वसन् शुष्कमुखस्वरान्वितः प्रतिश्रयं शून्यमथाससाद सः ।१८। 19cd
20ab स्वमाश्रमं तं प्रविगाह्य वीरो विहारदेशाननुसृत्य सर्वान् । 20ab
20cd एतत् तदेवेति निवासमध्ये प्रहृष्टरोमा व्यथितो बभूव ॥१९॥ 20cd

अगच्छन् पथि काकुत्स्थो निमित्तान्युपलक्ष्य वै ।
इदं चैरपदृष्टैः स त्रस्तो लक्ष्मणमब्रवीत् ॥ १७ ॥
अशुभान्येव हि लक्षणानि प्रादुर्भवन्त्यत्र ममाशुभानि ।
आशासमूलानि न दीर्घकालमाशिं प्रदास्यन्ति न सीतया मे ॥ १८ ॥
विगर्हमाणो ह्यनुजोत्तमं वै श्रमात् क्षुधा चैव पिपासया च ।
विनिःश्वसन् शुष्कमुखो विषण्णः प्रतिश्रयं प्राप्य समीक्ष्य शून्यम् ॥ १९ ॥

## LXVI.

LoVE, III. 66.

1ab अथाश्रमं समन्विष्य अन्तरा रघुनन्दनः । 1ab
1cd परिपप्रच्छ सौमित्रिं रामो दुःखसमन्वितः ॥ १ ॥ 1cd
सा यदा तव विश्वासान्मैथिली रक्षिते शुभा । 2ab
न्यासधर्मान्मया दत्ता वने राक्षससेविते ॥ २ ॥
2ab कथं त्वं तां समुत्सृज्य मत्समीपमुपागतः ।
तवैवागमनान्मेऽद्य सीतां संत्यज्य लक्ष्मण ॥ ३ ॥ 3ab
शङ्कमानं महत् पापं यत् सत्यं व्यथितं मनः । 3cd
2cd स्पन्दते नयनं सव्यं बाहुश्च हृदयं च मे ॥ ४ ॥ 4ab
3ab दृष्ट्वा लक्ष्मण दूरात् त्वां सीताविरहितं वने । 4cd
3cd एवमुक्तस्तु सौमित्रिर्लक्ष्मणः शुभलक्षणः ॥ ५ ॥ 5ab
4ab दुःखशोकसमाविष्टो राघवं वाक्यमब्रवीत् । 5cd
4cd न स्वयं कामकारेण तीतां त्यक्त्वा समागतः ॥ ६ ॥ 6ab
प्रदेशितस्तयैवाहं ततस्त्वां समुपागतः । 6cd
5ab आर्येण हि परिक्रुष्टं लक्ष्मणेति सुविस्तरं ॥ ७ ॥ 7ab
5cd परित्राहीति यद्वाक्यं मैथिल्यास्तच्छ्रुतिं गतं । 7cd
6ab सा तु चार्तस्वरं श्रुत्वा भर्तृस्नेहेन मैथिली ॥ ८ ॥ 8ab
6cd गच्छ गच्छेति मामाह रुदती भयविह्वला । 8cd
8ab प्रदिश्यमानेन तया गच्छेति बहुशस्तदा ॥ ९ ॥ 9ab

8cd. प्रत्युक्ता मैथिली वाक्यं मया त्वत्प्रियकाम्यया ।
9ab न तं पश्याम्यहं सीते यस्तस्य भयमानयेत् ॥ १० ॥
9cd विर्वृता भव नास्त्येतच्छङ्के केनाप्युदाहृतं ।
10ab विगर्हितं च दीनं च कथमार्यो ऽभिधास्यति ॥ ११ ॥
10cd त्रायस्वेति वचः सीते यस्त्राता त्रिदशानपि ।
11cd किंनिमित्तं तु केनापि भ्रातुरालम्ब्य मे स्वरं ॥ १२ ॥
विस्वरं व्याहृतं वाक्यं सौमित्रे पाहि मामिति ।
अलं वैक्लव्यमागत्य सुस्था भव निरुत्सुका ॥ १३ ॥
13ab न सो ऽस्ति त्रिषु लोकेषु पुमान् यो राघवं रणे । 13 cd
13cd जातो वापि जनिष्यो वा संग्रामे यः पराभवेत् ॥ १४ ॥ 13 cd
14ab एवमुक्ता तु वैदेही परिमोहितमानसा । 14 ab
14cd उवाचाश्रूणि मुञ्चन्ती तदा मां परुषं वचः ॥ १५ ॥ 14 cd
15ab भावो मयि त्वात्यर्थं पापभावो ऽसि लक्ष्मण । 15 ab
15cd विनाशं भर्तरि प्राप्ते न त्वेनां समवाप्स्यसि ॥ १६ ॥ 15 cd
16ab प्रहितो भरतेन त्वं रामं समनुगच्छसि । 16 ab
16cd क्रोशमानं तथा हि त्वं नैनमभ्युपपद्यसे ॥ १७ ॥ 16 cd
इयं मृते भ्रातरि मे मयि वत्स्यति मैथिली ।
न चाहमाशां कुर्यां ते पाप प्रच्छन्नचारक ॥ १८ ॥
17ab नूनं प्रच्छन्नरूपस्त्वं रामं समनुगच्छसि । 17 ab
17cd राघवस्यान्तरप्रेप्सुस्तथैनं नाभिपद्यसे ॥ १९ ॥ 17 cd

शृण्वन्ती चापि तं वाक्यं रुक्षभीमस्वरमथ ।
विस्वरं प्रतिमुञ्चन्ती जलार्द्रोमित दुन्दुभिम् ॥7।
मा मा: श्रुत्वा च वैक्लव्यं स्वस्था भव निरुत्सुका । 11ab)
न भवत्का यथा कार्या कुनार्यजनसेविता ॥ 12cd)
त्रायस्व व्याहृतं वाक्यं लक्ष्मणेति सुदुःखितम् ॥ 12ab)

18ab एवमुक्तस्तु वैदेह्या संरब्धो रक्तलोचनः ।
18cd क्रोधात् प्रस्फुरमाणौष्ठो निःसृतोऽहमथाश्रमात् ॥ २० ॥
19ab एवं ब्रुवाणं सौमित्रिं रामः संतापमोहितः ।
19cd अब्रवीद्दुष्कृतं सौम्य यस्त्वमागम आश्रमात् ॥ २१ ॥
20ab जानन्नपि वनस्थं मां रक्षसां विनिवारणे ।
20cd अनेन क्रोधवाक्येन मैथिल्या निःसृतो भवान् ॥ २२ ॥
21ab न तेऽहं परितुष्यामि त्यक्त्वा यदसि मैथिलीं ।
21cd क्रुद्धायाः परुषं वाक्यं स्त्रियाः श्रुत्वा विशेषतः ॥ २३ ॥
22ab सर्वथा त्वपनीतं ते सीताया यत् प्रदेशितः ।
22cd क्रोधस्य वशमागत्य माकृथा वचनं मम ॥ २४ ॥
23ab असौ स राक्षसः शेते शरेणाभिहतो मया ।
23cd मृगरूपेण येनाहमाश्रमादपवाहितः ॥ २५ ॥

शराहतेन व्यथितस्तया गिरा
25ab स्वरं समालम्ब्य विदूरसंश्रवं ।
उदाहृतं तद्वचनं सुदारुणं
25cd त्वमागतो येन विसृज्य मैथिलीं ॥ २६ ॥

इत्यार्षे रामायणे आरण्यककाण्डे रामोपयानं नाम
पञ्चषष्टितमः सर्गः — लक्ष्मणगर्हणं नाम
षट्षष्टितमः सर्गः ॥

विकृष्य चापं प्रणिधाय सायकं
स एष बाणेन हि ताडितो मया ।
मृगत्वमुत्सृज्य च विस्वरस्वरो
बभूव केयूरधरो निशाचरः ॥ २५ ॥

L.E. III. 67.
S.E. III. 68.

68 = LXVII. = 59

1ab स तु दृष्ट्वा जनस्थानं शून्यं दशरथात्मजः ।
1cd रक्षितां पर्णशालां च प्रविद्धान्यासनानि च ॥१॥
2ab अदृष्ट्वा तत्र वैदेहीं स निरीक्ष्य च सर्वशः ।
2cd अब्रवील्लक्ष्मणं दीनो मुखेन परिशुष्यता ॥२॥
3ab क्व सा लक्ष्मण वैदेही कं वा देशमुपागता ।
3cd हृता वा केन सौमित्रे भक्षिता वा तपस्विनी ॥३॥
4ab तथा दृष्ट्वा जनस्थानं रुदन्तमिव सर्वतः ।
4cd उवाच रामः प्रक्रुश्य प्रगृह्य रुचिरौ भुजौ ॥४॥
5ab वृक्षेणावार्य यदि मां सीते हसितुमिच्छसि ।
5cd अलं ते हसितेनार्ये मां विहाय सुदुःखितं ॥५॥
6ab यैः सह क्रीडते सीता विश्रब्धैर्मृगपोतकैः ।
6cd तां विना ते विशालाक्षीं दृश्यन्ते चेह लक्ष्मण ॥६॥
7ab इमे लक्ष्मण वैदेह्यास्तापनीया विभूषणाः ।
7cd धरण्यां सह माल्येन शीर्णाः कनकविन्दवः ॥७॥
8ab तप्तरुक्मप्रकाशैश्च घोरैः क्षतजविन्दुभिः ।
8cd आवृतं पश्य सौमित्रे सर्वतो धरणीतलं ॥८॥
9ab मन्ये लक्ष्मण वैदेही राक्षसैः कामरूपिभिः ।
9cd छित्वा भित्वा विभक्ता वा भक्षिता वा तपस्विनी ॥९॥

एतयोरेव सामर्थ्यमस्मिन्नेव न मे भवेत् ॥ १०९ ॥

10 ab तस्या निमित्तं वैदेह्या द्वयोर्विवदमानयोः ।
10 cd प्रवृत्तं पश्य सौमित्रे युद्धं राक्षसयोरिह ॥१०॥
11 ab कथं चन्द्रप्रतीकाशं सीताया विमलं मुखं । • —
11 cd आसीद्राक्षसयोर्मध्ये द्वयोर्विवदमानयोः ॥११॥
12 ab भूयः सीताविनाशाद्धि प्रयुक्तं राक्षसैः सह ।
12 cd वैरं स्थानेऽत्र सौमित्रे तेषामात्मबधाय वा ॥१२॥
15 ab शक्रचापनिभं चेदं तपनीयविभूषितं ।
15 cd धरण्यां पतितं भग्नं कस्य सौम्य महद्धनुः ॥१३॥
16 ab तरुणादित्यसंकाशं वैदूर्यमणिभूषितं ।
16 cd विशीर्णं कवचं भूमौ पतितं कस्य काञ्चनं ॥१४॥
17 ab छत्त्रं शतशलाकं च दिव्यमाल्योपशोभितं ।
17 cd भग्नदण्डमिदं सौम्य कस्य भूमौ निपातितं ॥१५॥
4 ab काञ्चनोरश्छदाश्चेमे पिशाचवदनाः खराः ।
भीमरूपा महाकायाः कस्य वीर हता रणे ॥१६॥
दीप्तपावकसंकाशः सपताकः सहध्वजः ।
अपविद्धश्च भग्नश्च कस्य सांग्रामिको रथः ॥१७॥
18 cd रथाक्षमात्रा विशिखास्तपनीयविभूषणाः ।
18 ef कस्येमे निहिता वाणाः प्रकीर्णा घोरकर्मिणः ॥१८॥
19 ab घोरं प्रतिकूलं पश्य ममेदं जीवितान्तकृत् ।
19 cd वैरं शतगुणं वीर राक्षसैः कामरूपिभिः ॥१९॥

एवं विलपमानस्तु रामो मत्त इव स्खलन् ।
अथाश्रमात् क्रोशमात्रे ददर्श महदद्भुतम् ॥ 13 ॥
रणोपकरणं सर्वं विध्वस्तं धरणीतले ।
तं दृष्ट्वा दशरथमात्य शोकोपहतचेतनः ॥ 14 ॥

मृतं शोकेन महता सीताहरणजेन मां ।
परलोके महाराजो नूनं वक्ष्यति मे पिता ॥ २० ॥
कथं प्रतिज्ञां संश्रुत्य वनवासे कृतां मम ।
अपूरयित्वा तं कालं मत्सकाशमिहागतः ॥ २१ ॥
कामवृत्तमनार्यं च मृषावादमधार्मिकं ।
धिक् त्वामिति परे लोके व्यक्तं वक्ष्यति मे पिता ॥ २२ ॥
विवशं शोकसंतप्तं दीनं भग्नमनोरथं ।
मां समुत्सृज्य कृपणं कीर्तिर्नरमिवानृजुं ॥ २३ ॥
क्व सा गता चारुदती शुभेक्षणा
ममेश्वरी लक्ष्मण युक्तभाषिणी ।
विहाय मां शोकबलाभिपीडितं
प्रभा यथा भास्करमस्तमूर्धनि ॥ २४ ॥

इत्यार्षे रामायणे आरण्यककाण्डे रामविलापो
नाम सप्तषष्टितमः सर्गः ॥

## LXVIII.

स तथा तु जनस्थानं सर्वतः परिलोकयन् ।
नाससाद सुदुःखार्तो राघवो जनकात्मजां ॥ १ ॥
अनासादयमानस्तु सीतां दशरथात्मजः ।
पङ्कमासाद्य विपुलं सीदन्निव महाद्विपः ॥ २ ॥
संधारयितुमात्मानं न शशाक नरोत्तमः ।
सीतावियोगजे दुःखे मग्नो महति दारुणे ॥ ३ ॥
तं निःश्वसन्तं ध्यायन्तं दीनं वास्पपरायणं ।
शोकेन महताविष्टं नवबद्धमिव द्विपं ॥ ४ ॥
लक्ष्मणो राममत्यर्थमुवाच हितकाम्यया ।
मा विषादं गमो वीर कुरु यत्नं मया सह ॥ ५ ॥
इदं चैव वनं सौम्य बहुपादपशोभितं ।
प्रियकाननसंचारा वनोन्मत्ता च मैथिली ॥ ६ ॥
सा वनं वा प्रविष्टा स्यान्नलिनीं वा सुपुष्पितां ।
सरितं वानुसंप्राप्ता मीनवञ्जुलसेवितां ॥ ७ ॥
वित्रासयितुकामा वा लीना स्यात् कानने क्वचित् ।
जिज्ञासमाना वैदेही त्वां मां च पुरुषर्षभ ॥ ८ ॥
यत्नमन्वेषणे तस्याः कुरु राम मया सह ।
वनं सर्वं विचिन्वानो यत्र सा जनकात्मजा ॥ ९ ॥

7ab एवमुक्तस्तु वचनं लक्ष्मणेन समाहितः ।
7cd सह सौमित्रिणा रामो विचेतुमुपचक्रमे ॥ १० ॥
8ab तौ वनानि गिरींश्चैव सरितश्च सरांसि च ।
8cd निरीक्षां चक्रतुर्वीरौ सीतादर्शनकाङ्क्षया ॥ ११ ॥
पर्वतं बहुकूटं तु नानाधातुशतैश्चितं ।
सकाननवनं रामो व्यचिनोत् सहलक्ष्मणः ॥ १२ ॥
9ab तस्य शैलस्य सानूनि गुहाश्च शिखराणि च ।
9ef नलिनीश्च विचिन्वन्तौ नैव तामधिजग्मतुः ॥ १३ ॥
10ab विचित्य सर्वतः शैलं रामो लक्ष्मणमब्रवीत् ।
10cd नेह पश्यामि सौमित्रे वैदेहीं पर्वते शुभे ॥ १४ ॥
11ab स तथैवातिसंतप्तो लक्ष्मणो वाक्यमब्रवीत् ।
11cd विचरन् दण्डकारण्यं भ्रातरं दीनमानसं ॥ १५ ॥
12ab प्राप्स्यसि त्वं महाबाहो मैथिलीं जनकात्मजां ।
12cd यथा विष्णुर्महावीर्यो बलिं बद्ध्वा महीमिमां ॥ १६ ॥
13ab एवमुक्तस्तु वीरेण लक्ष्मणेन स राघवः ।
13cd अब्रवीद्दीनया वाचा दुःखाभिहतचेतनः ॥ १७ ॥
14ab वनं सर्वं प्रविचितं पद्मिन्यश्च सपङ्कजाः ।
14cd गिरयश्च महातेजो बहुकन्दरनिर्झराः ॥ १८ ॥
15ab न च पश्यामि वैदेहीं प्राणेभ्योऽपि गरीयसीं ।
15cd विचिन्वानो गिरिं सर्वं वनं च निखिलं महत् ॥ १९ ॥

गहनानि च वृक्षाणि विचेतुमुपचक्रमे ॥ ७cd ।

एवं स विलपन् दीनः सीताहरणकर्षितः ।
राघवः शोकसंतप्तो मुहूर्तं विह्वलोऽभवत् ॥ २० ॥
स विह्वलितसर्वाङ्गो गतसत्त्वो विचेतनः ।
निशश्वासातुरो दीनः शोकसंतप्तमानसः ॥ २१ ॥
बहुधा तु विनिश्वस्य रामो राजीवलोचनः ।
हा प्रिये क्वासि नष्टासि व्याक्रोशन् न्यपतत् क्षितौ ॥ २२ ॥
तं सान्त्वयामास ततो लक्ष्मणः प्रियबान्धवः ।
बहुप्रकारं धर्मज्ञः प्रसृतः प्रयताञ्जलिः ॥ २३ ॥
अनादृत्य तु तद्वाक्यं लक्ष्मणस्य मुखाच्च्युतं ।
अपश्यन् स प्रियां भार्यां विलपन्निदमब्रवीत् ॥ २४ ॥
त्रैलोक्याधिपते देव शक्र इन्द्र निबोध मे ।
पुरंदर चिरायेह भार्या साध्वी जहाति मां ॥ २५ ॥
यस्मिन् काले युवा भार्यां लब्ध्वा भूयोऽभिनन्दति ।
तस्मिन्नभ्यागते काले प्रिया भार्या जहाति मां ॥ २६ ॥
निर्यूथ इव मातङ्गः पुरं वृत्तोत्सवं यथा ।
न भात्ययं ममावासो हृतध्वज इवाहवः ॥ २७ ॥
स्वर्गादिव परिभ्रष्टः परित्यज्येव चामृतं ।
नाशयित्वेव सर्वस्वमनुशोचामि जानकीं ॥ २८ ॥
शीघ्रं लक्ष्मण जानीहि गत्वा गोदावरीं नदीं ।
अपि गोदावरीं सीता पद्मान्युद्धरितुं गता ॥ २९ ॥

26ab एवमुक्तस्तु रामेण लक्ष्मणस्त्वरितो भृशं ।
26cd नदीं गोदावरीं रम्यां जगाम लघुविक्रमः ॥ ३० ॥
27ab तां लक्ष्मणस्तीर्थवतीं विचित्योवाच राघवं ।
27cd न तां पश्यामि तीर्थेषु क्रोशतो न शृणोति मे ॥ ३१ ॥
28ab कं नु सा देशमापन्ना वैदेही जनकात्मजा ।
28cd न ह्यहं वेद्मि तं देशं यत्र सा तनुमध्यमा ॥ ३२ ॥
33ab निराशस्त्वपि भूयो वै सीताया दर्शने कृतः ।
33cd उवाच रामः सौमित्रिं दुःखितो दुःखितं वचः ॥ ३३ ॥
34ab किं तु लक्ष्मण वक्ष्यामि समेत्य जनकं वचः । 11ab
34cd मातरं वापि कौशल्यां विना सीतामितो गतः ॥ ३४ ॥ 11cd
35ab या मे राज्याद्विहीनस्य वने वन्येन जीवतः । 12ab
35cd सर्वं व्यपनयेच्छोकं वैदेही क्व नु सा गता ॥ ३५ ॥ 12cd
36ab ज्ञातिभ्यश्च विहीनस्य राजपुत्रीमपश्यतः । 13ab
36cd मन्ये दीर्घा भविष्यन्ति रात्रयो मम जाग्रतः ॥ ३६ ॥ 13cd
37ab गोदावरीं जनस्थानमिमं प्रस्रवणं गिरिं । 14ab
37cd सर्वाण्यनुचरिष्यामि यावत् सीता न दृश्यते ॥ ३७ ॥ 14cd
38ab तथा तु विलपन्तं तं रामं शोकपरायणं ।
38cd प्रत्युवाच महाप्राज्ञो लक्ष्मणः परवीरहा ॥ ३८ ॥
39cd अलमाहृत्य संतापं स्थिरो भव नरोत्तम ।
40ab विचित्य तां मया सार्धं नष्टामधिगमिष्यसि ॥ ३९ ॥

तत्सूर्यमिवाकाशं पुरं वृत्तोत्सवं तथा ।
पतिं भार्यमिवासौ हतवीर इवाहवः ॥ २२ ॥
यस्मिन् काले भृशं कामी लब्ध्वा भूयोऽभिनन्दति ॥ २३ ab ॥
रावणस्य तु भूतानि वधायाहूय पद्मिनीम् । सीतां रामाय शंसेति तदोचुस्तां च पद्मिनीम् ॥ २९ ॥
ततः प्रचोदिता भूतैः शंसास्मै त्वं प्रियामिति । रामं समभिचक्राम स्वयं मन्दाकिनी नदी ॥ ३० ॥
तामुपस्थितां रामः क्व सीतेत्येवमब्रवीत् । न तामभ्यवदत् सीतां पृष्टा रामेण शोभना ॥ ३१ ॥
रावणस्य तु तद्रूपं कर्माणि च दुरात्मनः । भयात्संस्मृत्य वैदेहीं सा नदी न शशंस ह ॥ ३२ ॥

एवं संभाषमाणौ तु तावुभौ रामलक्ष्मणौ ।
वसुंधरायां पतितां पुष्पमालामपश्यतां ॥ ४० ॥
तां पुष्पवेणीं वैदेह्या दृष्ट्वा रामो महीतले ।
उवाच लक्ष्मणं दीनो दुःखार्तो दुःखितं भृशं ॥ ४१ ॥
अभिजानामि पुष्पाणि तान्येवेमानि लक्ष्मण ।
अपि बद्धानि वैदेह्याः पूर्वं चैतानि कानने ॥ ४२ ॥
एवमुक्त्वा महातेजा लक्ष्मणं पुरुषर्षभः ।
क्रुद्धोऽब्रवीत् तदा रामो गिरिं संतर्जयन्निव ॥ ४३ ॥
तां मृष्टहेमवर्णाभां सीतां दर्शय पर्वत ।
पुरा शिलाशितैर्बाणैर्मा त्वां विध्वंसयाम्यहं ॥ ४४ ॥
स तं दाशरथी रामस्तर्जयन् जगतीधरं ।
ददर्श भूमौ विक्रान्तं राक्षसस्य महत् पदं ॥ ४५ ॥
स समीक्ष्य परिक्रान्तं सीताया राक्षसस्य च ।
संभ्रान्तहृदयो राम उवाच भ्रातरं प्रियं ॥ ४६ ॥
एहि लक्ष्मण पश्येदं राक्षसस्य महत् पदं ।
मिथ्या संतर्जितः शैलो न सीता गिरिकन्दरे ॥ ४७ ॥
व्रीडितं लक्ष्मणं दृष्ट्वा पराजितमिवागतं ।
अथाब्रवीदिदं वाक्यं विस्फारयन् महद्धनुः ॥ ४८ ॥
यमः सपरिवारो वा कालो वा दुरतिक्रमः ।
न त्वां धर्षयितुं शक्तो रक्षो वा मयि तिष्ठति ॥ ४९ ॥

मया सह महाबाहो मा च शोके मनः कृथाः ॥ 40cd ॥
× अभिजानामि पुष्पाणि तान्येवैतानि लक्ष्मण ।
अपिनामेह वैदेही भवेत् पर्वतमूर्धनि ॥ 53 ॥

53 ab अन्तरीक्षगतो मन्ये सीतामादाय राक्षसः ।
53 cd न तस्या गमने सौम्य गमनं चैव लक्ष्यते ॥५०॥
54 ab कथं कं विद्ध पृच्छामि कां दिशं यामि लक्ष्मण ।
54 cd तां दिशं नाधिगच्छामि यत्र सीता हृता भवेत् ॥५१॥
55 ab एवमुक्तस्तु रामेण लक्ष्मणः सत्यविक्रमः ।
55 cd रामं शोकाग्निसंतप्तमिदं वचनमब्रवीत् ॥५२॥
56 ab संप्राप्य पण्डितः कृच्छ्रं प्रज्ञामेवावगाहते ।
56 cd बालस्तु कृच्छ्रमासाद्य शिलेवाम्भसि मज्जति ॥५३॥
57 ab तं शोकवेगाभिहतं व्याधिः स्पृशति दारुणः ।
57 cd तस्यात्मा संप्रमुह्येत न च शोकात् प्रमुच्यते ॥५४॥
58 ab स पण्डितवरः प्राज्ञः प्रज्ञाकर्मविशारदः ।
58 cd अप्राज्ञ इव किं त्वार्य भार्याहेतोर्विमुह्यसि ॥५५॥
60 ab तं रामः प्रत्युवाचेदं शोकसंतप्तचेतनः ।
60 cd यथा ब्रवीषि सौमित्रे तत् कर्तुं प्रयताम्यहं ॥५६॥ 15

इत्यार्षे रामायणे आरण्यककाण्डे रामविलापो नाम
अष्टाषष्टितमः सर्गः ॥

मम बाणाग्निनिर्दग्धो भस्मीभूतो भविष्यसि ।
असंख्यः सततं चैव निर्दग्धतृणपल्लवः ॥ 46 ॥
इमां वा सरितं शीघ्रं शोषयिष्यामि लक्ष्मण ।
यदि नाख्याति मे सीतामद्य चन्द्रनिभाननाम् ॥ 47 ॥
एवं स कुपितो रामो दिधक्षुरिव पावकः । 48 ab ।
आपत्काले विमूढो हि हेतुनाल्पेन नश्यति ॥ 59 ab ॥

## LXIX. = 68

L. E. III. 70

1ab ततः सौम्योऽपि तं रामः क्रुद्धो वचनमब्रवीत् ।
1cd संहृत्येव शशी ज्योत्स्नां ज्वलन् सूर्य इवोदितः ॥ १ ॥
2ab असौ लक्ष्मण भूतात्मा नूनं मामवमन्यते ।
2cd अनुक्रोशान्मृदुत्वाच्च नृपात्मज निवर्तते ॥ २ ॥
3ab योऽहं राज्यं परित्यज्य त्यक्त्वा दीनां च मातरं ।
3cd स्वधर्ममग्रतः कृत्वा प्रविष्टो दण्डकं वनं ॥ ३ ॥
4ab तस्य मे धर्मकामस्य स्थितस्य वचने पितुः ।
4cd न धर्मस्त्रायते सीतां ह्रियमाणां महावने ॥ ४ ॥
5ab यदा धर्मप्रधानस्य धर्मसेतुर्विभिद्यते ।
5cd तदा खिन्नस्य सौमित्रे नास्तिक्यमुपजायते ॥ ५ ॥
6ab भक्षितायां च वैदेह्यां हृतायां वापि लक्ष्मण ।
6cd केनान्येन प्रियं कर्तुं शक्ता मम सुरेश्वराः ॥ ६ ॥
7ab कर्तारमपि लोकानां शूरं करुणवेदिनं ।
7cd अज्ञानादवमन्यन्ते सर्वभूतानि लक्ष्मण ॥ ७ ॥
8ab मृदुं लोकहिते युक्तं दान्तं करुणवेदिनं ।
8cd निर्वीर्य इति मन्यन्ते नूनं मां त्रिदशेश्वराः ॥ ८ ॥
9ab स गुणः प्राप्य मां दोषः संवृत्तः पश्य लक्ष्मण ।
9cd अज्ञानात् सर्वभूतानां लोकानामभवाय हि ॥ ९ ॥

10ab येन सौम्य हृता सीता भक्षिता वा तपस्विनी ।
10cd दृष्टे तस्मिन् भवेच्छान्तिर्लोकानां पार्थिवात्मज ॥ १० ॥
11ab नैव यक्षा न गन्धर्वा न पिशाचा न राक्षसाः ।
11cd किन्नरा वा मनुष्या वा सुखं प्राप्स्यन्ति लक्ष्मण ॥ ११ ॥
12ab यदि जीवति वैदेही लोकेभ्यः स्वस्ति लक्ष्मण ।
12cd अथ नष्टा जगत् कृत्स्नं विनष्टमुपधारय ॥ १२ ॥
अमानुषाणां सौमित्रे शरैरग्निशिखोपमैः ।
संभ्रमं जनयिष्यामि सीताया मानुषः कृते ॥ १३ ॥
17cd न चेत् कुशलिनीं सीतां प्रदास्यन्ति ममेश्वराः ।
17ef अस्मिन् मुहूर्ते सौमित्रे द्रक्ष्यन्ति मम विक्रमं ॥ १४ ॥
18ab यान्याकाशे प्रतिष्ठन्ति सर्वभूतानि लक्ष्मण ।
18cd मम बाणासनान्मुक्तैर्बाणजालैरजिह्मगैः ॥ १५ ॥
20ab आकर्णमुक्तैरिषुभिर्जीवलोकं दुरासदैः ।
20cd करिष्ये मैथिलीहेतोरपिशाचमराक्षसं ॥ १६ ॥
21ab मम रोषप्रमुक्तानां सायकानां बलं सुराः ।
21cd द्रक्ष्यन्त्यद्य शिताग्राणां शराणां दूरपातिनां ॥ १७ ॥
22ab नैव देवा न गन्धर्वा न यक्षा न च राक्षसाः ।
22cd भविष्यन्ति मम क्रोधादद्य लक्ष्मण पश्य मां ॥ १८ ॥
25ab निर्मर्यादमिमं लोकं करिष्याम्यद्य सायकैः ।
25cd कालानलसमस्पर्शैरतिक्रुद्ध इवान्तकः ॥ १९ ॥

सीतां विना न जीवामि मुहूर्तमपि लक्ष्मण ॥ 12ef ॥
मृते मयि मृतं मन्ये त्रैलोक्यं सचराचरम् ।
ममास्त्रबलसंयुक्तमाकाशं पश्य लक्ष्मण ॥ 13 ॥
निःसंपातं करिष्यामि ह्यद्य त्रैलोक्यसचराचरम् ।
सन्निरुद्धग्रहं चापि निवारितदिवाकरम् ॥ 14 ॥
विपनष्टानिलं [illegible] सीतांशुद्युतिवर्जितम् ।
विनिर्मथितशैलाग्रं शुष्यमाणजलाशयम् ॥ 15 ॥

25ab यथा यमो यथा मृत्युर्यथा कालो यथा विधिः ।
30cd हन्तास्मि राक्षसानद्य सृष्टा येन च राक्षसाः ॥ २० ॥
31ab अयं मां विपुलः शोकः प्रदीपयति लक्ष्मण ।
31cd सीताहरणजो घोरो दावाग्निरिव पर्वतं ॥ २१ ॥
यादृशोऽयं मम क्रोधो दैवात् समुपजायते ।
व्यक्तमद्य जगत् सर्वं नाशयिष्यामि सायकैः ॥ २२ ॥
न चेदद्य प्रदास्यन्ति साम्ना सीतां हृतामपि ।
22cd अद्य पश्यन्तु मे लोकास्त्रयो विक्रममाहवे ॥ २३ ॥
28ab आहता मम बाणौघैर्दीप्तास्यैः पन्नगैरिव ।
28cd बहुधा निपतिष्यन्ति लोका वै शकलीकृताः ॥ २४ ॥
29ab यथा रोषपरीतेन मयेदं पूरितं धनुः ।
29cd अराक्षसमिदं कृत्स्नं जगत् पश्यसि लक्ष्मण ॥ २५ ॥
न ह्रीमां धर्षणां सोढुं शक्तोऽहं रघुनन्दन ।
हन्तास्मि लोकान् सकलानद्य सृष्टाश्च येन ते ॥ २६ ॥
प्रिया सुरूपा सहधर्मचारिणी
32ab मयाद्य भार्या यदि सा न दृश्यते ।
सयक्षगन्धर्वमनुष्यराक्षसं
32cd जगत् सशैलं परिवर्तयिष्ये ॥ २७ ॥

इत्यार्षे रामायणे आरण्यककाण्डे रामकोपो नाम
नवषष्टितमः सर्गः ॥

द्रुमवल्लीलतागुल्मविप्रणाशितपादपम् । असमानुषाणां सौमित्रे शरैरग्निशिखोपमैः ॥16॥
अभ्रमम् जनयिष्यामि सीताधर्षणकोपितः ॥17ab॥
आदित्ये चोद्गमनास्ते भ्रष्टभ्रान्तमृगाद्विजम् । समाकुलममर्यादं जगत् पश्याद्य लक्ष्मण ॥19॥
यादृशोऽयं मम क्रोधो वीर्यं चैव समागतम् ॥23ab॥
मिथ्या नेह प्रवर्तन्ते सर्वभूतेषु लक्ष्मण ॥25cd॥
तथा विमुक्ता क्रुद्धेन मया बाणाः समन्ततः । नाहत्वा सर्वभूतानि वर्तिष्यन्ति लक्ष्मण ॥26॥
नैवं धर्षिता शक्या आत्मना हर्तुं धामेन वा । 27ab । नयास[illegible] वै देवीं नादास्यन्ति महेश्वराः
॥30ab।

## LXX.

भाषमाणं तथा रामं सीताहरणकर्षितं ।
लोकानामभवे युक्तं संवर्तकमिवानलं ॥१॥
विक्षिपन्तं धनुः सज्यं निःश्वसन्तं मुहुर्मुहुः ।
हन्तुकामं पशुं रुद्रं क्रुद्धं दक्षक्रतौ यथा ॥२॥
अदृष्टपूर्वं तं कोपं दृष्ट्वा रामस्य लक्ष्मणः ।
अब्रवीत् प्राञ्जलिर्वाक्यं मुखेन परिशुष्यता ॥३॥
पुरा भूत्वा मृदुर्दान्तः सर्वभूतहिते रतः ।
न क्रोधवशमापन्नः प्रकृतिं हातुमर्हसि ॥४॥
चन्द्रे लक्ष्मीः प्रभा सूर्ये गतिर्वायौ भुवि क्षमा ।
एतत् तु नियतं सर्वं त्वयि चानुत्तमं यशः ॥५॥
उच्यमानं मया वाक्यं सीता शशिनिभानना ।
हितं न प्रतिजग्राह वैदेही जनकात्मजा ॥६॥
अयुक्तं क्रुद्धया वाक्यमुक्तोऽहं परुषं तया ।
उत्तरं तस्य वाक्यस्य न वक्तव्यं कथञ्चन ॥७॥
सीतया चोद्यमानोऽहं गच्छ गच्छेति राघव ।
अवेक्षमाणो वैदेहीं त्वत्सकाशमुपागतः ॥८॥
न तु जानामि कस्यायं भग्नः सांग्रामिको रथः ।
केन वा कस्य वा हेतोः सायुधः सपरिच्छदः ॥९॥

रथनेमिहतश्चायं सिक्तो रुधिरविन्दुभिः ।
देशो निर्वृत्तसंग्रामः सुघोरः पार्थिवात्मज ॥१०॥
न निवृत्तस्य पश्यामि बलस्य महतः पदं ।
एकस्य हि विमर्दोऽयं द्वयोर्वा वदतां वर ॥११॥
न चैकस्य कृते लोकानुत्सादयितुमर्हसि ।
युक्तदण्डा हि मृदवः प्रशान्ता वसुधाधिपाः ॥१२॥
न वनानां गिरीणां वा रुजा भवति राघव ।
तस्मात् प्राणहरं दण्डं न धारयितुमर्हसि ॥१३॥
यदा त्वं सर्वभूतानां शरण्यः शरणार्थिनां ।
को नु दारप्रणाशं ते साधुमन्येत राघव ॥१४॥
सरितः सागराः शैला देवगन्धर्वदानवाः ।
नालं ते विप्रियं कर्तुं दीक्षितस्येव साधवः ॥१५॥
येन वीर हृता सीता तमन्वेष्टुं त्वमर्हसि ।
मद्द्वितीयो धनुष्पाणिर्व्यवसाय सहायवान् ॥१६॥
समुद्रांश्च विचेष्यामः पर्वतांश्च वनानि च ।
गुहाश्च विविधाकारा बिलानि च सरांसि च ॥१७॥
देवदानवयक्षांश्च विचेष्यामः समन्ततः ।
यावन्नाधिगमिष्यामस्तव भार्यापहारिणं ॥१८॥
न चेत् संदर्शयिष्यन्ति तं पापं त्रिदशेश्वराः ।
कोशलेन्द्र ततः पश्चात् प्राप्तकालं करिष्यसि ॥१९॥

आनुपूर्वीं च धर्मस्य गत्वा लोकेषु राघव ।
ततश्छेत्स्यसि नाराचैर्जगत् सर्वं सराक्षसं ॥२०॥

शिवेन साम्ना विनयेन चैव
न चेत् प्रियां प्राप्स्यसि जानकीं त्वं ।
ततः समुत्सादयितासि लोकान्
महेन्द्रवज्रप्रतिमैः शरोत्तमैः ॥२१॥

इत्यार्षे रामायणे आरण्यककाण्डे लक्ष्मणवाक्यं नाम
सप्ततितमः सर्गः ॥

G.E. III.72.

## LXXI. २८३

1ab एवमुक्तस्तु वीरेण लक्ष्मणेन स राघवः ।
1cd प्रतिगृह्य वचस्तथ्यं वनानि विचचार ह ॥ १ ॥
2ab स तं बाणधनुष्पाणिर्बद्धासिर्विततायुधः ।
2cd लक्ष्मणो भ्रातरं दीनं पृष्ठतोऽनुजगाम ह ॥ २ ॥
3ab क्रोधेन च विलापेन शोकेन च समाकुलं ।
3cd. क्षुत्पिपासापरिश्रान्तमाशीविषमिवोरगं ॥ ३ ॥
4cd सीताहरणदुःखार्तं व्यथितात्मानमातुरं ।
5ab हेतुयुक्तं पुनर्वाक्यं लक्ष्मणस्तथ्यमब्रवीत् ॥ ४ ॥
6ab आश्वसिहि महाबाहो प्राणिनं सर्वमापदः ।
6cd स्पृशन्त्यनिलवल्लोके क्षणेन प्रतियान्ति च ॥ ५ ॥
7ab यदि दुःखमिदं प्राप्तं काकुत्स्थ न सहिष्यसि । 5ab
7cd प्राकृतश्चाल्पसत्त्वश्च सहिष्यति कथं नरः ॥ ६ ॥ 5cd
8ab रुषितो हि भवान् लोकांस्तेजसा यदि धक्ष्यति । 6ab
8cd आर्ताः प्रजा नरव्याघ्र क्व नु यास्यन्ति निर्वृतिं ॥ ७ ॥ 6cd
9ab नहुषस्यात्मजो राम ययातिः कर्मभिः स्वकैः । 7ab
9cd गतः शक्रस्य सायुज्यमनयाच्चापतद्भुवि ॥ ८ ॥ 7cd
10ab महर्षेश्च वशिष्ठस्य यः पितुर्नः पुरोहितः । 8ab
10cd अह्नात् पुत्रशतं जज्ञे तथैव च पुनर्गतं ॥ ९ ॥ 8cd

यत्राग्निस्समवेतेन विद्धि शोकमहेतुना |4ab|
या चेयं जगतो माता सर्वलोकनमस्कृता ।
अस्या विचलनं भूमेर्दृश्यते कालसंक्षयात् ॥ ॥
यौ चेमौ जगतो नेत्रे यत्र सर्वं प्रतिष्ठितम् ।
आदित्यचन्द्रौ ग्रहणमुपेतौ सुमहाबलौ ॥१२॥

14ab शक्रादिष्वपि लोकेषु वर्तमानौ नयानयौ । 12ab
14cd श्रूयेते नरशार्दूल न त्वं शोचितुमर्हसि ॥ १० ॥ 12cd
15ab नष्टायामपि वैदेह्यां मृतायां वापि राघव । 13ab
15cd शोचितुं नार्हसे देव यथान्यः प्राकृतस्तथा ॥ ११ ॥ 13cd
16ab त्वद्विधा न हि शोचन्ति सततं तत्त्वदर्शिनः । 14ab
16cd सुमहत्स्वपि कृच्छ्रेषु बुद्ध्या निश्चितनिश्चयाः ॥ १२ ॥ 14cd
18ab अदृष्टगुणदोषाणां कर्मस्वभिरतात्मनां । 16ab
18cd नान्तरेण क्रियां वीर फलमिष्टं प्रवर्तते ॥ १३ ॥ 16cd
19cd इदं हि स्मारयामि त्वां नोपदेशं करोमि ते । 17ab
20ab अनुशिष्याद्धि को नु त्वां साक्षादपि बृहस्पतिः ॥ १४ ॥ 17cd
20cd बुद्धिश्च ते महाप्राज्ञ लोकैरपि दुरत्यया । 18ab
21ab इति प्रसुप्तं शोकेन पुनः संबोधयाम्यहं ॥ १५ ॥ 18cd
22ab दिव्यं त्वं मानुषं चास्त्रमात्मनश्च पराक्रमं । 19ab
22cd इक्ष्वाकुवृषभावेक्ष्य यतस्व द्विषतां बधे ॥ १६ ॥ 19cd
23ab किं ते सर्वविनाशेन कृतेन पुरुषर्षभ । 20ab
23cd तमेवैकं रिपुं पापं विज्ञायोद्धर्तुमर्हसि ॥ १७ ॥ 20cd

इत्यार्षे रामायणे आरण्यककाण्डे रामानुनयो नाम
एकसप्ततितमः सर्गः ॥

सुमहान्त्यपि भूतानि देवाश्च पुरुषर्षभ ।
न देवस्य प्रमुष्यन्ते सर्वभूतातिपातिनः ॥ 13 ॥
न बुद्ध्या निहतः प्राज्ञो विनिनक्ति शुभाशुभे ।
न शोचन्ति न हृष्यन्ति तत्तत् प्राप्य शुभाशुभम् ॥ 14 ॥
ममैव हि पुरा वीर त्वमेव बहुशो विदः । 19ab ।
इत्येवमुक्तः स तु लक्ष्मणेन निवर्त्य बुद्धिं जगतो विनाशात् ।
धी जानकीदैन्यमहिप्रतप्तो विनिःश्वसन् वाक्यमुवाच रामः ॥ 24 ॥

## LXXII.

एवमुक्तस्तु तद्वाक्यं लक्ष्मणेन सुभाषितं ।
सारग्राही महासारं प्रतिजग्राह राघवः ॥१॥
स निगृह्य महाबाहुः प्रवृद्धं क्रोधमात्मनः ।
अवष्टभ्य धनुश्चित्रं रामो लक्ष्मणमब्रवीत् ॥२॥
किं करोमि नरव्याघ्र क्व नु गच्छामि लक्ष्मण ।
केनोपायेन पश्येयं सीतां सुरसुतोपमां ॥३॥
तं तथा भाषमाणं तु दुःखार्त्तं धर्मचारिणं ।
राममाश्वासयन् वाक्यं लक्ष्मणः पुनरब्रवीत् ॥४॥
जनस्थानमिदं भूयस्त्वमन्वेषितुमर्हसि ।
रक्षोभिर्बहुभिः कीर्णं नानासत्त्वनिषेवितं ॥५॥
सन्तीह गिरिदुर्गाणि निर्झराश्च शिलायुताः ।
गुहाश्च विविधाकारा नानाद्रुमलतावृताः ॥६॥
आवासाः किन्नराणां च गन्धर्वनिलयास्तथा ।
तेषु युक्तो मया सार्धं त्वमन्वेषितुमर्हसि ॥७॥
त्वद्विधा बुद्धिसंपन्ना महात्मानो नरर्षभाः ।
आधिभिर्न प्रकम्पन्ते वायुवेगैरिवाचलाः ॥८॥
इत्युक्तस्तद्वनं रामो विचचार सलक्ष्मणः ।
शङ्कितः सशरं घोरं गृहीत्वा स महाधनुः ॥९॥
*क्रुद्धो रामः स धर्मात्मा सन्धाय धनुषि क्षुरम् ॥१०॥*

10ab ततः पर्वतकूटाभं छिन्नपक्षं द्विजोत्तमं । 9ab
10cd ददर्श पतितं भूमौ क्षतजार्द्रं जटायुषं ॥ १० ॥ 9cd
11ab तं दृष्ट्वा गिरिसंकाशं रामो लक्ष्मणमब्रवीत् । 10ab
11cd अनेन सीता वैदेही भक्षितात्र न संशयः ॥ ११ ॥ 10cd
12ab गृध्ररूपमिदं रक्षो व्यक्तं भ्रमति कानने । 11ab
12cd भक्षयित्वा विशालाक्षीं सीतामास्ते यथासुखं ॥ १२ ॥ 11cd
13ab एनं हनिष्ये दीप्ताग्रैः शीघ्रं बाणैरजिह्मगैः । 14ef
13cd जातरोषः सहसाक्षो वज्रेणेव महाचलं ॥ १३ ॥
14ab इत्युक्त्वाभ्यपतद्गृध्रं संधाय धनुषि क्षुरं । 12ab
14cd क्रुद्धो रामः समुद्भ्रान्तश्चालयन्निव मेदिनीं ॥ १४ ॥ 12cd
15ab स दीनो दीनया वाचा मुखेन रुधिरं वमन् । 13ab
15cd अभ्यभाषत तं क्रुद्धं राम रामेति राघवं ॥ १५ ॥ 13cd
16ab यामोषधीमिवारण्ये विचिनोषि नृपात्मज । 14ab
16cd सा सीता मम च प्राणा रावणेनोभयं हृतं ॥ १६ ॥ 14cd
17ab त्वया विहीना वैदेही लक्ष्मणेन च राघव । 15ab
17cd ह्रियमाणा मया दृष्टा रावणेन बलीयसा ॥ १७ ॥ 15cd
18ab सीतामभ्युपपन्नोऽहं रावणश्च रणे मया । 16ab
18cd विध्वंसितरथः पुत्र पातितो धरणीतले ॥ १८ ॥ 16cd
19ab एतत् तस्य धनुर्भग्नमेतच्छत्रं विमर्दितं । 17ab
19cd अयं तस्य रथो राम भग्नः सांग्रामिको मया ॥ १९ ॥ 17cd

20ab अत्र युद्धं मया दत्तं रावणस्य पुनः पुनः ।
20cd पक्षतुण्डनखैर्घोरं गात्राण्यारुजता महत् ॥ २० ॥
21ab अथ श्रान्तस्य मे पक्षौ छित्वा वृद्धस्य रावणः । 15ab
21cd अङ्केनादाय वैदेहीमुत्पपात विहायसा ॥ २१ ॥ 15cd
22ab सीतामभ्युपपन्नोऽहं रावणेन हतो रणे ।
22cd रक्षसा निहतं पूर्वं न त्वं मां हन्तुमर्हसि ॥ २२ ॥ 18cd
23ab जटायुषं तु विज्ञाय कथयन्तमिमां कथां । 19ab
23cd गृध्रराजं परिष्वज्य रुरोद सहलक्ष्मणः ॥ २३ ॥ 19cd
24ab एकमेकायने दुर्गे निःश्वसन्तं कथञ्चन । 20ab
24cd समीक्ष्य दुःखित तत्र रामः सौमित्रिमब्रवीत् ॥ २४ ॥ 20cd
25ab राज्यभ्रंशो वने वासः सीता नष्टा मृतः पिता । 21ab
25cd ईदृशीयं ममालक्ष्मीर्निर्दहेदपि पावकं ॥ २५ ॥ 21cd
26ab यद्यहं सलिलस्यार्थे व्रजेयं लवणाम्भसं । 22ab
26cd सोऽपि मां नूनमासाद्य शुष्येन्नदनदीपतिः ॥ २६ ॥ 22cd
27ab नास्त्यभाग्यतरो लोके मयास्मिन् सचराचरे । 23ab
27cd येनेयं महती प्राप्ता मया व्यसनवागुरा ॥ २७ ॥ 23cd
28ab अयं पितृवयस्यो मे गृध्रराजो जरान्वितः । 24ab
28cd शेते विनिहतो भूमौ मम भाग्यविपर्ययात् ॥ २८ ॥ 24cd
29ab इत्येवमुक्त्वा तु वचो राघवः सहलक्ष्मणः । 25ab
29cd पस्पर्श पाणिना गृध्रं पितुः स्नेहं विदर्शयन् ॥ २९ ॥ 25cd

निकृत्तपक्षं रुधिरावसिक्तं
तं गृध्रराजं परिरभ्य रामः ।
क्व मैथिली प्राणसमा ममेति
विमुच्य चापं निपपात भूमौ ॥ ३० ॥

L.E. III. 75 – fn 1225

## LXXIII. = 64.

L.E. III. 75

1ab रामः प्रेक्ष्य तु तं गृध्रं भुवि रौद्रेण पातितं । 1ab
1cd सौमित्रिं मित्रसंपन्नमिदं वचनमब्रवीत् ॥१॥ 1cd
2ab ममायं नूनमर्थाय यतमानो विहङ्गमः । 2ab
2cd राक्षसेन हतः संख्ये प्राणांस्त्यजति दुस्त्यजान् ॥२॥ 2cd
मन्दप्राणो ह्ययं पक्षी कथञ्चिद्यदि जीवति । 3ab
स्वरहीनश्च दीनश्च विस्फुरः समुदीक्षते ॥३॥ 3cd
4ab यावदेव ससंज्ञोऽयं यावच्छक्नोति भाषितुं ।
4cd तावत् पृच्छाम्यहं सीतां राजानं पिशिताशिनां ॥४॥
5ab जटायो यदि शक्नोषि वाचमीरयितुं पुनः । 4ab
5cd सीतामाचक्ष्व भद्रं ते बधमात्मन एव च ॥५॥ 4cd
6ab कृत्वा त्वामहमव्यग्रं संरूढव्रणमुत्सहे ।
6cd गन्तुं वर्षसहस्राणि जीव त्वं चिरमण्डज ॥६॥
7ab किंनिमित्तं हृता सीता रावणस्य च किं मया । 5ab
7cd अपराद्धं क्व वा दृष्टा रावणेन मम प्रिया ॥७॥ 5cd
8ab कथं तदिन्दुसंकाशं मुखमासीन्मनोहरं । 6ab
8cd सीताया ह्रियमाणायास्तदा क्रूरेण रक्षसा ॥८॥ 6cd
9ab कथंरूपः कथंवीर्यः किंकर्मा च स राक्षसः । 7ab
9cd क्व चास्य भवनं तात ब्रूहि मे परिपृच्छतः ॥९॥ 7cd

लक्ष्मणस्य च वाक्येन चोदितो रघुनन्दनः । 1ab
इदमस्य शरीरं वै गतप्राणं प्रदृश्यते ॥ – 3ab

कथं वा समनुप्राप्तो दण्डकं स महद्वनं ।
चित्रकाननसंपन्नं बहुपादपसंकुलं ॥ १० ॥
तमुदीक्ष्याथ दीनात्मा विलपन्तमरिंदमं ।
कृच्छ्रादुत्तिष्ठदाश्वस्य जटायुः परमातुरः ॥ ११ ॥
स वाचा व्यक्तया राममिदं वचनमब्रवीत् ।
सा हृता राक्षसेन्द्रेण रावणेन बलीयसा ॥ १२ ॥
मायामाश्रित्य विपुलां वातदुर्दिनसंकुलां ।
परिश्रान्तस्य मे युद्धे छित्वा पक्षौ निशाचरः ॥ १३ ॥
सीतामादाय वैदेहीं प्रयातो दक्षिणामुखः ।
उपरुध्यन्ति मे प्राणा दृष्टिर्भ्राम्यति राघव ॥ १४ ॥
पश्यामि वृक्षानेतांश्च सौवर्णानिव सांप्रतं ।
येन राम मुहूर्तेन सीतामादत्त रावणः ॥ १५ ॥
तस्मिन् नष्टं धनं स्वामी क्षिप्रं संप्रतिपद्यते ।
विन्दो नाम मुहूर्तोऽसौ नाबुध्यत स तं तदा ॥ १६ ॥
झषो यथामिषं प्राप्य क्षिप्रं न स भविष्यति ।
तन्न व्यथा राजपुत्र कर्तव्या राम रंस्यसे ॥ १७ ॥
वैदेह्या सहितः क्षिप्रं हत्वा तं रावणं रणे ।
असंस्थानस्य गृध्रस्य रामं प्रत्यभिभाषिणः ॥ १८ ॥
आस्यात् सुस्राव रुधिरं म्रियमाणस्य सामिषं ।
इदं चोवाच वचनं म्रियमाणो विहङ्गमः ॥ १९ ॥

17cd सर्वतश्चारयन् दृष्टिमस्थिरामतिविह्वलः ।
समुद्रे दक्षिणे द्वीपे लङ्काधिपतिरीश्वरः ॥ २० ॥
18ab पुत्रो विश्रवसः साक्षाद्भ्राता वैश्रवणस्य च । 16ab
18cd इत्युक्त्वा दुर्बलः प्राणान् मुमोच पतगेश्वरः ॥ २१ ॥ 16cd
19ab ब्रूहि ब्रूहीति रामस्य ब्रुवाणस्य कृताञ्जलेः । 17ab
19cd त्यक्त्वा शरीरं गृध्रस्य प्राणा जग्मुर्जटायुषः ॥ २२ ॥ 17cd
20ab स निक्षिप्य शिरो भूमौ प्रसार्य च शिरोधरं । 18ab
20cd विक्षिप्य चरणौ गृध्रः पपात धरणीतले ॥ २३ ॥ 18cd
21ab तं गृध्रं प्रेक्ष्य पतितं गतासुं पर्वतोपमं । 19ab
21cd रामः सुबहुदुःखार्तो वचः सौमित्रिमब्रवीत् ॥ २४ ॥ 19cd
22ab बहूनि राक्षसावासे वर्षाणि वसता सुखं । 20ab
22cd अनेन दण्डकारण्यं विचीर्णमिह पक्षिणा ॥ २५ ॥ 20cd
23ab अनेकवर्षशतिकश्चिरकालमुपस्थितः । 21ab
23cd सोऽयमद्य हतः शेते कालो हि दुरतिक्रमः ॥ २६ ॥ 21cd
24ab ततः प्रियहिते युक्तं मृतं दृष्ट्वा जटायुषं ।
25ab अब्रवील्लक्ष्मणं रामो मुखेन परिशुष्यता ॥ २७ ॥
पश्य लक्ष्मण गृध्रोऽयमुपकारी द्विजोत्तमः । 22ab
सीतामभ्युपपन्नश्च रावणेन हतो बली ॥ २८ ॥ 22cd
26ab गृध्रराज्यं परित्यज्य पितृपैतामहं महत् । 23ab
26cd मम हेतोरयं प्राणानमुञ्चत् पतगेश्वरः ॥ २९ ॥ 23cd
गन्धाम्य संस्कृतं क्षेत्रं गृध्रराजं पितुः सखम् ॥ 24cd ॥

२७ ab सर्वत्र खलु दृश्यन्ते साधवो धर्मचारिणः । 24 ab
२७ cd शूराः शरण्याः सौमित्रे तिर्यग्योनिगतेष्वपि ॥३०॥ 24 cd
२८ ab अयं सखा मम पितुः सानुक्रोशो विहङ्गमः ।
२८ cd मम हेतोः पराक्रान्तो गतः स्वर्गं न संशयः ॥३१॥
29 ab पुत्रैरपत्यैर्दारैश्च परिहीनो महावने ।
29 cd अस्मदर्थाय धर्मात्मा गतो वैवस्वतक्षयं ॥३२॥
30 ab सीताहरणजं दुःखं न मे दुःखं तथाविधं । 25 ab
30 cd यथा विनाशो गृध्रस्य मत्कृतेन परंतप ॥३३॥ 25 cd
31 ab राजा दशरथः श्रीमान् यथा मम महायशाः । 26 ab
31 cd पूजनीयश्च मान्यश्च तथायं पतगेश्वरः ॥३४॥ 26 cd
32 ab लक्ष्मणाहर काष्ठानि निर्मथिष्यामि पावकं । 27 ab
32 cd पक्षीन्द्रं सत्करिष्यामि मदर्थे निधनं गतं ॥३५॥ 27 cd
33 ab नाथं पतगलोकस्य चितामारोप्य लक्ष्मण । 28 ab
33 cd इमं धक्ष्यामि सौमित्रे हतं रौद्रेण पक्षिणं ॥३६॥ 28 cd
36 ab एवमुक्त्वा चितां दीप्तामारोप्य पतगेश्वरं । 31 ab
36 cd ददाह रामो धर्मात्मा पतगेन्द्रं जटायुषं ॥३७॥ 31 cd
रामोऽथ सहसौमित्रिर्विगाह्य जलमोजसा । 32 ab
कृत्वा चोदककार्यं तु भ्रातरौ रामलक्ष्मणौ ॥३८॥
38 ab रोहिमांसानि चोत्कृत्य पेषीकृत्य महायशाः । 33 ab
38 cd शकुनेभ्यो ददौ रामो वन्ये हरितशाद्वले ॥३९॥ 33 cd

या गतिर्धर्मशीलानामाहिताग्नेश्च या गतिः ।34ab।
अपरावर्तिनां या च या च भूमिप्रदायिनाम् ॥34cd॥
शरणागतिनां या च गोसहस्रप्रदायिनाम् ॥34ef॥
मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमान् ।35ab।
गृध्रराज महासत्त्व संस्कृतस्त्वं मया व्रज ॥35cd॥

यं तु मृतस्य मर्त्यस्य जपन्तीह द्विजातयः ।
तं स्वर्गगमने तस्य मन्त्रं रामो जजाप ह ॥ ४० ॥
ततो गोदावरीं गत्वा नदीं नरवरात्मजौ ।
उदकं ददतुस्तस्मै गृध्रराजे जटायुषे ॥ ४१ ॥

स गृध्रराजः कृतवान् यशस्करं
सुदुष्करं कर्म रणे निपातितः ।
महर्षिकल्पेन च तेन सत्कृतो
जगाम पुण्यां गतिमुत्तमां शुभां ॥ ४२ ॥

इत्यार्षे रामायणे आरण्यककाण्डे जटायुदर्शनं नाम
द्विसप्ततितमः सर्गः — जटायुसंस्कारो नाम
त्रिसप्ततितमः सर्गः ॥

L.E. III. 76.

## LXXIV. =65

1ab कृत्वैवमुदकं तस्मै प्रस्थितौ रामलक्ष्मणौ । 1ab
1cd भ्रातरौ मेघसंकाशं जनस्थानमुपेयतुः ॥१॥
2ab ततोऽस्तं हि गते सूर्ये संश्रितौ स्वकमाश्रमं ।
2cd कल्यमुत्थाय च पुनः कृतजप्याह्निकावुभौ ॥२॥
3ab ततः शून्यं जनस्थानं परित्यज्य महाबलौ ।
3cd अन्वेषमाणौ तौ सीतां जग्मतुः पश्चिमां दिशं ॥३॥ 1cd
4ab ततस्तौ पश्चिमां गत्वा शरचापासिधारिणौ । 2ab
4cd अविप्रकृतमिक्ष्वाकू पन्थानं प्रतिपद्य वै ॥४॥ 2cd
5ab गुल्मैर्वृक्षैश्च बहुभिर्लताभिश्च समावृतं । 3ab
5cd पर्वतैरुन्नतैर्दुर्गं महद्वनमपश्यतां ॥५॥ 3cd
6ab व्यतिक्रम्य तु वेगेन व्यालसिंहनिषेवित । 4ab
6cd अतिभीमं महारण्यं भ्रातरौ तौ महाबलौ ॥६॥ 4cd
7ab ततः परं जनस्थानात् क्रोशत्रयमतीत्य वै । 5ab
7cd क्रौञ्चालयं विविशतुर्गहनं वनमोजसा ॥७॥ 5cd
8ab नानामेघगणप्रख्यं प्रहृष्टमिव सर्वतः । 6ab
8cd नानावृक्षैः शुभैः कीर्णं मृगपक्षिगणाकुलं ॥८॥ 6cd
9ab मार्गमाणौ तु वैदेहीं भ्रातरौ तौ विचेरतुः । 7ab
9cd तत्र तत्रावतिष्ठन्तौ सीताहरणदुःखितौ ॥९॥ 7cd

10ab लक्ष्मणस्तु महातेजाः सत्यवाक् शीलवान् शुचिः ।
10cd अब्रवीत् प्राञ्जलिर्वाक्यं भ्रातरं दीनचेतसं ॥ १० ॥
11ab स्पन्दते मे दृढं बाहुरुद्विग्नमिव मे मनः ।
11cd विपरीतानि पश्यामि निमित्तानि महाभुज ॥ ११ ॥ 9 cd
12ab घोररूपाणि दृश्यन्ते कुरु वीर मनः स्थिरं ।
12cd इमानि हि निमित्तानि सद्यः शंसन्ति विग्रहं ॥ १२ ॥ 10 cd
13ab एष वञ्जुलको नाम पक्षी परमदारुणः । 11 ab
13cd अपसव्यं प्रयात्याशु शंसयन् नौ महद्भयं ॥ १३ ॥ (11 cd)
अथ तत्र महाघोरं विकृतं तं महोच्छ्रयं ।
17cd विवृद्धमशिरोग्रीवं कबन्धमुदरे मुखं ॥ १४ ॥
18ab रोमभिर्निचितं तीक्ष्णैर्महागिरिमिवोच्छ्रितं ।
18cd नीलमेघनिभं घोरं मेघस्तनितनिस्वनं ॥ १५ ॥
19ab महता चातिपिङ्गेन विपुलेनायतेन च ।
19cd एकेनोरसि दीर्घेण नयनेनातिदर्शिना ॥ १६ ॥
20ab महादंष्ट्रोपपन्नं तं बलिनं सर्वघातिनं ।
20cd भक्षयन्तं महाकायं घोरानृक्षमहाद्विपान् ॥ १७ ॥
21ab भुजौ दीर्घौ विकुर्वाणं घोरौ योजनमायतौ ।
21cd आदाय विविधांश्चैव कराभ्यां मृगपक्षिणः ॥ १८ ॥
22ab आकर्षन्तं वनात् तस्मादनेकान् मृगयूथपान् ।
22cd स्थितमावृत्य पन्थानं कबन्धं तावपश्यतां ॥ १९ ॥

III. 38
तयोरन्वेषतोरेवं सर्वं तद् वनमोजसा ।
संजज्ञे विपुलः शब्दो भञ्जन्निव महद्वनम् ॥ 14 ॥
संवेष्टित इवात्यर्थं गहनं मातरिश्वना ।
वनस्य तस्य शब्दोऽभूत् दिवमापूरयन्निव ॥ 15 ॥
तं शब्दं वीक्षमाणस्तु रामः सौमित्रिणा सह ।
ददर्श सुमहाकायं राक्षसं घोरदर्शनम् ॥ 16 ॥
आसेदतुस्ततस्तस्य तावुभौ प्रमुखे स्थितौ । 17ab

23ab अथ तौ समतिक्रान्तौ क्रोशमात्रान्तरेण तु ।
23cd भ्रातरावतिकायेन गृहीतौ दीर्घबाहुना ॥ २० ॥
25ab परिगृह्य बलाद्वीरौ क्षुधार्तेन महाबलौ ।
25cd कृष्यमाणौ ददृशतुर्बाहू परिघसंनिभौ ॥ २१ ॥
26ab महागजकराकारौ खरौ रोमभिराचितौ ।
26ef दीर्घशुष्कनखौ घोरौ पञ्चास्याविव पन्नगौ ॥ २२ ॥ (23ab)
27ab ताभ्यामाकृष्यमाणौ तु खड्गबाणधनुर्धरौ । (23cd)
27cd कृच्छ्रेणास्य समीपं तावुपनीतौ व्यवस्थितौ ॥ २३ ॥
28ab न शशाक हि तौ वीरौ भ्रातरौ रामलक्ष्मणौ ।
28cd प्रक्षेप्तुमास्ये बाहुभ्यामवष्टब्धौ स्वतेजसा ॥ २४ ॥
29ab अथोवाच महाबाहुः कबन्धो दानवोत्तमः । 24ab
29cd शरचापधरौ वीरौ भ्रातरौ रामलक्ष्मणौ ॥ २५ ॥
30ab कौ युवां वृषभस्कन्धौ महाखड्गधनुर्धरौ । 24cd
30cd घोरं वनमिदं प्राप्तौ मम भक्ष्यावुपस्थितौ ॥ २६ ॥ 25ab
31ab ब्रूत मह्यं च कामं च किमर्थं चागतौ युवां । 25cd
31cd यौ मे देशमनुप्राप्तौ क्षुधार्तस्यात्र तिष्ठतः ॥ २७ ॥ 26ab
33ab तस्य तद्वचनं श्रुत्वा कबन्धस्य दुरात्मनः । 27ab
39cd उवाच लक्ष्मणं रामो मुखेन परिशुष्यता ॥ २८ ॥ 27cd
40ab कृच्छ्रात् कृच्छ्रतरं प्राप्तौ दारुणं सत्यमेव तु । 28ab
40cd व्यसनं जीवितान्ताय प्रियामनुपलभ्य च ॥ २९ ॥ 28cd

स घोररूपोऽधर्मात्मा क्षुधार्तो जगृहेऽथ तौ ।
खड्गिनौ दृढधन्वानौ तिग्मबाणधनुर्धरौ ॥२४॥
सबाणायुधखड्गौ तु तीक्ष्णशृङ्गाविवर्षभौ ।
विनदन्तावुभावास्यमुखमेव नयाम्यहम् ॥32॥
33cd — 39ab — fn 1270.

41ab नातिभारोऽस्ति दैवस्य सर्वभूतेषु लक्ष्मण । 29 cd
41cd आत्मानं मां च सौमित्रे व्यसनैः पश्य मोहितौ ॥३०॥ 29 ab
42ab शूराश्च बलवन्तश्च कृतास्त्राश्च नरा भुवि । 30 ab
42cd कालाभिपन्नाः सीदन्ति सिकतासेतवो यथा ॥३१॥ 30 cd

इति ब्रुवाणो दृढसत्यविक्रमः
43ab प्रतापवान् दाशरथिर्महायशाः । 31 ab
अवेक्ष्य सौमित्रिमुदारदर्शनं
43cd मतिं चकारास्य स दोर्निकर्तने ॥३२॥ 31 cd

इत्यार्षे रामायणे अरण्यककाण्डे कबन्धाङ्कगोचरो
नाम चतुःसप्ततितमः सर्गः ॥

## LXXV.

तौ तु तत्र स्थितौ दृष्ट्वा भ्रातरौ रामलक्ष्मणौ ।
बाहुपाशपरिक्षिप्तौ कबन्धो वाक्यमब्रवीत् ॥ १ ॥
तिष्ठथः किं नु मां दृष्ट्वा क्षुधार्तं क्षत्रियर्षभौ ।
आहारार्थमनुप्राप्तौ किं मां न प्रतिजल्पथः ॥ २ ॥
तच्छ्रुत्वा लक्ष्मणो वाक्यं प्राप्तकालं हितं तदा ।
उवाचार्तिसमापन्नं विक्रमे कृतनिश्चयः ॥ ३ ॥
त्वां च मां च पुनस्तूर्णमादत्ते राक्षसाधमः ।
तस्मादसिभ्यामस्याशु बाहू कृन्ताव मा चिरं ॥ ४ ॥
ततश्च देशकालज्ञौ खड्गाभ्यामेव राघवौ ।
बाहू तस्यांशदेशाभ्यामुभावेव निकृन्ततां ॥ ५ ॥
दक्षिणो दक्षिणं बाहुमसक्तमसिना तदा ।
रामश्चिच्छेद वेगेन सव्यं वीरस्तु लक्ष्मणः ॥ ६ ॥
स पपात महाकायश्छिन्नबाहुर्महासुरः ।
खं च गां च दिशश्चैव नादयन् जलदो यथा ॥ ७ ॥
स निकृत्तौ भुजौ दृष्ट्वा शोणितेन समुक्षितः ।
प्रीतः पप्रच्छ तौ वीरौ कौ युवामिति दानवः ॥ ८ ॥
इति तस्य ब्रुवाणस्य लक्ष्मणः शुभलक्षणः ।
समाचष्ट स तस्याथ कबन्धस्य महाबलः ॥ ९ ॥

अयमिक्ष्वाकुदायादो रामो नाम महायशाः ।
अस्य चावरजं विद्धि भ्रातरं मां तु लक्ष्मणं ॥१०॥
अस्य देवप्रभावस्य वसतो विजने वने ।
रक्षसापहृता भार्या तामन्वेष्टुमिहागतः ॥११॥
त्वं तु को वा किमर्थं वा कबन्ध वससे वने ।
आस्येनोरसि दीप्तेन भग्नजङ्घोऽतिभीषणः ॥१२॥
एवमुक्तः कबन्धस्तु लक्ष्मणेन तथा वचः ।
उवाच परमप्रीतः स इन्द्रवचनं स्मरन् ॥१३॥
स्वागतं युवयोर्वीरौ दिष्ट्या प्राप्तौ च राघवौ ।
दिष्ट्या चेमौ निकृत्तौ मे बाहू परिघसंनिभौ ॥१४॥
ममाप्यनेन वेशेन निर्वेदः समपद्यत ।
मृत्पिण्डभूतो लोकस्थः सर्वलोकविगर्हितः ॥१५॥
विकृतः पिशिताहारो जीवलोकभयावहः ।
न किञ्चिदत्यजं सत्त्वं बाहुमध्यमुपागतं ॥१६॥
मृगर्क्षं महिषं वापि शार्दूलं मानुषं गजं ।
नावर्जयमुपप्राप्तं क्षीणपुण्यः क्षुधान्वितः ॥१७॥
व्यसने वर्तमानेन शोके महति तिष्ठता ।
राघवौ यन्मया दृष्टौ नास्ति धन्यतरो मम ॥१८॥
कीर्तिमन्तौ महावीर्यौ धार्मिकौ सत्यविक्रमौ ।
सहितौ भ्रातरौ दृष्ट्वा मुक्तोऽहं पापजीवितात् ॥१९॥

रूपवानहमप्यासं कन्दर्पसदृशः क्षितौ ।
अहमात्मापराधेन प्राप्तो रूपविपर्ययं ॥ २० ॥
विरूपं यच्च मे रूपमिदं सर्वभयावहं ।
शापदोषेण संप्राप्तं मया बीभत्समीदृशं ॥ २१ ॥
अवश्यं माननीयौ मे भ्रातरौ रामलक्ष्मणौ ।
कीर्त्यमानं यथातथ्यमिदं मे श्रूयतां वचः ॥ २२ ॥
रूपमासीन्ममाचिन्त्यं त्रिषु लोकेषु विश्रुतं ।
यथा शुक्रस्य सोमस्य सूर्यस्य च बृहस्पतेः ॥ २३ ॥
श्रियो मां मध्यमं पुत्रं दनुं नाम्ना च दानवं ।
इन्द्रकोपादिदं रूपं प्राप्तवत्समवेहि च ॥ २४ ॥
अहं हि तपसोग्रेण पितामहमतोषयं ।
दीर्घमायुः स मे प्रादात् ततोऽहं पूर्णमानसः ॥ २५ ॥
दीर्घमायुर्मया प्राप्तं किं मे शक्रः करिष्यति ।
इत्येतां बुद्धिमास्थाय रणे शक्रमधर्षयं ॥ २६ ॥
तस्य बाहुप्रमुक्तेन वज्रेण शतपर्वणा ।
सक्थिनी मे शिरश्चैव शरीरे संनिवेशितं ॥ २७ ॥
स तु मां याच्यमानोऽपि नानयद्यमसादनं ।
पितामहवचस्तथ्यं तदस्त्विति च सोऽब्रवीत् ॥ २८ ॥
एवंभूतेन तु मया निरस्तेनाल्पतेजसा ।
इदमुक्तः सुरपतिर्मूर्ध्नि कृत्वाञ्जलिं तदा ॥ २९ ॥

11ab अनाहारः कथं शक्यो भग्नसक्थिशिरोमुखः ।
11cd वज्रेणाभिहतः कालं सुदीर्घमपि जीवितुं ॥३०॥
12ab एवमुक्तो मया शक्रो बाहू योजनमायतौ । 13ab
12cd प्रादाद्वक्षसि चास्यं मे तीक्ष्णदंष्ट्रमिदं महत् ॥३१॥ 13cd
13ab सोऽहं भुजाभ्यां दीर्घाभ्यामाकृष्यास्मिन् महावने । 14ab
13cd गजान् व्याघ्रान् मृगानृक्षान् भक्षयामि समन्ततः ॥३२॥ 14cd
स च मामब्रवीदिन्द्रो यदा ते रामलक्ष्मणौ । 15ab
छेत्स्यतः समरे बाहू तदा स्वर्गं गमिष्यसि ॥३३॥ 15cd
स त्वं रामोऽसि भद्रं ते नाहमन्येन केनचित् । 16ab
शक्यो हन्तुं यथा वाक्यमेतदुक्तं दिवौकसा ॥३४॥ 16cd
14ab अहं वामपि साहाय्यं करिष्यामि नरर्षभौ । 17ab
14cd मित्रं चैवोपदेक्ष्यामि भवतोरग्निसाक्षिकं ॥३५॥ 17cd
15ab एवमुक्तस्तु दनुना धर्मात्मा तेन राघवः । 18ab
15cd इदं जगाद वचनं लक्ष्मणस्योपशृण्वतः ॥३६॥ 18cd
16ab रावणेन हृता सीता मम भार्या यशस्विनी । 19ab
16cd निष्क्रान्तस्य जनस्थानात् सह भ्रात्रा यथासुखं ॥३७॥ 19cd
17ab नाममात्रं तु जानामि न रूपं तस्य रक्षसः । 20ab
17cd निवासं वा प्रभावं वा न वयं तस्य विद्महे ॥३८॥ 20cd
स त्वं सीतां समाचक्ष्व यत्र येनापि वा हृता । 23ab
कुरु कल्याणमत्यर्थं यदि जानासि तत्त्वतः ॥३९॥ 23cd

सोऽहं रूपमिदं कृत्वा लोकवित्रासनं महत् । ऋषीन् वनगतान् वीर्ये त्रासयामि ततस्ततः ॥2॥
ततः स्थूलशिरा नाम महर्षिः कोपितो मया । सञ्चिन्वन् विविधान् वन्यान् रूपेणानेन धर्षितः ॥3॥
तेनाहमुक्तो रोषेण घोरशापाभिधायिना । एतदेव नृशंसं ते रूपमस्तु विगर्हितम् ॥4॥
स मया याचितः क्रुद्धः शापस्यान्तो भवेदिति । अभिशापकृतस्येति तेनेदं भाषितं वचः ॥5॥
यदा छित्त्वा भुजौ रामो निर्दहेद्विजने वने । तदा त्वं प्राप्स्यसे रूपं तदेव रुचिरं शुभम् ॥6॥

18ab शोकार्तानामनर्थानामेवं नः परिधावतां ।
18cd कारुण्यात् सदृशं कर्तुमुपकारे च वर्ततां ॥४०॥
21ab एवमुक्तस्तु रामेण वाक्यं तत् करुणाक्षरं ।
21cd प्रोवाच कुशलो वक्तुं वक्तारमपि राघवं ॥४१॥ 26cd
22ab दिव्यमस्ति न मे ज्ञानं नापि जानामि मैथिलीं । 25ab
22cd यस्तां ज्ञास्यति तं ज्ञास्ये दग्धः स्वं रूपमास्थितः ॥४२॥ 25cd
23ab मेऽदग्धस्य न विज्ञातुं शक्तिरस्ति नरर्षभौ । 26ab
23cd राक्षसं तं महावीर्यं येन सीता हृता बलात् ॥४३॥ 26cd
24ab विज्ञानं हि मम भ्रष्टं शापदोषेण राघव । 27ab
24cd स्वकृतेन मया प्राप्तो योऽयं लोकविगर्हितः ॥४४॥ 27cd
25ab किन्तु यावन्न यात्यस्तं सविता श्रान्तवाहनः । 28ab
25cd तावन्मामवटे कृत्वा दह राम यथाविधि ॥४५॥ 28cd
26ab दग्धस्त्वयाहं न्यायेन ततोऽहं रघुनन्दन । 29ab
26cd वक्ष्यामि तमहं वीर यस्ते वक्ष्यति रावणं ॥४६॥ 29cd
27ab तेन सख्यं च कर्तव्यं न्यायवृत्तेन राघव । 30ab
27cd करिष्यति स ते वीर साह्याय्यमरिमर्दन ॥४७॥ 30cd
28ab न ह्यस्त्यविदितं तस्य त्रिषु लोकेषु राघव । 31ab
28cd सर्वान् परिसृतो देशान् स बली कारणान्तरे ॥४८॥ 31cd
29ab एवमुक्तौ तु तौ वीरौ तेनाथो रामलक्ष्मणौ । III.68.1ab
29cd गिरिप्रस्तरमारोप्य कबन्धं समुपेयतुः ॥४९॥ 1cd

काष्ठान्यादाय शुष्काणि पद्धिर्भिन्नानि कुञ्जरैः ।
धक्ष्यावस्त्वां चावां वीर ~~श्वभ्रे~~ महति कल्पिते ॥ १९ ॥
स त्वं सीतां समाचक्ष्व यत्र वा येन वा हृता ।
कुरु श्रेयः सम त्यर्थं यदि जानासि तत्त्वतः ॥ २० ॥
तस्मिन्साक्षिकं मित्रं कृत्वा सीतामवाप्स्यथः । २९ ab ।
~~एवमुक्तौ तु तौ वीरौ कबन्धेन नरोत्तमौ~~ ।

30ab काष्ठनिर्मथनादग्निं जनयित्वा महाबलौ ।
30cd कबन्धमवटे कृत्वा चक्रतुस्तौ चितां ततः ॥५०॥
31ab लक्ष्मणस्तु महोल्काभिर्ज्वलिताभिः समन्ततः । 2 ab
31cd चितामादीपयामास प्रजज्वाल च सर्वशः ॥५१॥ 2 cd
32ab तच्छरीरं कबन्धस्य घृतपिण्डोपमं महत् । 3 ab
32cd मेदसः पच्यमानस्य मन्दं दहति पावकः ॥५२॥ 3 cd
33ab स विधूय चितामाशु भूत्वा चानिमिषेक्षणः । 4 ab
33cd विमले वाससी बिभ्रन् मालां सन्तानिकीमपि ॥५३॥ 4 cd
ततश्चिताया वेगेन भास्वरो विरजोऽम्बरः । 5 ab
34ab उत्पपात तदा हृष्टः सर्वप्रत्यङ्गभूषितः ॥५४॥ 5 cd
34cd विमाने सोऽम्बरे तिष्ठन् हंसयुक्ते मनोरमे । 6 ab
35ab प्रभया च महातेजा दिशो दश विराजयन् ॥५५॥ 6 cd
35cd सोऽन्तरीक्षगतो रामं कबन्धो वाक्यमब्रवीत् । 7 ab
36ab शृणु राघव तत्त्वेन सीतां योऽधिगमिष्यति ॥५६॥ 7 cd
पम्पा नामाभितो वापी तदभ्यासमितो गिरिः ।
ऋष्यमूक इति ख्यातो वने वसति तस्य च ॥५७॥
सुग्रीव इति विख्यातः कामरूपो महाबलः ।
39ab सोऽभिगम्यश्च पूज्यश्च कर्तव्यश्च प्रदक्षिणं ॥५८॥
राम षड्युक्तयो लोके याभिः सर्वं विमृश्यते । 8 ab
परिमृश्य दशास्तास्ता दशाभागेन वर्तते ॥५९॥ 8 cd

तां दशामागतो दीनां त्वं राम सहलक्ष्मणः ।
यत्कृते व्यसनं प्राप्तं त्वया भार्यापहारजं ॥ ६० ॥
36cd तदवश्यं त्वया कार्यं सुमहत् सौहृदं वचः ।
37ab अकृत्वा न हि ते सिद्धिमहं पश्यामि चिन्तयन् ॥ ६१ ॥
38ab स तु ते राम धर्मात्मा सुग्रीवो नाम वानरः ।
38cd भ्रात्रा निरस्तः क्रुद्धेन बालिना शक्रसूनुना ॥ ६२ ॥ 11 cd
39cd ऋष्यमूके गिरिवरे पम्पापर्यन्तशोभिते । 12 ab
40ab स वसत्यात्मवान् शूरश्चतुर्भिः सह वानरैः ॥ ६३ ॥ 12 cd
40cd वयस्यं तं कुरु क्षिप्रमितो गत्वाद्य राघव । 13 ab
तत्सहायस्य पश्यामि तव कार्यविनिश्चयं ॥ ६४ ॥
तस्माद्वानरराजं तं कृतज्ञं व्रज सुव्रत ।
41ab अत्रोत्थाय समागम्य दीप्यमाने विभावसौ ॥ ६५ ॥ 13 cd
41cd न तु ते सोऽवमन्तव्यः सुग्रीवो वानरोऽपि सन् । 14 ab
42ab कृतज्ञः कामरूपी च सहायार्थे च कृत्यवान् ॥ ६६ ॥ 14 cd
44cd स हि शक्तो बली कर्तुं कार्यं ते हरियूथपः । 15 ab
45ab कृतार्थो वाकृतार्थो वा कृत्यं ते स करिष्यति ॥ ६७ ॥ 15 cd
45cd स वानरवरः श्रीमान् पम्पामटति शङ्कितः । 16 ab
47ab भास्करस्यौरसः पुत्रो बालिना कृतविग्रहः ॥ ६८ ॥ 16 cd
47cd संनिधायायुधं क्षिप्रमृष्यमूकालयं कपिं । 17 ab
48ab कुरु राघव सत्येन वयस्यं वानराधिपं ॥ ६९ ॥ 17 cd

देशकालौ सहायांश्च स्वयंकर्तेच्च कालाकाले ॥ 42cd ॥
नित्यं सचिन्तयानस्तु नानर्थानुपपद्यते । 43ab)
इदं त्ववश्यं कर्तव्यं युवाभ्यां पुरुषर्षभौ ॥ 43cd ॥
वानरेन्द्रो नरेन्द्राभ्यां सभायैः सचिवः सखा । 44ab)
स हि शक्तो बलं कर्तुं कार्येषु हरिपुङ्गवः ॥ 44 ।

48cd स हि स्थानानि सर्वाणि कार्त्स्न्येन कपिपुङ्गवः ।
49ab नरमांसाशिनां लोके नैपुण्येनोपलभ्यते ॥ ७० ॥
49cd न तस्याविदितं लोके किञ्चिदस्तीह राघव ।
51ab यावत् सूर्यः प्रतपति सहस्रांशुररिन्दम ॥ ७१ ॥
तावदेव सह भ्रात्रा गच्छ त्वं सूर्यनन्दनं ।
51cd स नदीर्विविधान् शैलान् गिरीणां कन्दराणि च ॥ ७२ ॥
51ef अन्विष्यन् वानरैः सार्धं पत्नीं तेऽधिगमिष्यति ।
वानरांश्च महावीर्यान् प्रेषयिष्यति वानरः ।
दिशो विचेतुं तां सीतां त्वद्वियोगेन कर्षितां ॥ ७३ ॥
सुमेरुशृङ्गाग्रे गतामनिन्दितां
50ab प्रमथ्य पातालतलेऽपि वाश्रितां ।
प्लवङ्गमानां प्रवरस्तव प्रियां
निरस्य रक्षांसि तव प्रदास्यति ॥ ७४ ॥
54ab

इत्यार्षे रामायणे आरण्यककाण्डे कबन्धवाक्यं नाम
पञ्चसप्ततितमः सर्गः ॥

वानरांश्च महाकायान् प्रेषयिष्यति राघव ॥45cd॥
दिशो विचेतुं तां सीतां त्वद्वियोगेन धावसि ।46ab)
मही विजानाति हरिप्रवीरः स्थानानि सर्वाणि च राक्षसानाम् ।
भ्रात्रा निरस्तः पृथिवीं विचिन्वन् मिः संशयं ज्ञास्यति यत्र सीता ॥52॥
वनानि सर्वाणि नदीश्च सर्वा बिलानि राजन् गिरिकन्दराश्च ।
अयं विचिन्वन् प्लवगैः समेतो विचिन्वतां सोऽप्यधिगन्तुमीशः ॥53॥
आनेष्यते नात्र विचारकारणं महाबलो वानरपुङ्गवो हरिः ॥50cd॥

L. E. III. 79

## LXXVI.

= 69

1ab निवेद्याथ स रामस्य सीतायाः प्रतिपादनं ।
1cd वाक्यमर्थार्थतत्त्वज्ञः कबन्धः पुनरब्रवीत् ॥१॥
2ab एष राम गतः पन्था येनैते पुष्पिता द्रुमाः ।
2cd प्रतीचीं दिशमाश्रित्य प्रकाशन्ते मनोहराः ॥२॥
3ab विल्वाः पियालाः पलसाः प्लक्षन्यग्रोधतिन्दुकाः ।
3cd अश्वत्थाः कर्णिकाराश्च मधूका धवचन्दनाः ॥३॥
4ab आरुह्य यदिवा भूमौ पातयित्वा यथासुखं ।
4cd फलान्यमृतकल्पानि भक्षयन्तौ गमिष्यथः ॥४॥
5ab संक्रामन्तौ बहून् देशान् शैलाच्छैलं वनाद्वनं ।
5cd ततः पुष्करिणीं रम्यां पम्पामासादयिष्यथः ॥५॥
6ab अशर्करां सुसलिलां समतीर्थामशैवलां ।
6cd राम संजातशालूकां कमलोत्पलमालिनीं ॥६॥
7ab तत्र हंसाः प्लवाः क्रौञ्चाः सारसाश्चैव राघव ।
वल्गुस्वरा विकूजन्ति पम्पासलिलगोचराः ॥७॥
नोद्विजन्ते नरान् दृष्ट्वा बधस्याकोविदाः पुरा ।
घृतपिण्डोपमान् स्थूलान् द्विजांस्तान् भक्षयिष्यथः ॥८॥
7cd रोहितान् शकुलांश्चैव नलमीनांश्च राघव ।
8ab पम्पायामिषुभिर्मत्स्यान् हत्वा राम वरान् वरान् ॥९॥
8cd तांस्तान् पक्वान् विनिष्टप्तानकृशानेककण्टकान् ।

9ab विचित्य पाणौ छित्वा च लक्ष्मणस्ते प्रदास्यति ॥१०॥ 10 cd
9cd सुखं ते खादतो मांसं पम्पायां पुष्पसंचये । 11 ab
10ab पद्मगन्धि शिवं वारि सुखं शीतमनाविलं ॥११॥ 11 cd
10cd आदाय पद्मिनीपत्रैर्लक्ष्मणस्तव दास्यति । 12 ab
पृषतश्चैव चित्राङ्गान् विमलान् वनचारिणः ॥१२॥
13ab तत्रानुपेतान् पम्पायां दृष्ट्वा शोकं विहास्यसि । 13 cd
13cd चित्राः सुमनसस्तत्र तिलकाः कृतमालकाः ॥१३॥ 14 ab
14ab उत्पलानि च फुल्लानि तथा तामरसानि च । 15 cd
चक्रवाकवलाकानां सारसानां च रासतां ॥१४॥
रम्यं कारण्डवानां च शब्दं श्रोष्यसि राघव ।
द्रक्ष्यसे पद्मषण्डानि व्याकोषाणि समन्ततः ॥१५॥
तप्तकाञ्चनवर्णानि दावाग्निसदृशानि च ।
14cd न तेषां तत्र माल्यानां कश्चिद्गोपयिता नरः ॥१६॥ 16 ab
15ab मतङ्गशिष्यास्तत्रासन्नृषयः सुसमाहिताः । 16 cd
15cd अथ तेषामनावृष्ट्यां वन्यमाहरतां गुरोः ॥१७॥ 17 ab
16ab ये प्रपेतुर्मह्यां तूर्णं शरीरात् स्वेदविन्दवः । 17 cd
16cd तानि माल्यानि जातानि मुनीनां भावितात्मनां ॥१८॥ 18 ab
17ab स्वेदविन्दुप्रसूतानि शोभयन्ति महत् सरः । 18 cd
17cd तेषामद्यापि तत्रैव दृश्यते सहचारिणी ॥१९॥ 19 ab
18ab श्रवणा शवरी नाम काकुत्स्थ चिरजीविनी । 19 cd

गृहीत्वा पद्मपत्रेण पाययिष्यति लक्ष्मणः ।
स्थूलान् गिरिगुहाशय्यान् वराहान् वनचारिणः ॥ ॥
वृषभस्कन्धवक्षस्कान् पम्पायां जलचारिणः ।
छायासु निःसृतान् राम दर्शयिष्यति लक्ष्मणः ॥१२॥

18cd त्वां तु धर्मरतं नित्यं सर्वभूतनमस्कृतं ॥ २० ॥
19ab+19cd दृष्ट्वा देवोपमं राम स्वर्गलोकं गमिष्यति ।
20ab गच्छ पम्पामितो राम भ्रात्रानेन सह द्रुतं ॥ २१ ॥
20cd बहुवृक्षान् वनोद्देशान् पश्यन् पुष्पसुगन्धिनः ।
21ab ततस्त्वं राम पम्पायास्तीरमासाद्य पश्चिमं ॥ २२ ॥
21cd आश्रमस्थानमतुलं शून्यं द्रक्ष्यसि राघव ।
22ab तत्रासन् यज्ञपात्राणि परित्यक्तानि मानद ॥ २३ ॥
22cd स्थानं प्रपचतां तत्र दृष्ट्वा नीवारतण्डुलान् ।
23ab पिप्पलीलवणाभ्यां च मत्स्यान् संपादयिष्यथः ॥ २४ ॥
23cd प्रभूततण्डुलीयं हि पिप्पलीप्रततं वनं ।
24ab न तमाक्रमितुं नागाः शक्नुवन्ति वराश्रमं ॥ २५ ॥ 22ab
24cd ऋषेस्तस्य मतङ्गस्य विविधं तच्च काननं । 22cd
25ab तस्मिन् नन्दनसंकाशे देवारण्यनिभे वने ॥ २६ ॥ 23ab
25cd नानाविहगसंघुष्टे न यात्येव जरां नरः । 23cd
26ab ऋष्यमूकस्तु पम्पायाः पुरस्तात् पुष्पितद्रुमः ॥ २७ ॥ 24ab
26cd स दुर्गारोहणो राम शिशुनागाभिरक्षितः ।
28ab यस्तु तं विषमाचारः पापकर्माधिरोहति ॥ २८ ॥ 26ab
28cd तत्रैवाशु हरन्त्येनं सुप्तमादाय राक्षसाः । 26cd
29ab शयानः पुरुषो राम तस्य शैलस्य मूर्धनि ॥ २९ ॥ 25ab
29cd यत् स्वप्ने लभते वित्तं तत् प्रबुद्धोऽधिगच्छति ।

बदरान् भक्षयन् दैत्यः पूर्वकालविनिर्मितः ।
न च तं विषमाचारः पापकर्माधिरोहति ॥ २७ ॥
पुष्पसमृद्धैः [illegible] रलङ्कृतः । 30 ab

उदारो ब्रह्मणश्चैत्यः पूर्वकालाभिनिर्मितः ॥३०॥
30cd महात्मभिर्महाप्रज्ञैश्चितस्तत्र द्विजातिभिः ।
31ab तत्रैव निशि नागानामाक्रन्दः श्रूयते महान् ॥३१॥
31cd क्रीडतां राम पम्पायां मतङ्गाश्रमसंनिधौ । 27 cd
32ab सिक्ता रुधिरधाराभिर्हत्वान्योन्यं वनद्विपाः ॥३२॥ 28 ab
32cd पृथक् तीर्थानि गाहन्ते मेघवर्णास्तरस्विनः । 28 cd
33ab ते तत्र पीत्वा पानीयं रजः प्रक्षाल्य चाङ्गजं ॥३३॥ 29 ab
33cd निवृत्ताः प्रतिगाहन्ते वनानि वनगोचराः । 29 cd
34ab राम तस्य तु शैलस्य महती शोभना गुहा ॥३४॥ 30 ab
34cd शिलापिधाना काकुत्स्थ दुर्गं चास्याः प्रवेशनं । 30 cd
35ab तस्या गुहायाः प्रद्वारे महान् शीतोदको ह्रदः ॥३५॥ 31 ab
35cd बहुपुष्पफलो रम्यो नानोरगसमावृतः । 31 cd
36ab तस्मिन् वसति सुग्रीवश्चतुर्भिः सचिवैः सह ॥३६॥ 32 ab
36cd कदाचिच्छिखरे तस्य पर्वतस्यावतिष्ठते । 32 cd
37cd कबन्धस्त्वनुशास्यैवमुभौ तौ रामलक्ष्मणौ ॥३७॥ 33 ab
38ab स्रग्वी भास्करवर्णाभः खे व्यराजत वीर्यवान् । 33 cd
38cd तं तु खस्थं महाभागं कबन्धं रामलक्ष्मणौ ॥३८॥ 34ab
39ab स्वस्ति तेऽस्तु प्रयाहीति राघवौ वाक्यमूचतुः । 35 ab
39cd गम्यतां कार्यसिद्ध्यर्थमित्युवाच ततो दनुः । 35 cd
39ef सुप्रीतौ तावनुज्ञातौ दनुं संपूज्य जग्मतुः ॥३९॥ 35 ef

भ्रात्रा निरस्तः क्रुद्धेन तेन सख्यं विधीयताम् (37ab)

ततः कबन्धः प्रतिपद्य रूपं
श्रियान्वितो भास्करसन्निभौजसा ।
तदात्मरूपं समवेक्ष्य रामं
सख्यं कुरुष्वेति ततोऽभ्युवाच ॥४०॥

LXXVII. = 70

L.E. III. 80.

1ab ततः कबन्धः खगतः स्रग्वी भास्करदर्शनः ।
1cd जगामामन्त्र्य काकुत्स्थं शुभं भवनमात्मनः ॥ १ ॥
3ab तौ कबन्धेन तं मार्गं पम्पाया दर्शितं वने । 1ab
3cd आदाय तस्थतुः प्राचीं दिशं दशरथात्मजौ ॥ २ ॥ 1cd
4ab तौ शैलैराचितान् देशान् क्षौद्रकल्पफलद्रुमान् । 2ab
4cd त्वरितौ जग्मतुर्द्रष्टुं सुग्रीवं रामलक्ष्मणौ ॥ ३ ॥ 2cd
5ab कृत्वा तु शैलपृष्ठे तौ वासमेकां निशां ततः । 3ab
5cd प्रभातायां पुनर्वीरौ जग्मतुः प्रथमेऽह्नि ॥ ४ ॥
6ab तौ गत्वा दूरमध्वानं विचित्रवनभूषितं ।
6cd पम्पायाः पश्चिमं तीरं राघवावुपतस्थतुः ॥ ५ ॥ 3cd
7ab तौ पुष्करिण्याः पम्पायास्तीरमासाद्य पश्चिमं । 4ab
7cd ततो ददृशतुस्तत्र शबर्या रम्यमाश्रमं ॥ ६ ॥ 4cd
8ab तौ तमाश्रममासाद्य द्रुमैर्बहुभिरावृतं । 5ab
8cd सुरम्यमभिपश्यन्तौ शबरीमभ्युपेयतुः ॥ ७ ॥ 5cd
9ab तौ दृष्ट्वा सा तदा सिद्धा समुत्थाय कृताञ्जलिः । 6ab
9cd पादौ रामस्य जग्राह लक्ष्मणस्य च धीमतः ॥ ८ ॥ 6cd
10ab तामुवाच ततो रामः शबरीं शंसितव्रतां । 7ab
10cd कच्चित् ते निर्जिता विघ्नाः कच्चित् ते वर्त्तते तपः ॥ ९ ॥ 7cd

ततः कबन्धे काकुत्स्थौ प्रयाते स्वस्थलङ्कृते ।
विमानस्थे दिवं तस्मिन् विस्मयं परमं गतौ ॥ १ ॥

12ab कच्चित् ते गुरुशुश्रूषा सफला गुरुवत्सले ।
12cd कच्चित् ते विनयः प्राप्तः कच्चित् तेऽन्द्रियसंयमः ॥१०॥
13ab क्व च ते संशितात्मानस्तपःसिद्धा महर्षयः ।
ये त्वयोपासिताः पूर्वं श्रोतुमिच्छामि तानहं ॥११॥
13cd राघवेण तथा पृष्टा सा सिद्धा सिद्धसंमता । 9ab
14ab शशंस शवरी तस्य ये मया पर्युपासिताः ॥१२॥ 9cd
15ab चित्रकूटं त्वयि प्राप्ते विमानैरतुलप्रभैः । 10ab
15cd इह ते दिवमारूढा ये मयाभ्यर्चिताः पुरा ॥१३॥ 10cd
16ab तैश्चाहमुक्ता धर्मिष्ठैर्महाभागैर्महर्षिभिः । 11ab
16cd आगमिष्यति काकुत्स्थः सुपुण्यमिममाश्रमं ॥१४॥ 11cd
17ab स ते प्रतिगृहीतव्यो रामः सौमित्रिणा सह । 12ab
17cd तमर्चित्वा ध्रुवं स्वर्गो भविष्यति तवाक्षयः ॥१५॥
18ab मया तु विविधं वन्यं संचितं रघुनन्दन । 13ab
18cd तवार्थे नरशार्दूल पम्पायामिह दृश्यतां ॥१६॥ 13cd
19ab स एवमुक्तो धर्मात्मा शवर्या शवरीमिदं । 14ab
19cd उवाच रामो विज्ञाय तापसैरवहिष्कृतां ॥१७॥ (14cd)
20ab दनोः सकाशात् तत्त्वेन प्रभावो मे महात्मनां । 15ab
20cd श्रुतः प्रत्यक्षमिच्छामि तत्त्वेनाद्य निरीक्षितुं ॥१८॥ 15cd
21ab एतत् तु वचनं श्रुत्वा रामवक्त्राद्विनिःसृतं । 16ab
शवरी दर्शयामास तावुभौ तद्वनं महत् ॥१९॥ 16cd

III. 40
कच्चित् ते निर्जितः कोपो मोहश्च वरवर्णिनि ।
कच्चित् ते [illegible] प्राप्तं कच्चित् ते मनसः सुखम् ॥ ॥

21ab उवाच वचनं चेदं तावुभौ रामलक्ष्मणौ ।
बहुपुष्पफलं रम्यं दर्शनीयं महद्वनं ॥२०॥
22ab पश्य मेघचयप्रख्यं मृगपक्षिगणायुतं । 17ab
22cd मतङ्गवनमित्येतद्विश्रुतं भुवि राघव ॥२१॥ 17cd
23ab इह ते भावितात्मानो गुरवो मे महाद्युते । 18ab
23cd जुहुवां चक्रुरनलं मन्त्रवन्मन्त्रकोविदाः ॥२२॥ 18cd
24ab इयं प्रत्यक्स्थली वेदी यत्र ते देवसत्क्रियाः । 19ab
24cd पुष्पोपहारैः प्रणताश्चक्रुरभ्युद्यतैः करैः ॥२३॥ 19cd
25ab तेषां तपःप्रभावेन पश्याद्यापि रघूत्तम । 20ab
25cd न म्लायन्ति न शुष्यन्ति कुसुमानि कुशास्तथा ॥२४॥ 20cd
26ab अशक्नुवद्भिस्तैर्गन्तुमुपवासश्रमालसैः । 21ab
26cd चिन्तितानागतान् पश्य सहितान् सप्त सागरान् ॥२५॥ 21cd
27ab कृताभिषेकैर्न्यस्तानि वल्कलानीह तैर्द्विजैः । 22ab
27cd पश्याद्यापि न शुष्यन्ति वृक्षासक्तानि राघव ॥२६॥ 22cd
28ab एतांश्चान्यांश्च सा तस्मै प्रभावांस्तपसो बलात् ।
28cd तेषां मुनीनामाचष्ट रामाय विदितात्मने ॥२७॥
29ab आश्चर्यमिति रामश्च प्रतिजग्राह तद्वचः ।
29cd वचनान्ते च सा राममिदं वचनमब्रवीत् ॥२८॥
30ab कृत्स्न वनमिदं दृष्टं श्रोतव्यं च श्रुतं त्वया । 23ab
30cd तदिच्छाम्यभ्यनुज्ञातुं त्यजामीदं कलेवरं ॥२९॥ 23cd

31ab तेषामिच्छाम्यहं गन्तुं मुनीनां भावितात्मनां ।
31cd समीपमाश्रमस्थानां यानहं पर्यचारिषं ॥३०॥
32ab धर्मिष्ठं तु वचस्तस्याः श्रुत्वा रामः सलक्ष्मणः ।
32cd अनुज्ञानामि गच्छेति प्रहृष्टवदनोऽब्रवीत् ॥३१॥
33ab अनुज्ञाता तु रामेण हुत्वात्मानं हुताशने । 26ab
33cd ज्वलन्ती स्वेन वपुषा स्वर्गमेव जगाम सा ॥३२॥ 26cd
34ab यत्र ते सुकृतात्मानो विहरन्ति महर्षयः । 27ab
34cd तत् पुण्यं शबरी स्थानं जगामैव समाधिना ॥३३॥ 27cd

इत्यार्षे रामायणे आरण्यककाण्डे कबन्धोपदशो नाम
षट्सप्ततितमः सर्गः — शबरीदर्शनं नाम
सप्तसप्ततितमः सर्गः ॥

शबरीमप्यनुज्ञाप्य रामोऽपि वदतां वरः
पम्पामभिमुखो वीरो जगामाद्भुतदर्शनाम् ॥35॥

## LXXVIII.

दिवं तस्यां तु यातायां शर्वर्यां स्वेन कर्मणा ।
लक्ष्मणेन सह भ्रात्रा चिन्तयामास राघवः ॥१॥
चिन्तयित्वा तु धर्मात्मा प्रभावं तं महात्मनां ।
इदं भ्रातरमेकाग्रं लक्ष्मणं वाक्यमब्रवीत् ॥२॥
दृष्टोऽयमाश्रमः पुण्यो बह्वाश्चर्यो महात्मनां ।
विश्वस्तमृगशार्दूलो नानाविहगसेवितः ॥३॥
सप्तानां तु समुद्राणामेषां तीर्थेषु लक्ष्मण ।
उपस्पृष्टं तु विधिवत् पितरश्चैव तर्पिताः ॥४॥
प्रनष्टमशुभं सर्वं कल्याणं समुपस्थितं ।
तथा हि संप्रहृष्टं मे हृदयं पश्य लक्ष्मण ॥५॥
हृदयं हि नरस्याह शुभं वा यदिवाशुभं ।
पूर्वं हि मनसा ध्यातं पश्चादेतदवाप्यते ॥६॥
यैरद्य दृष्टैर्नियतं शोकः शान्तिमवाप्स्यति ।
तानीमानि च दृश्यन्ते मनोज्ञानि समन्ततः ॥७॥
मन्दस्तु मन्दशिशिरो विरजाः प्रणुदन् क्लमं ।
अनुलोमसुखो वायुरनुसारयतीव मां ॥८॥
शोकश्च मनसो मेऽद्य मन्दमन्दमपैति च ।
स्थिरीभवन्ति गात्राणि विशुध्यन्तीन्द्रियाणि च ॥९॥

एवमप्यतितप्तस्य शोको मे व्यवधूयते ।
शरीरे जायते लक्ष्मीर्धृतिश्चैव यथा पुरा ॥ १० ॥
न चापि दर्शनं दूरे तस्या वाप्या विचिन्तये ।
वीक्षस्व पुरुषव्याघ्र सिद्धिं शंसन्ति लक्ष्मण ॥ ११ ॥
एते मम सुखाः सौम्या मृगाः सर्वे प्रदक्षिणाः ।
मनोज्ञैः परितो वाग्भिर्गायन्तीव महागिरौ ॥ १२ ॥
सुखशीतो वनस्यास्य नानागन्धवहः शिवः ।
देशयन्निव पन्थानं मन्दं वहति मारुतः ॥ १३ ॥
सुप्रभं च प्रसन्नं च वदनं तेऽद्य लक्ष्मण ।
पूर्वं हि हृदयेऽज्ञातौ गुणदोषौ समश्नुते ॥ १४ ॥
शक्यं चिरमपि स्थातुं पुण्येऽस्मिन् मुनिसंश्रये ।
न च तृप्तिं गमिष्यामि वर्षाणामयुतैरपि ॥ १५ ॥
मार्गितव्या तु वैदेही त्वया सह ममानघ ।
न स्यात् कालो द्युतिमते आसीनानामिहाश्रमे ॥ १६ ॥
तस्मादागच्छ गच्छावस्तां पम्पां शुभकाननां ।
ऋष्यमूको गिरिर्यस्या नातिदूरे प्रकाशते ॥ १७ ॥
यस्मिन् वसति स प्राज्ञः सुग्रीवोंऽशुमतः सुतः ।
नित्यं बालिभयत्रस्तश्चतुर्भिः सचिवैः सह ॥ १८ ॥
तमहं त्वरितो द्रष्टुं स्वकार्यत्वरया हरिं ।
तदधीनं हि नः सौम्य सीतायाः परिमार्गणं ॥ १९ ॥

ब्रुवाणमेवं तु तदा रामं सौमित्रिरब्रवीत् ।
11ab गच्छावः सहितौ तत्र ममापि त्वरते मनः ॥ २० ॥
11cd आश्रमादथ निष्क्रम्य तस्मात् स रघुनन्दनः ।
12ab आजगाम ततः पम्पां नानापादपशोभितां ॥ २१ ॥
निरीक्षमाणो विविधान् सर्वतः पुष्पितान् द्रुमान् ।
प्रमदाभिरिव स्कन्धे लताभिः परिवेष्टितान् ॥ २२ ॥
कोयष्टिकैर्वञ्जुलकैः शतपत्रैस्तित्तिरीटकैः ।
पुत्रप्रियैः पूर्णमुखैर्भरद्वाजैः प्रियम्वदैः ॥ २३ ॥
एतैरन्यैश्च विहगैर्नादितं तन्महद्वनं ।
असावगच्छद्विक्रान्तो राघवः सहलक्ष्मणः ॥ २४ ॥
12cd स ददर्श ततः पम्पां शुभशीतजलाशयां ।
प्रहृष्टनानाशकुनां बहुपादपसंकुलां ॥ २५ ॥
कुमुदोत्पलिनीं रम्यां शुभां मणिनिभोदकां ।
17ab बहुपङ्कजसंबाधां बहुपुष्करमण्डितां ॥ २६ ॥
17cd हंसकारण्डवाकीर्णां महर्षिगणसेवितां ।
चक्रवाकोपक्रीडां च कादम्बैः कूजितां तथा ॥ २७ ॥
18ab वीज्यमानस्तु शीतेन सुखस्पर्शेन वायुना ।
18cd जहौ परिश्रमं रामः सह सौमित्रिणा तदा ॥ २८ ॥
19ab द्रुमान् पुष्पफलोपेतान् परपुष्टविनादितान् ।
20cd मृदुशाद्वलनीलानि दृष्ट्वा भूमितलानि च ॥ २९ ॥

नानातरुलताकीर्णां शीतपानीयवाहिनीम् ।
पद्मैः सुगन्धिभिस्ताम्रैः श्वेतैः कुवलैरपि ॥ 13 ॥
चित्रां बहुविधैश्चित्रैर्बहुरूपां मनोरमाम् । पुत्रप्रियैः पूर्णमुखैर्भरद्वाजैः प्रियम्वदैः ॥ 4 ॥
एतैश्चान्यैश्च विविधैर्नादितं तन्महावनम् । नच्चैव बच्छदति [illegible] राघवः सहलक्ष्मणः ॥ 5 ॥
ददर्श स ततः पम्पां शुभशीतजलाशयाम् । प्रहृष्टनानाशकुनां बहुपादपसङ्कुलाम् ॥ 6 ॥

21ab संप्रहृष्टस्ततो रामः पम्पां च सुमनोहरां ।
21cd बालार्कसदृशैः पद्मैः प्रदीप्तामिव सर्वतः ॥३०॥
महाबलौ तां तु शिवामकर्दमां
23ab निरीक्ष्य पम्पामभिरामदर्शनां ।
ऋषीततां विष्णुपदीं महानदीं
23cd यथैव मित्रावरुणावहृष्यतां ॥३१॥

इत्यार्षे रामायणे आरण्यककाण्डे पम्पागमनं नाम
अष्टासप्ततितमः सर्गः ॥

पद्मानि च विकीर्णानि वीक्षमाणो महीतले ॥ १९cd ॥
मत्तहंसरुतोद्गीतां सारसैः संप्रणादिताम् ॥ २०ab ॥

ततो महात्मा ह्यविदूरमन्तरं
क्रमेण गत्वा प्रविलोकयन् वनम् ।
ददर्श पम्पां शुचिशीतलोदकां
अनेकनानाविधपक्षिसेविताम् ॥ २२ ॥

## LXXIX.

L.E-III-82.

2 ab तां समन्तात् समालोक्य रम्यां पुष्करिणीं शुभां ।
1 cd रामः सौमित्रिमाभाष्य विललापाकुलेन्द्रियः ॥ १ ॥
3 ab सौमित्रे पश्य पम्पायाः काननं शुभदर्शनं ।
आजन्ते यत्र शैलाभा द्रुमाः सशिखरा इव ॥ २ ॥
6 ab सुखानिलोऽयं सौमित्रे कालः प्रचुरमन्मथः ।
6 cd गन्धवान् सुरभिर्वातो नानापुष्पितकाननः ॥ ३ ॥
7 ab पश्य पुष्पाणि सौमित्रे वनानां पुष्पशालिनां ।
7 cd सृजतां पुष्पवर्षाणि वर्षं तोयमुचामिव ॥ ४ ॥
8 ab प्रस्तरेषु च रम्येषु विविधाः काननद्रुमाः ।
8 cd वायुवेगप्रचलिताः पुष्पैरवकिरन्ति मां ॥ ५ ॥
9 ab मारुतः सुखसंस्पर्शो वाति चन्दनशीतलः ।
9 cd षट्पदैरभिकूजद्भिर्वनेषु च सुगन्धिषु ॥ ६ ॥
10 ab गिरिप्रस्थेषु सौमित्रे पुष्पवद्भिर्मनोरमैः ।
10 cd संसक्तविटपस्कन्धैर्द्रुमैर्निरीक्ष्यं नभस्तलं ॥ ७ ॥
11 ab पुष्पिताग्रांश्च पश्येमान् कर्णिकारान् समन्ततः ।
11 cd हाटकप्रतिमाच्छन्नान् नरान् पीताम्बरानिव ॥ ८ ॥
12 ab वसन्तकालः प्राप्तोऽयं नानाविहगकूजितः ।
12 cd विशालाक्षीविहीनस्य मम शोकविवर्धनः ॥ ९ ॥

स तां पुष्करिणीं रम्यां पद्मोत्पलसमाकुलाम् । 1 ab
सोन्मादो विस्मितः सास्रः सौमित्रिमिदमब्रवीत् ॥ 2 cd ॥
द्रुमाणां विविधैः पुष्पैः परिस्तोमैरिवार्चितैः ।
अधिकं प्रतिभात्येतन्नीलपीतैश्च शाड्वलैः ॥ ४ ॥
भरतस्य च दुःखेन वैदेह्या हरणेन च ।
तेन शोकाभिभूतं मां सन्तापयति दुःखितम् ॥ 5 ॥

13ab सौमित्रे मां सुदुःखार्त्तं संतापयति मन्मथः ।
13cd हृष्टो विवदमानश्च कोकिलो मामिवाह्वयन् ॥ १० ॥
प्रियासहायो मुदितो वसन्तकामदीपितः ।
14ab एष दात्यूहको हृष्टो रम्ये काननर्निर्झरे ॥ ११ ॥
14cd प्रवदन् मन्मथाविष्टः स्वकान्तामनुतिष्ठति ।
विचित्रमिह गायन्ति वायुभोगाभिनन्दिनः ॥ १२ ॥
17cd भृङ्गराजाभिरुदिताः सौमित्रे मधुरस्वराः ।
18ab मां विना मृगशावाक्षीं सीतां बाष्पजडीकृतां ॥ १३ ॥
18cd संतापयन्ति सौमित्रे क्रूरश्चित्रामिव ग्रहः ।
19ab शिखिनीभिर्वृता भान्ति मयूरा गिरिसानुषु ॥ १४ ॥
20ab पश्य लक्ष्मण नृत्यन्तं मयूरमनुनृत्यतीं ।
20cd मयूरीं मन्मथाविष्टां मम शोकविवृद्धये ॥ १५ ॥
21ab नैव नूनं मयूरस्य रक्षसापहृता प्रिया ।
21cd अहं यथा विरहितः पुष्पमासि सुमध्यमां ॥ १६ ॥
23ab परिचुम्बति संविश्य भ्रमरश्चूतमञ्जरीं ।
23cd नवसंगमसंहृष्टः कामी प्रणयिनीमिव ॥ १७ ॥
22ab पश्य चान्यानि पुष्पाणि निष्फलानि भवन्ति मे ।
पुष्पभारसमृद्धानां द्रुमाणां शिशिरात्यये ॥ १८ ॥
27ab एष पुष्पवहो वायुः सुखस्पर्शः सुखावहः ।
27cd तां विचिन्तयतः कान्तां पावकप्रतिमो मम ॥ १९ ॥

III.
मां दृष्ट्वैव मृगी याति तं मृगोऽप्यपधावति । वक्ष्यतीव मयि क्रुद्धा आर्या हर मृगं सखे ॥15॥
वारणोऽयं स्वकां भार्यां स्वनुरक्तोऽनुयायिनीम् । मत्तमातङ्गमिवायान्तं वारेण परिमार्जति ॥16॥
विमिश्रा विहगैः पुंभिरन्यपुष्टैर्विनादिताः । 17ab
प्रवृत्ता मन्मथोन्मत्ता मम मन्मथवर्धनाः ॥ 19cd॥
भ्रमरश्चूतमञ्जर्यां चलत्पल्लवपाणिना । निकोषः सांप्रतं नार्या सव्यलीक इव प्रियः ॥24॥
पुष्पभारसमृद्धानां द्रुमाणां शिशिरात्यये । 25ab

26ab श्यामा पद्मपलाशाक्षी विनाभूता मया प्रिया ।
26cd सीता परवशं प्राप्ता सापि शोच्या वयं यथा ॥ २० ॥
25ab अस्मिन् काले प्रमुदिताः संघशः शकुनाः कलं ।
25cd आह्वयन्ति इवान्योन्यं कामोत्साहकरा मम ॥ २१ ॥
28ab नमिताङ्गोऽयमस्तब्धो मत्तः प्रमुदितः सुखं ।
28cd वायसः शिखरस्यान्ते दृष्टं मामभिनन्दति ॥ २२ ॥
29ab एष मे तत्र वैदेह्याः सकाशं कथयिष्यति ।
29cd पक्षी कुशलवृत्तान्तं तस्याश्च कुशलं मम ॥ २३ ॥
32ab पश्य लक्ष्मण संवादं मम मन्मथवर्धनं ।
32cd पुष्पिताग्रेषु वृक्षेषु द्विजानामनुकूजतां ॥ २४ ॥
33ab सौमित्रे पश्य पम्पायाश्चित्रासु वनराजिषु ।
मधुरं कोकिलालापमृतुदोषेण कूजतां ॥ २५ ॥ ✓
35ab एषा प्रसन्नसलिला पद्मिनी चोत्पलायुता ।
35cd हंसकारण्डवाकीर्णा फुल्लसौगन्धिकाकुला ॥ २६ ॥
36ab चक्रवाकयुता नित्यं विचित्रकुसुमोत्करा ।
36cd मातङ्गमृगयूथैश्च सेवितेयं जलार्थिभिः ॥ २७ ॥
37ab पद्मान्यशोकपुष्पाणि दृष्ट्वा दृष्टिर्विहन्यते ।
37cd सीताया नेत्रकोषाभ्यां सदृशानीव लक्ष्मण ॥ २८ ॥
38ab पद्मपुष्परजोन्मिश्रो वृक्षान्तरविनिःसृतः ।
38cd निश्वास इव सीताया वायुर्वाति मनोरमः ॥ २९ ॥

एष कूजति चक्राह्वो रमयन् सहचारिणीम् । न चापि दर्शनादस्य निमेषमपि नेक्ष्यति ॥30॥
तर्जयन्निव संयाति सिंहोऽयं आश्रया वने । मां मूढबुद्धिं संप्राप्तो न विमुक्तः पदात् पदम् ॥31॥
नलिन्यः संप्रकाशन्ते जले तरुणसूर्यवत् ॥ 33cd ॥
हिमसाधंकमानाभिः फुल्लैस्तिलकपादपैः । भीताभिरिव वल्लीभिः कुड्मलाञ्जलयः कृताः ॥34॥

39ab सौमित्रे पश्य पम्पायां दक्षिणे गिरिसानुषु ।
39cd पुष्पिताः कर्णिकारस्य यष्टीः परमशोभनाः ॥३०॥
40ab अधिकं शैलराजोऽयं धातुभिश्च विभूषितः ।
40cd धातुजं सृजते रेणुं वायुवेगेन घर्षितं ॥३१॥
पम्पातीररुहाश्चैव पुष्पिता मधुगन्धिनः ।
मालत्यो मल्लिकाश्चैव करवीराः सुपुष्पिताः ॥३२॥
41ab गिरिप्रस्थे तु सौमित्रे सर्वतः पुष्पितान् द्रुमान् ।
41cd निष्पत्रान् दूरतः पश्य प्रदीप्तानिव किंशुकान् ॥३३॥
शोभन्ते माधवे मासि सिन्धुवाराः सुपुष्पिताः ।
चिरविल्वा मधूकाश्च वञ्जुलास्तिन्दुकास्तथा ॥३४॥
चम्पकास्तिलकाश्चैव नागपुष्पाश्च पुष्पिताः ।
42cd अर्जुना मुचुकुन्दाश्च दृश्यन्ते गिरिसानुषु ॥३५॥
43ab केतकोद्दालकाश्चैव शिरीषाः शिंशपास्तथा ।
44ab धवाः शाल्मलयश्चैव रक्ताः कुरुवकास्तथा ॥३६॥
44cd तिनिशा नक्तमालाश्च चन्दनाः पिचुला अपि ।
43cd तथा तालास्तमालाश्च नागवल्ल्यः करञ्जकाः ॥३७॥
45ab उदुम्बराः कदम्बाश्च पूर्णकाः पारिभद्रकाः ।
45cd नीपाश्च वरुणाश्चैव सर्वतो भान्ति पुष्पिताः ॥३८॥
47ab वनेषु पश्य सौमित्रे द्रुमाणां पुष्पसंपदं ।
47cd पुष्पमासं विकुर्वाणाः प्रहर्षादिव पुष्पिताः ॥३९॥

पम्पातीररुहाश्चैव कोविदाराश्च पुष्पिताः । 42ab
विविधा विविधैः पुष्पैः शाद्वला वनसानुषु ।
विकीर्णाः पीतरक्ताभैः सौमित्रे प्रस्तरीकृताः ॥ 46 ॥

48 ab पश्य पम्पां शुभजलां सुप्रभां पुष्करावृतां ।
48 cd चक्रवाकानुचरितां हंसकारण्डवायुतां ॥ ४० ॥
49 ab प्लवैः क्रौञ्चैश्च संघुष्टां सारसैरभिनादितां ।
49 cd अधिकं शोभते पम्पा कूजद्भिर्विहगोत्तमैः ॥ ४१ ॥
50 ab दीपयन्ति च मे कामं विविधा मुदिता द्विजाः ।
50 cd श्यामां पद्ममुखीं स्मृत्वा मन्मथो वर्धते मम ॥ ४२ ॥
51 ab पश्य सानुषु चित्रेषु मृगीभिः सहितान् मृगान् ।
51 cd अहं तु मृगशावाक्ष्या वैदेह्या रहितोऽसुखी ॥ ४३ ॥
अस्मिन् सानुरुहे रम्ये मत्तद्विजगणायुते ।
पद्मसौगन्धिकयुते दुःखशोकापहे शिवे ॥ ४४ ॥
रमेयं विहगोद्घुष्टे विविधे काननोत्तमे ।
पश्येयं यदि वैदेहीं नलिन्युपवने सुखे ॥ ४५ ॥
54 ab हा प्रिये मृगशावाक्षि तप्तकाञ्चनवर्णिनि ।
54 cd कष्टं मां नाभिजानासि विह्वलितं मूर्खचेतसं ॥ ४६ ॥
55 ab निर्वास्यमानं कैकेय्या हृतराज्यं वने चरं ।
55 cd मा त्यजः कथमद्य त्वं त्यक्त्वा निर्विषयं गता ॥ ४७ ॥
56 ab क्व प्रीतिः क्व च ते उक्तिः क्व भक्तिः क्व च सा दया ।
56 cd. यन्न मां दुःखशोकार्तं नाभिजानासि जानकि ॥ ४८ ॥
57 ab एवं स विलपंस्तत्र शोकोपहतचेतनः ।
57 cd अवैक्षत शिवां पम्पां रम्यवारिवहां शुभां ॥ ४९ ॥
एक एव सुखी लोके चक्रवाको विहंगमः ।
यस्य दृष्टिमनोरम्या छायेवानुगता प्रिया ॥ 52 ॥
प्रत्यादिशति मां मूर्खं चक्रवाकः सुपण्डितः ।
एवं हि रक्ष्यते नारी न त्वया रक्षिता यथा ॥ 53 ॥

निरीक्षमाणस्तु ततो महात्मा
58ab सर्वं वनं पादपनिर्झरांश्च ।
उद्विग्नचेताः सह लक्ष्मणेन
58cd विलप्य दुःखोपहतः प्रतस्थे ॥५०॥
तावृष्यमूकं सहितौ प्रयातौ
59ab सुग्रीवशाखामृगसेवितं तं ।
त्रस्ताश्च दृष्ट्वा हरयो बभूवुर्
59cd महौजसौ राघवलक्ष्मणौ तौ ॥५१॥

इत्यार्षे रामायणे महर्षिवाल्मीकीये आदिकाव्ये
चतुर्विंशतिसाहस्र्यां संहितायाम्
आरण्यककाण्डे रामोन्मादकरो नाम
नवसप्ततितमः सर्गः ॥

आरण्यककाण्डं समाप्तं ॥

# अथ
# श्रीरामायणे वाल्मीकीये
# किष्किन्ध्याकाण्डं

IV.1. = I. = 2

1ab तौ तु दृष्ट्वा महात्मानौ भ्रातरौ रामलक्ष्मणौ । 1ab
सुग्रीवः परमोद्विग्नः सर्वैरनुचरैः सह ॥ १ ॥ 1cd
चिन्तयाभिपरीतात्मा निश्चित्य गिरिलङ्घने ।
1cd वरायुधधरौ वीरौ सुग्रीवः प्लवगेश्वरः ॥ २ ॥ 1cd
2ab न स चक्रे मनः स्थातुं वीक्षमाणो महाबलौ ।
उद्विग्नहृदयः सर्वा दिशः समवलोकयन् ॥ ३ ॥ 2ab
व्यवातिष्ठत नैकस्मिन् देशे वानरपुङ्गवः । 2cd
3ab स चिन्तयामास विभुर्विमृश्य च पुनः पुनः ॥ ४ ॥ 4ab
3cd त्यक्तुकामो गिरेः शृङ्गं यत्रासीत् समवस्थितः ।
चिन्तयन्नेव सहसा हनूमत्प्रमुखान् हरीन् ॥ ५ ॥
मन्त्रनिश्चयतत्त्वज्ञान् समीपस्थान् व्यलोकयत् ।
4ab ततः स सचिवेभ्यस्तु सुग्रीवः प्लवगाधिपः ॥ ६ ॥ 5ab

III.

कपिः परमभीतस्तु चिन्तां वा मनसा दधे ॥2cd॥

शशंस परमोद्विग्नो गच्छन्तौ रामलक्ष्मणौ ।
एतौ वनमिदं दुर्गं बालिप्रणिहितौ चरौ ॥ ७ ॥
छद्मना चीरवसनौ मनुष्यावागताविह ।
ततः सुग्रीवसचिवा दृष्ट्वा तौ वरधन्विनौ ॥ ८ ॥
जग्मुस्ते शिखरं तस्मादन्यत् प्लवगपुङ्गवाः ।
ते क्षिप्रमभिसंगम्य यूथपा यूथपर्षभं ॥ ९ ॥
हरयो वानरश्रेष्ठं परिवार्योपतस्थिरे ।
ततः शाखामृगाः सर्वे प्लवमाना महाबलाः ॥ १० ॥
वेगेनाकम्पयन् वृक्षान् गिरीणां शिखराणि च ।
एवमेकायने दुर्गे प्लवमाना गिरेर्गिरिं ॥ ११ ॥
बभञ्जुः पादपांस्तत्र पुष्पितांश्च वनद्रुमान् ।
सालाश्वकर्णककुभास्तिलकार्जुनवञ्जुलाः ॥ १२ ॥
पातिताः सहसा सर्वे न्यग्रोधाश्वत्थतिन्दुकाः ।
व्याघ्रगोकर्णकपयो वराहा मृगयूथपाः ॥ १३ ॥
त्रासिताः सहसा भीतिर्भीता दश दिशो गताः ।
प्लवमानैः कपिवरैरप्रमत्तैः प्रवेगितैः ॥ १४ ॥
सत्त्वान्यतिप्रविद्धानि त्रासितानि हतानि च ।
शिखराच्छिखरं गत्वा सुपर्णानिलवेगितः ॥ १५ ॥
मलयस्योत्तरे शृङ्गे सुग्रीवस्तु स्थितोऽभवत् ।
आप्लुत्य गिरिदुर्गाणि मलयस्य वनौकसः ॥ १६ ॥

8cd मार्जारमृगशार्दूलांस्त्रासयन्तो ययुस्तदा ।
ततः सुग्रीवसचिवाः पर्वतेन्द्रं समाश्रिताः ॥ १७ ॥
8ef संगम्य कपिमुख्येन स्थिताः प्राञ्जलयस्तदा ।
9ab ततस्तमुपसंभ्रान्तं बालिकिल्बिषशङ्कितं ॥ १८ ॥
9cd उवाच हनुमान् प्राज्ञः सुग्रीवं वाक्यमर्थवत् ।
10ab कस्मादुद्विग्नचेतास्त्वं प्रद्रुतो हरिपुङ्गव ॥ १९ ॥
10cd तं घोरदर्शनं क्रूरं नेह पश्यामि बालिनं ।
11ab यस्मात् तव भयं नित्यं पूर्वजात् पापकर्मणः ॥ २० ॥
11cd स नेह बाली दुष्टात्मा न ते पश्याम्यहं भयं ।
12ab अहो शाखामृगत्वं ते व्यञ्जितं प्लवगर्षभ ॥ २१ ॥
12cd विनीतिरभिविख्यातैः सैव ते लघुचित्तता ।
13ab बुद्धिविज्ञानसंपन्नैरिङ्गितज्ञैर्महात्मभिः ॥ २२ ॥
13cd न ह्यबुद्धिंगतो राजा सर्वभूतानि पाति ह ।
14ab सुग्रीवस्तु शुभं वाक्यं श्रुत्वा तत्र हनूमतः ॥ २३ ॥
14cd ततः शुभतरं वाक्यं हनूमन्तमुवाच ह ।
15cd एतौ दृष्ट्वा महावीर्यौ धन्विनौ विपुलौजसौ ॥ २४ ॥
15ab दीर्घबाहू विशालाक्षौ न स्यात् कस्य महद्भयं ।
16cd बालिप्रणिहितावेतौ शङ्केऽहं पुरुषोत्तमौ ॥ २५ ॥
17ab बहुमित्राश्च राजानः शत्रुषु प्रहरन्ति च ।
18cd कृत्येषु बाली मेधावी राजानो बहुदर्शनाः ॥ २६ ॥

19ab भवन्ति परहन्तारस्ते ज्ञेयाः प्राकृतैर्न हि ।
19cd तदिमौ प्राकृतेनैव त्वया ज्ञेयौ प्लवङ्गम ॥ २७ ॥
20ab गतिचेष्टाविकारैश्च रूपतो भाषितैस्तथा ।
20cd लक्षयस्व तयोर्भावं दुष्टादुष्टं समाहितः ॥ २८ ॥
21ab विश्वासेन प्रशंसाभिरिङ्गितैश्च पुनः पुनः ।
22cd ममैवाभिमुखः स्थित्वा पृच्छ त्वं हरिपुङ्गव ॥ २९ ॥
23ab प्रयोजनं प्रवेशस्य वनस्यास्य धनुर्धरौ ।
23cd पृच्छ त्वं रूपसंपन्नौ किं कार्यमिह लिप्सितं ॥ ३० ॥
24ab शुद्धात्मानौ च यदि तौ पश्यसि प्लवगर्षभ ।
24cd व्याभाषितैर्वा रूपैर्वा विज्ञेया दुष्टता तयोः ॥ ३१ ॥
25ab इत्यसौ कपिराजेन संदिष्टो मारुतात्मजः ।
25cd चकार गमने बुद्धिं यत्र तौ रामलक्ष्मणौ ॥ ३२ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे सुग्रीववित्रासो
नाम प्रथमः सर्गः ॥

## 2 = II.

1ab तत् तु विज्ञाय हनुमान् सुग्रीवस्य महद्वचः ।
1cd पर्वताद्वृक्षमूलात् स पुप्लुवे यत्र राघवौ ॥ १ ॥
2ab स तत्र गत्वा हनुमान् बलवान् वानरोत्तमः ।
3ab उपचक्राम तौ वाग्भिर्मृद्वीभिः सत्यविक्रमः ॥ २ ॥
2cd स्वकं रूपं परित्यज्य भिक्षुरूपेण वानरः ।
3cd तथाबभाषे तौ वीरौ यथावत् प्रशशंस च ॥ ३ ॥
4ab देवराजप्रतीकाशौ तापसौ संशितव्रतौ ।
4cd देशं कथमिमं प्राप्तौ भवन्तौ वनचारिणौ ॥ ४ ॥
5ab त्रासयन्तौ मृगगणानन्यांश्च वनचारिणः ।
5cd पम्पातीररुहान् वृक्षान् वीक्षमाणौ समन्ततः ॥ ५ ॥
6ab इमां नदीं शीतजलां शोभयन्तौ तपस्विनौ ।
6cd धैर्यवन्तौ सुवर्णाभौ कौ युवां चीरवाससौ ॥ ६ ॥
7ab सिंहविप्रेक्षणौ वीरौ सिंहातिबलसंमितौ ।
7cd शक्रचापनिभे चापे प्रगृह्य विपुलैर्भुजैः ॥ ७ ॥
8ab श्रीमन्तौ रूपसंपन्नौ कुञ्जरर्षभदर्शनौ ।
8cd मत्तद्विपगतिप्रख्यौ द्युतिमन्तौ नरर्षभौ ॥ ८ ॥
9ab प्रभया पर्वतेन्द्रोऽयं युवयोरवभासितः ।
9cd राज्यार्हावमरप्रख्यौ प्राप्तौ देशमिमं कथं ॥ ९ ॥

10ab पद्मपत्रेक्षणौ वीरौ जटामुकुटधारिणौ ।
10ed युवामन्योन्यसदृशौ देवलोकादिवागतौ ॥ १० ॥
12ab विशालवक्षसौ सौम्यौ मानुषौ देवरूपिणौ ।
17ab उभौ योग्यावहं मन्ये रक्षितुं पृथिवीमिमां ॥ ११ ॥
17ed ससागरवनां कृत्स्नां मेरुविन्ध्यविभूषितां ।
एवमर्हाणि पश्यामि पार्थिवव्यञ्जनानि च ॥ १२ ॥
18ab इमे च धनुषी चित्रे द्विषच्चित्तानुतापने ।
18ed प्रकाशेते यथेन्द्रस्य वज्रे हेमपरिष्कृते ॥ १३ ॥
19ab सुपूर्णौ निशितैर्बाणैस्तूणाश्चापि सुदर्शनाः ।
19ed जीवितान्तकरैर्घोरैर्ज्वलद्भिरिव पन्नगैः ॥ १४ ॥
20ab महाप्रभावौ विस्तीर्णौ तप्तहाटकभूषणौ ।
20ed खड्गावेतौ विराजेते निर्मुक्तोरगसंनिभौ ॥ १५ ॥
21ab एवं मया भाष्यमाणौ कस्मान्मां नाभिपश्यथः ।
21ed विवक्षुं समनुप्राप्तं किं च मां नाभिजल्पथः ॥ १६ ॥
22ab सुग्रीवो नाम धर्मात्मा कश्चिद्वानरयूथपः ।
22ed वीरो विनिकृतो भ्रात्रा जगद्भ्रमति दुःखितः ॥ १७ ॥
23ab दूतोऽहं प्रेषितस्तेन सुग्रीवेण महात्मना ।
23ed राज्ञा वानरमुख्यानां हनूमान् नाम वानरः ॥ १८ ॥
24ab युवाभ्यां सह धर्मात्मा सुग्रीवः सख्यमिच्छति ।
24ed तस्य मां सचिवं वित्तं वानरं पवनात्मजं ॥ १९ ॥

25ab भिक्षुरूपपरिच्छन्नं सुग्रीवहितकाम्यया ।
25cd मलयादिह संप्राप्तं कामगं कामरूपिणं ॥ २० ॥
26ab एवमुक्त्वा तु हनूमांस्तावुभौ रामलक्ष्मणौ ।
26cd वाक्यज्ञो वाक्यकुशलस्ततो नोवाच किञ्चन ॥ २१ ॥
27ab ततः संचिन्त्य मनसा रामो लक्ष्मणमब्रवीत् ।
28ab सचिवोऽयं कपीन्द्रस्य सुग्रीवस्य महात्मनः ॥ २२ ॥
29ab तमाभाषस्व सौमित्रे मत्समीपमुपागतं ।
29cd वाक्यज्ञं मधुरैर्वाक्यैः सत्यज्ञं सत्यवादिनं ॥ २३ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे हनूमद्वाक्यं
नाम द्वितीयः सर्गः ॥

L.E = E.E
3 = III.

1ab ततः प्रहृष्टो रामस्य हनूमानिति तद्वचः ।
1cd श्रुत्वा व्यथितभावं तं सुग्रीवं मनसास्मरत् ॥ १ ॥
नामन्नूपागमं तस्य प्रावेदयत वानरः ।
रामे स कृतवान् राज्ञः कृत्यं चैवाभ्युपायतः ॥ २ ॥
3ab रामस्तु सुमहाप्राज्ञो धनुष्पाणिरवस्थितः ।
3cd लक्ष्मणेन सह भ्रात्रा काले कालविदां वरः ॥ ३ ॥
ततः परमसंहृष्टो हनूमान् मारुतात्मजः ।
प्रत्युवाचोत्तरं वाक्यं रामं वाक्यविशारदः ॥ ४ ॥
4ab किमर्थं त्वं वनं घोरं सिंहव्याघ्रसमाकुलं ।
4cd आगतः सानुजो दुर्गं पम्पाकाननसेवितं ॥ ५ ॥
5ab ततस्तद्वचनं श्रुत्वा लक्ष्मणो रामचोदितः ।
5cd आचचक्षे महात्मानं वानरं पवनात्मजं ॥ ६ ॥
6ab राजा दशरथो नाम धृतिमान् धर्मवत्सलः ।
6cd तस्यायमग्रजः पुत्रो रामो नाम महायशाः ॥ ७ ॥
7ab धर्मशीलो मृदुर्दान्तः सर्वभूतहिते रतः ।
7cd शरण्यः शरणेच्छूनां पितुरादेशपारगः ॥ ८ ॥
पित्रा ह्येष महातेजाः सत्यसंधेन राघवः ।
8cd राज्यभ्रष्टो वने न्यस्तो मया सार्धमिहागतः ॥ ९ ॥

9ab भार्यया च विशालाक्ष्या सीतयानुगतः स्वयं ।
9cd दिनक्षये महातेजाः प्रभयेव दिवाकरः ॥ १० ॥
10ab पिता चास्य महाराजो मग्नः शोकमहार्णवे ।
10cd सुखार्हः स गतः स्वर्गं सर्वलोकहितात्मनः ॥ ११ ॥
भ्रातरं लक्ष्मणं नाम मां च विद्धि प्लवङ्गम ।
यवीयांसं मनुष्यत्वं गुणैर्दासत्वमागतं ॥ १२ ॥
11ab ऐश्वर्येण विहीनस्य वनवासाश्रितस्य च ।
12cd रक्षसापहृता भार्या छलेनास्य महाद्युतेः ॥ १३ ॥
13ab तत् तु न ज्ञायते रक्षो येनास्यापहृता प्रिया ।
13cd दनुर्नाम श्रियः पुत्रः शापाद्राक्षसतां गतः ॥ १४ ॥
14ab सुग्रीवस्तेन चाख्यातः समर्थो वानराधिपः ।
14cd स ज्ञास्यति महावीर्यस्तव भार्यापहारिणं ॥ १५ ॥
15ab एवमुक्त्वा दनुः स्वर्गं गतो द्युतिमतां वरः ।
15cd एतत् ते सर्वमाख्यातं याथातथ्येन पृच्छतः ॥ १६ ॥
16cd सोऽयं दत्वा बहुद्रव्यं प्राप्य चानुत्तमं यशः ।
17ab लोकनाथः पुरा भूत्वा सुग्रीवं नाथमिच्छति ॥ १७ ॥
18ab चिन्ताभिभूते रामे तु स्त्रीहेतोः शरणं गते ।
18cd कर्तुमर्हति सुग्रीवः साहाय्यं सह यूथपैः ॥ १८ ॥
19ab एवं ब्रुवाणं सौमित्रिं करुणं साश्रुलोचनं ।
19cd हनूमान् प्रत्युवाचेदं लक्ष्मणाभिमुखः स्थितः ॥ १९ ॥

20ab ईदृशा बुद्धिसंपन्ना जितक्रोधा जितेन्द्रियाः ।
20cd नराः सर्वोपकारास्तु वसुधां पालयन्ति ते ॥ २० ॥
21ab इत्येवमुक्त्वा हनुमान् श्लक्ष्णं मधुरया गिरा ।
21cd बभाषेऽथाभिगच्छामः सुग्रीवो यत्र वानरः ॥ २१ ॥
22ab स हि राज्यात् परिभ्रष्टः कृतवैरश्च बालिना ।
22cd हृतदारो वने त्रस्तो भ्रात्रा च निकृतो भृशं ॥ २२ ॥
23ab करिष्यति स साहाय्यं रामस्य करुणात्मनः ।
23cd सुग्रीवः सहितोऽस्माभिर्वैदेह्याः परिमार्गणे ॥ २३ ॥
24ab एवं ब्रुवति तस्मिंस्तु वानरे पवनात्मजे ।
24cd प्रतिपूज्य ततो राममिदं प्रोवाच लक्ष्मणः ॥ २४ ॥
25ab कपिर्यथा समाचष्टे हृष्टोऽयं मारुतात्मजः ।
25cd कृतवान् सोऽपि सुग्रीवः कृतकृत्यास्तथा वयं ॥ २५ ॥
26ab प्रसन्नमुखवर्णोऽयं व्यक्तं हृष्टश्च भाषते ।
26cd नानृतं वक्ष्यते वीरो हनूमान् हरिपुङ्गवः ॥ २६ ॥
27cd ततः स सुमहाप्राज्ञो हनूमानिदमब्रवीत् ।
स्वं रूपमभिसंप्राप्य संहृष्टो हेमपिङ्गलः ॥ २७ ॥
आरुह्यतां नृपश्रेष्ठ मम पृष्ठमरिंदम ।
लक्ष्मणेन सह भ्रात्रा सुग्रीवं द्रष्टुमर्हसि ॥ २८ ॥
एवमुक्त्वा महाकायो हनूमान् पवनात्मजः ।
27ef जगामादाय तौ वीरौ सुग्रीवो यत्र वानरः ॥ २९ ॥

= IV.

1ab ऋष्यमूकात् तु हनूमान् गत्वा मलयपर्वतं ।
1cd कथयामास तौ वीरौ सुग्रीवाय महात्मने ॥ १ ॥
2ab अयं रामो महाबाहुर्धीमान् दशरथात्मजः ।
2cd लक्ष्मणेन सह भ्रात्रा शरणं त्वामुपागतः ॥ २ ॥
राजसूयाश्वमेधाभ्यां वह्निर्येनाभितर्पितः ।
दक्षिणार्थे ददौ चापि यो गाः शतसहस्रशः ॥ ३ ॥
धर्मतः सत्यवाक्येन वसुधा येन पालिता ।
स्त्रीहेतोस्तस्य पुत्रोऽयं रामस्त्वां शरणं गतः ॥ ४ ॥
इक्ष्वाकूणां कुले जातः पित्रा ह्येष महात्मना ।
नियुक्तः सत्यसंधेन वनवासाय राघवः ॥ ५ ॥
4ab तत्रास्य वसतोऽरण्ये पितुरादेशकारिणः ।
4cd रावणेन हृता सीता मायामास्थाय रक्षसा ॥ ६ ॥
5ab एवं भूतोऽयं धर्मात्मा पार्श्वं ते समुपागतः ।
5cd लक्ष्मणेन सह भ्रात्रा रामः सत्यपराक्रमः ॥ ७ ॥
6ab भवता रामसौमित्री राघवौ सख्यमिच्छतः ।
6cd परिगृह्यार्चयस्वेमौ यथावत् प्रतिनन्द्य च ॥ ८ ॥
7ab श्रुत्वा हनुमतो वाक्यं सुग्रीवो हृष्टमानसः ।
7cd भयं स राघवाद्घोरं प्रजहौ विगतज्वरः ॥ ९ ॥

8ab कृत्वा च मानुषं रूपं सुग्रीवः प्लवगाधिपः ।
8cd दर्शनीयस्ततो भूत्वा प्रत्युवाच स राघवं ॥१०॥
9ab भवान् धर्मविनीतश्च विक्रान्तः साधुवत्सलः ।
9cd आख्याता वायुपुत्रेण तत्त्वमेते भवद्गुणाः ॥११॥
10ab तन्ममैवैष सत्कारो लाभश्च वदतां वर ।
10cd यदीच्छसि सखित्वं त्वं वानरेण मया सह ॥१२॥
11ab यदि ते रोचते सख्यं बाहुरेष प्रसारितः ।
11cd गृह्यतां पाणिना पाणिर्मर्यादा बध्यतां स्थिरा ॥१३॥
12ab एतत् तु वचनं श्रुत्वा रामः सुग्रीवभाषितं ।
12cd संप्रहृष्टमना हस्तं पीडयामास पाणिना ॥१४॥
13ab ततो रामस्य सुग्रीवः पाणिं जग्राह पाणिना ।
13cd हार्दं सौहृदमालम्ब्य परिष्वज्य च पीडितं ॥१५॥
14ab ततस्तु हनुमान् दृष्ट्वा तयोः संबन्धमीप्सितं ।
14cd विधिवत् सोऽथ काष्ठाभ्यां जनयामास पावकं ॥१६॥
15ab दीप्यमानं ततो वह्निं पुष्पैः सत्कृत्य सत्कृतं ।
15cd तत्रोपन्यस्य च प्रीतस्तयोर्मध्ये समेधितं ॥१७॥
16ab तमग्निं दीप्यमानं तु चक्रतुस्तौ प्रदक्षिणं ।
16cd सुग्रीवो राघवश्चैव वयस्यत्वमुपागतौ ॥१८॥
17ab प्रहृष्टमानसौ वीरौ तावुभौ रामवानरौ ।
17cd अन्योन्यमभिपश्यन्तौ न तृप्तिमुपजग्मतुः ॥१९॥

14ab ततः सर्वार्थविद्वांसं रामं दशरथात्मजं ।

14cd सुग्रीवः प्राह तेजस्वी वाक्यमेकमनास्तदा ॥ २० ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे लक्ष्मणवाक्यं नाम
तृतीयः सर्गः — रामसुग्रीवसख्यं
नाम चतुर्थः सर्गः ॥

# V.

20ab अयमाचष्ट मे राम सचिवो मन्त्रिसत्तमः ।
20cd हनूमान् यन्निमित्तं त्वं निर्जनं वनमागतः ॥ १ ॥
21ab लक्ष्मणेन सहानेन वसतश्च वने तव ।
21cd रक्षसापहृता भार्या मैथिली जनकात्मजा ॥ २ ॥
22cd अन्तरप्रेप्सुना दीना रुदती रक्षसा हृता ।
22ab त्वया विहीना शूरेण लक्ष्मणेन च मैथिली ॥ ३ ॥
23ab भार्यावियोगजं दुःखमचिरात् त्वं विमोक्ष्यसे ।
23cd अहं तामानयिष्यामि नष्टां वेदश्रुतिं यथा ॥ ४ ॥
पातालं यदि वा नीता वर्तते वा नभस्तले ।
23cd अहमानीय दास्यामि तव भार्यामरिंदम ॥ ५ ॥
24ab इदं तथ्यं मम वचः शृणु राघवसत्तम ।
24cd त्यज शोकं महाबाहो सखे सत्येन ते शपे ॥ ६ ॥
25ab अनुमानेन जानामि मैथिली सा न संशयः ।
25cd ह्रियमाणा मया दृष्टा तदा क्रूरेण रक्षसा ॥ ७ ॥
26ab क्रोशन्ती राम रामेति करुणं लक्ष्मणेति च ।
26cd स्फुरन्ती राक्षसस्याङ्के पन्नगेन्द्रवधूरिव ॥ ८ ॥
27ab आत्मना पञ्चमं दृष्ट्वा मां शैलस्य तटे स्थितं ।
उत्तरीयं तया क्षिप्तं शुभान्याभरणानि च ॥ ९ ॥

यान्यस्माभिर्गृहीतानि तानि तिष्ठन्ति राघव ।
27cd आनयिष्याम्यहं तानि त्वमभिज्ञातुमर्हसि ॥ १० ॥
28ab ततोऽब्रवीद्दाशरथिः सुग्रीवं प्रियवादिनं ।
28cd आनयस्व सखे क्षिप्रं किमर्थं त्वं विलम्बसे ॥ ११ ॥
29ab एवमुक्तस्तु सुग्रीवः शैलस्य गहनां गुहां ।
29cd प्रविवेश ततः क्षिप्रं रामस्य प्रियकाम्यया ॥ १२ ॥
30ab उत्तरीयं गृहीत्वा तु शुभान्याभरणानि च ।
30cd इदं पश्येति रामाय दर्शयामास वानरः ॥ १३ ॥
31ab सोऽपि वीक्ष्याथ तद्वासः सीताया भूषणानि च ।
31cd अभवद्बाष्पसंपूर्णः सनीहार इवोडुराट् ॥ १४ ॥
32ab सीतास्नेहप्रवृद्धेन स तु बाष्पेण धर्षितः ।
32cd हा प्रिये जानकीत्युक्त्वा धैर्यं त्यक्त्वापतत् क्षितौ ॥ १५ ॥
33ab हृदि कृत्वा तु बहुशस्तमलङ्कारमार्तवत् ।
33cd विनिःश्वसंश्च बहुशो भुजङ्ग इव रोषितः ॥ १६ ॥
34ab अविच्छिन्नाश्रुवेगस्तु सौमित्रिं वीक्ष्य राघवः ।
34cd परिदेवयितुं दीनो रामः समुपचक्रमे ॥ १७ ॥
35ab पश्य लक्ष्मण वैदेह्या संत्यक्तं ह्रियमाणया ।
35cd उत्तरीयमिदं पीतं शरीराद्भूषणानि च ॥ १८ ॥
36ab शाद्वलिन्यां तदा भूमौ सीतया ह्रियमाणया ।
36cd उत्सृष्टं भूषणमिदं तथारूपं हि दृश्यते ॥ १९ ॥

37ab ब्रूहि सुग्रीव कं देशं ह्रियमाणोपलक्षिता ।
37cd रक्षसा तेन रौद्रेण मम प्राणसमप्रिया ॥ २० ॥
38ab क्व वा वसति तद्रक्षो महाव्यसनदं मम ।
38cd यन्निमित्तमहं सर्वान् निहनिष्यामि राक्षसान् ॥ २१ ॥
39ab मैथिलीं हरता तेन मां च रोषयता भृशं ।
39cd आत्मनो जीवितान्ताय मृत्युद्वारमपावृतं ॥ २२ ॥
यादृशोऽयं मम क्रोधः सीतार्थे वानराधिप ।
अद्य पश्यन्तु मे वीर्यं देवाः सर्षिगणास्तथा ॥ २३ ॥
अनिशं मुञ्चतो वीर शरानाशीविषोपमान् ।
अद्य पश्यन्तु चापस्य विस्फूर्जितमिवाशनेः ॥ २४ ॥
अलातचक्रवच्चक्रं भ्रमतोऽरिनिर्वर्हणं ।
शीघ्रमाचक्ष्व सुग्रीव यत्रासौ राक्षसाधिपः ॥ २५ ॥
दिशं तां कर्तुमिच्छामि निःसपत्नां शरैरहं ।
यावत् सूर्यः प्रतपति दिशि तस्यां न संशयः ॥ २६ ॥
तावत् सर्वान् हनिष्यामि राक्षसान् ब्रूहि मा चिरं ।
अथवा किं चिरेणाद्य जगत् सर्वमराक्षसं ॥ २७ ॥
करिष्ये वानरेन्द्राहं सृष्टा येन च राक्षसाः ।
इमं क्रोधं न शक्यामि व्यर्थं कर्तुं सखे प्रिय ॥ २८ ॥
रामः कपीन्द्रं सुग्रीवमित्युवाच रुषान्वितः ।
तस्य तत् क्रोधताम्राक्षं भ्रूकुटीकुटिलं मुखं ॥ २९ ॥

यथा क्रुद्धस्य रुद्रस्य त्रिपुरं वै विजिग्युषः ।
दृष्ट्वा ते वायुपुत्राद्याः सर्वे वानरपुङ्गवाः ।
ऊचुः सर्वविनाशाय क्रुद्धोऽयमिति ते मिथः ॥ ३० ॥

अतीव रामो दयितामनुस्मरन्
स रोषताम्रायतदीप्तलोचनः ।
जगाद वाक्यं हरिराजसंनिधौ
विनिश्वसन् क्रुद्ध इवोरगाधिपः ॥ ३१ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे वस्त्रालङ्कारोपनयनं
नाम पञ्चमः सर्गः ॥

VI.

तस्याथ शमयन् क्रोधं बुद्ध्या सोऽष्टाङ्गया तदा ।
मुखमस्य परामृज्य जलक्लिन्नेन पाणिना ॥ १ ॥
परिष्वज्य च बाहुभ्यां स्नेहाद्वानरपुङ्गवः ।
अब्रवीत् प्राञ्जलिर्वाक्यं सदुःखो बाष्पविक्लवं ॥ २ ॥
न जाने निलयं तस्य सर्वथा पापकर्मणः ।
सामर्थ्यं विक्रमं वापि दौष्कुलेयस्य वा कुलं ॥ ३ ॥
अहं ते प्रतिजानामि त्यज शोकमरिंदम ।
करिष्यामि तथा यत्नं यथा प्राप्स्यसि जानकीं ॥ ४ ॥
रावणं सगणं हत्वा समास्थायात्मपौरुषं ।
तथा कर्तास्मि न चिराद्यथा प्रीतो भविष्यसि ॥ ५ ॥
अलं वैक्लव्यमागत्य धैर्यमात्मवतां स्मर ।
सदृशं त्वद्विधानां हि नेदृशं सत्त्वलाघवं ॥ ६ ॥
मयापि व्यसनं प्राप्तं भार्याहरणजं महत् ।
न चाहमेवं शोचामि न च धैर्यं परित्यजे ॥ ७ ॥
शोकं वापतितं धैर्यान्निगृह्णामि पदे पदे ।
अहं तावन्न शोचामि वानरः प्राकृतोऽपि सन् ॥ ८ ॥
महात्मा सुमहांश्चैव धृतिमान् किं पुनर्भवान् ।
शोकमापतितं धैर्यान्निग्रहीतुं त्वमर्हसि ॥ ९ ॥

मर्यादां सत्त्वयुक्तानां धृतिं नोत्स्रष्टुमर्हसि ।
व्यसने वाथ कृच्छ्रे वा भये वा जीवितान्तके ॥ १० ॥
4cd विमृष त्वं स्वयं बुद्ध्या धृतिमान् नावसीदति ।
5ab बालिशस्तु नरो नित्यं वैक्लव्यं योऽनुवर्तते ॥ ११ ॥
5cd स मज्जत्यवशः शोके वातेनाभिहतेव नौः ।
6ab एषोऽञ्जलिर्मया बद्धः प्रणम्य त्वां प्रसादये ॥ १२ ॥
6cd पौरुषं श्रय शोकस्य नान्तरं दातुमर्हसि ।
ये शोकमनुवर्तन्ते न तेषां विद्यते सुखं ॥ १३ ॥
तेजश्च शोकः क्षयति तन्न शोचितुमर्हसि ।
हितं संसृष्टभावेन राम नोपदिशामि ते ॥ १४ ॥
वयस्यभावाच्छृणु मे न त्वं शोचितुमर्हसि ।
7ab मधुरं सान्त्वितस्तेन सुग्रीवेण स राघवः ॥ १५ ॥
7cd मुखमश्रुपरिक्लिन्नं वस्त्रान्तेनाभ्यमार्जयत् ।
8ab प्रकृतिस्थस्तु काकुत्स्थः सुग्रीववचनात् प्रभुः ॥ १६ ॥
8cd संपरिष्वज्य सुग्रीवमिदं वचनमब्रवीत् ।
9ab कर्तव्यं यद्वयस्येन स्निग्धेन च हितेन च ॥ १७ ॥
9cd अनुरूपं च युक्तं च कृतं सुग्रीव तत् त्वया ।
10cd दुर्लभो ह्यीदृशो बन्धुरस्मिन् काले विशेषतः ॥ १८ ॥
11ab किन्तु यत्नस्त्वया कार्यो मैथिल्याः परिमार्गणे ।
11cd राक्षसस्य च रौद्रस्य रावणस्य दुरात्मनः ॥ १९ ॥

12ab मया तु यदनुष्ठेयं विश्वस्तेन तदुच्यतां ।
सुवर्षेणेव सुक्षेत्रे सस्यं निष्पाद्यतां तव ॥ २० ॥
मया च यदिदं वाक्यमभिमानात् समीरितं ।
तत् त्वया हरिशार्दूल तत्त्वमित्यवधार्यतां ॥ २१ ॥
अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन ।
12cd एतत् ते प्रतिजानामि सत्येनैव शपाम्यहं ॥ २२ ॥
13ab ततः प्रहृष्टः सुग्रीवो वानरैः सचिवैः सह ।
13cd राघवस्य वचः श्रुत्वा प्रतिज्ञातं विशेषतः ॥ २३ ॥

स हीति वाक्येन हरिप्रवीरः
प्रीतोऽभवद्धर्षविवृद्धवक्त्रः ।
रामस्य तेनाद्भुतविक्रमश्रीः
सत्येन सत्यव्रतशासितस्य ॥ २४ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे रामानुनयो
नाम षष्ठः सर्गः ॥

L.E 6 = E.E VII.

1ab परितुष्टः स सुग्रीवस्तेन वाक्येन वानरः ।
1cd लक्ष्मणस्याग्रतो राममिदं वचनमब्रवीत् ॥ १ ॥
2ab सर्वथाहमनुग्राह्यो देवतानां न संशयः ।
2cd उपपन्नो गुणोपेतो भवान् यस्य सखा मम ॥ २ ॥
3ab शक्यं खलु भवद्वीर्यात् सहायेन त्वया मया ।
3cd सुरराज्यमपि प्राप्तुं स्वराज्यं किं पुनः सखे ॥ ३ ॥
4ab सोऽहं सुभाग्यो बन्धूनां सुहृदां च महाबल ।
4cd येनाग्निसाक्षिकं सख्यं लब्धं राम त्वया सह ॥ ४ ॥
5ab अहमप्यनुरूपस्ते वयस्यो ज्ञास्यसे शनैः ।
5cd न तु वक्तुं समर्थोऽहं स्वयमेवात्मनो गुणान् ॥ ५ ॥
6ab महात्मनां तु भूयिष्ठं त्वद्विधानां कृतात्मनां ।
6cd निश्चला भवति प्रीतिर्धैर्यमात्मवतामिव ॥ ६ ॥
रजतं वा सुवर्णं वा वस्त्राण्याभरणानि च ।
अविभक्तानि साधूनामवगच्छन्ति साधवः ॥ ७ ॥
आढ्यो वापि दरिद्रो वा दीनो वा दुःखितोऽपि वा ।
7ab निर्दोषश्च क्षमावांश्च वयस्यः परमा गतिः ॥ ८ ॥
7cd धनत्यागः सुखत्यागो बन्धुत्यागस्तथैव च ।
7ef वयस्यार्थे प्रवर्तन्ते स्नेहं दृष्ट्वा तथाविधं ॥ ९ ॥

8ab तं तथेत्यब्रवीद्रामः सुग्रीवं प्रियवादिनं ।
8cd लक्ष्मणस्याग्रतः प्रीत्या सुग्रीवमनुरञ्जयन् ॥ १० ॥
9ab ततो रामं स्थितं दृष्ट्वा लक्ष्मणं च महाबलं ।
9cd सुग्रीवः सर्वतश्चक्षुर्वने लोलमपातयत् ॥ ११ ॥
10ab स ददर्श ततः सालमविदूरे हरीश्वरः ।
10cd सपुष्पमीषत् पर्णाढ्यं भ्रमरैरुपशोभितं ॥ १२ ॥
11ab तस्यैकां पर्णबहुलां शाखां भङ्क्त्वा सुपुष्पितां ।
11cd सालस्यास्तीर्य सुग्रीवो निषसाद सराघवः ॥ १३ ॥
12ab तावासीनौ ततो दृष्ट्वा हनूमानपि लक्ष्मणं ।
12cd शाखां चन्दनवृक्षस्य समाक्षिप्य न्यवेशयत् ॥ १४ ॥
13ab ततः प्रहृष्टः सुग्रीवः श्लक्ष्णं मधुरया गिरा ।
13cd उवाच प्रणयाद्वाक्यमीषद्व्याकुलिताक्षरं ॥ १५ ॥
14ab अहं विनिकृतो राम चरामि वसुधामिमां ।
14cd हृतदारः समासाद्य ऋष्यमूकं समाश्रितः ॥ १६ ॥
15ab बलिनो बालिनो भीतो वने वित्रस्तमानसः ।
15cd सोऽहं सुनिकृतो भ्रात्रा कृतवैरश्च राघव ॥ १७ ॥
16ab बालिनस्तु भयार्तस्य सर्वलोकभयंकरात् ।
16cd ममापि त्वमनाथस्य नाथो भवितुमर्हसि ॥ १८ ॥
17ab एवमुक्तः स तेजस्वी धर्मज्ञो धर्मवत्सलः ।
17cd अभ्यभाषत काकुत्स्थः सुग्रीवं प्रहसन्निव ॥ १९ ॥

18ab उपकारक्षमं मित्रं विदितं मे भवान् यथा ।
18cd अद्यैव तं हनिष्यामि तव भार्यापहारिणं ॥ २० ॥
19ab इमे हि मे महाभागाः पत्रिणस्तिग्मतेजसः ।
19cd कार्त्तिकेयवनोद्भूताः शरा हेमविभूषिताः ॥ २१ ॥
20ab कङ्कपत्रप्रतिच्छन्ना महेन्द्राशनिसंनिभाः ।
20cd सुपर्वाणः सुतीक्ष्णाग्राः सरोषा इव पन्नगाः ॥ २२ ॥
21ab तमद्य बालिनं पश्य क्रुद्धैराशीविषोपमैः ।
21cd शरैर्विनिहतं भूमौ विशीर्णमिव पर्वतं ॥ २३ ॥
22ab राघवेणैवमुक्तस्तु सुग्रीवो वाहिनीपतिः ।
22cd प्रहर्षमतुलं लेभे प्रहृष्टश्चेदमब्रवीत् ॥ २४ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे सुग्रीवसमागमे
रामावष्टम्भो नाम सप्तमः सर्गः ॥

6+7. VIII.

~~23ab~~ तद्वयस्यवचः श्रुत्वा हर्षपौरुषवर्धनं ।
~~23cd~~ सुग्रीवः पूजयां चक्रे राघवं प्रशशंस च ॥ १ ॥
23ab असंशयं प्रज्वलितैस्तीक्ष्णैर्मर्मातिगैः शरैः ।
23cd दहेस्त्वं कुपितो लोकान् युगान्ते रश्मिवानिव ॥ २ ॥
24ab बालिनः पौरुषं यच्च वीर्यं तेजो धृतिश्च या ।
24cd तन्ममैकमनाः श्रुत्वा विधत्स्व यदनन्तरं ॥ ३ ॥
25ab समुद्रात् पश्चिमात् पूर्वं दक्षिणादपि चोत्तरं ।
25cd क्रामत्यनुदिते सूर्ये बाली व्यपगतक्लमः ॥ ४ ॥
26ab अग्राण्यालम्ब्य शैलानां शिखराणि महान्त्यपि ।
26cd ऊर्ध्वमुत्क्षिप्य तरसा प्रतिगृह्णाति वीर्यवान् ॥ ५ ॥
27ab बहवः सारवन्तश्च वनेषु विविधा द्रुमाः ।
27cd बालिना तरसा भग्ना बलजिज्ञासयात्मनः ॥ ६ ॥
37cd सर्वप्राणभृतां लोके द्वितीयं नोपलक्षये ।
38ab ईदृशो विक्रमो यस्य युद्धे चानुत्तमा धृतिः ॥ ७ ॥
38cd तत् प्रचिन्त्य काकुत्स्थ हन्येतैकेषुणा यथा ।
39ab अथवा कोपितो बाली कालमस्य क्षमामहे ॥ ८ ॥
39cd हिंस्यादपि हि नः सर्वान् बाली शरनिराकृतः ।
40ab तथा ब्रुवन्तं सुग्रीवं प्रहसन् लक्ष्मणोऽब्रवीत् ॥ ९ ॥

सदेवनरनागेषु दैत्ययक्षपतत्रिषु ।
समस्तैर्न हि शक्यो वै योद्धुं रामो धनुर्धरः ॥ १० ॥
40cd कस्मिंस्तु कर्मणि कृते श्रद्दध्या बालिनो बधं ।
तमथोवाच सुग्रीवः सप्ततालानिमान् पुरा ॥ ११ ॥
अविध्यदेकशो बाली त्रीनेषां स महाबलः ।
काकुत्स्थः पाटयेदेतान् सर्वानेकेषुणा यदि ॥ १२ ॥
रामस्य विक्रमं दृष्ट्वा मन्येऽहं बालिनं हतं ।
7. 1ab एवमुक्का तु सुग्रीवो लक्ष्मणं कपिपुङ्गवः ॥ १३ ॥
उवाच करुणं भूयो राघवं वचनं ततः ।
7. 1cd राम शोकाभिभूतानां भयार्तानां भवान् गतिः ॥ १४ ॥
वयस्य इति विज्ञाय येनेदं पर्यदेवयं ।
7. 2cd त्वं हि पाणिप्रदानेन वयस्यो मेऽग्निसाक्षिकः ॥ १५ ॥
3ab कृतः प्राणैः प्रियतरः सखे सत्येन ते शपे ।
3cd वयस्य इति कृत्वा च विश्रब्धं प्रवदाम्यहं ॥ १६ ॥
4ab दुःखमन्तर्गतं यन्मे मनो दहति सर्वदा ।
4cd एवमुक्का स वचनं बाष्पपूरितलोचनः ॥ १७ ॥
5ab बाष्पोपहतया वाचा नाशक्नोद्वक्तुमुत्तरं ।
बाष्पवेगं तु सहसा नदीवेगमिवागतं ॥ १८ ॥
वारयामास धैर्येण सुग्रीवो रामसंनिधौ ।
निगृह्य बाष्पवेगं तु विमृज्य नयने शुभे ॥ १९ ॥

सुग्रीवः सान्वितः स्नेहादिदं वचनमब्रवीत् ।
पुराहं बालिना राम राज्यात् स्वादवरोपितः ॥ २० ॥
परुषाणि च संश्राव्य निर्धूतोऽस्मि बलीयसा ।
हृता भार्या च मे तेन प्राणेभ्योऽपि गरीयसी ॥ २१ ॥
सुहृदश्च मदीया ये ते संयम्य विमानिताः ।
7. 8ab अद्यापि स हि दुष्टात्मा मद्विनाशाय राघव ॥ २२ ॥
8cd बहुशस्तत्प्रयुक्ताश्च निहता वानरा मया ।
एतया शङ्कया चापि दृष्ट्वा त्वामपि राघव ॥ २३ ॥
नेहोपसृतवान् भीतो भयात् सर्वं बिभेति हि ।
केवलं तु सहाया मे हनूमत्प्रमुखा इमे ॥ २४ ॥
9ab यतोऽहं धारयाम्यद्य प्राणान् कृच्छ्रगतोऽपि सन् ।
9cd एते हि कपयः स्निग्धा मां रक्षन्ति समन्ततः ॥ २५ ॥
10ab सहगच्छन्ति गच्छन्तं तिष्ठन्ति च मयि स्थिते ।
12ab यश्च तं समरे हन्यात् स मे स्यात् प्राणदः सुहृत् ॥ २६ ॥
एष ते राम शोकार्थः शोकार्तेन निवेदितः ।
सुखितो दुःखितो वापि सख्युर्नित्यं सखा गतिः ॥ २७ ॥
13cd श्रुत्वैव तद्वचो रामः सुग्रीवमिदमब्रवीत् ।
14ab किंनिमित्तमिदं दुःखं श्रोतुमिच्छामि तत्वतः ॥ २८ ॥
14cd अहं हि कारणं श्रुत्वा वैरस्यातीव मानद ।
– 15ab सर्वं तथा विधास्यामि संप्रधार्य बलाबलं ॥ २९ ॥

16ab बलवान् हि ममामर्षः श्रुत्वा त्वामपमानितं ।
17ab तत् कथयस्व विस्रब्धं यावन्नारोपये धनुः ॥ ३० ॥
17cd स्पृष्टाश्च हि मया वाणा निरस्तश्च रिपुस्तव ।
18ab एवमुक्तस्तु सुग्रीवः काकुत्स्थेन महात्मना ॥ ३१ ॥
18cd प्रहर्षमतुलं लेभे चतुर्भिः सचिवैः सह ।
19ab ततः प्रहृष्टवदनः सुग्रीवो लक्ष्मणाग्रजे ॥ ३२ ॥
वैरस्य कारणं सर्वमाख्यातुमुपचक्रमे ।
21ab बाली नाम मम ज्येष्ठो भ्राता शत्रुनिसूदनः ॥ ३३ ॥ IV.9
21cd पितुर्बहुमतो नित्यं मम चापि बभूव सः ।
22ab पितर्युपरतेऽस्माकं ज्येष्ठोऽयमिति मन्त्रिभिः ॥ ३४ ॥
22cd कपीनामीश्वरो राजा कृतः परमसंमतः ।
23ab राज्यं प्रशासतस्तस्य पितृपैतामहं महत् ॥ ३५ ॥
23cd अहं सर्वेषु कार्येषु प्रणतः प्रेष्यवत् सदा ।
24ab मायावी नाम तेजस्वी पूर्वजो दुन्दुभेस्तु यः ॥ ३६ ॥
24cd तेन तस्य महद्वैरं स्त्रीनिमित्तं किलाभवत् ।
25ab स तु सुप्तजने रात्रौ किष्किन्धाद्वारमागतः ॥ ३७ ॥
25cd नर्दति स्म सुसंरब्धो बालिनं च समाह्वयत् ।
स तु रात्रौ मम भ्राता नर्दितं भैरवस्वनं ॥ ३८ ॥
26ab श्रुत्वामर्षवशं प्राप्तो निर्जगाम गुहामुखात् ।
26cd वार्यमाणः स तु स्त्रीभिर्मया च प्रयतात्मना ॥ ३९ ॥

अमर्षतोऽपि संरम्भान्निर्जगामाविचारयन् ।
28ab तं विनिर्धूय निर्यान्तमस्मान् सर्वान् कपीश्वरं ॥४०॥
28cd अन्वधावमहं शीघ्रं सौहार्दमनुचिन्तयन् ।
29ab स तु मे भ्रातरं दृष्ट्वा ममादूरादवस्थितं ॥४१॥
29cd असुरो जातसंत्रासः प्रदुद्राव ततो भृशं ।
30ab तं विद्रवन्तं संत्रस्तमावां द्रुततरं गतौ ॥४२॥
30cd प्रकाश्यं तु गतो मार्गश्चन्द्रेणोदयता तदा ।
31ab स तृणैरावृतं दृष्ट्वा धरण्यां विवरं महत् ॥४३॥
31cd प्रविवेशासुरो वेगादावां त्वासाद्य वेष्टितौ ।
32ab तं प्रविष्टं विलं दृष्ट्वा रिपुं क्रोधवशं गतः ॥४४॥
32cd मामुवाच ततो बाली वचनं क्षुभितेन्द्रियः ।
33ab इह त्वं तिष्ठ सुग्रीव विलद्वारि समाहितः ॥४५॥
33cd यावत् तं निहनिष्यामि प्रविश्य सुदुरासदं ।
34ab मया तु वचनं श्रुत्वा भ्रातुस्तस्य प्रयत्नतः ॥४६॥
34cd प्रतिषिद्धस्तदानीं स प्राविशच्चैव तद्विलं ।
35ab तस्य प्रविष्टस्य विलं साग्रः संवत्सरो गतः ॥४७॥
35cd स्थितस्य च मम द्वारि स कालो व्यत्यवर्तत ।
36ab अनिष्पतन्तं तं ज्ञात्वा स्नेहादागतसंभ्रमः ॥४८॥
36cd भ्रातरं पुरुषव्याघ्र पापशङ्काभवत् तदा ।
37ab अथ दीर्घस्य कालस्य विलात् तस्माद्विनिःसृतं ॥४९॥

37cd सफेनं रुधिरं व्यक्तं दृष्ट्वाहं व्यथितोऽभवं ।
38ab नर्दतामसु णां च ध्वनिर्मे श्रोत्रमागतः ॥५०॥
38cd निरस्तस्य च संग्रामे क्रोशतो निःसृतो महान् ।
39ab अहं त्वपगतो बुद्ध्वा चिह्नैस्तैर्भ्रातरं हतं ॥५१॥
पूरयित्वा शिलाभिस्तु विलं शोकसमन्वितः
39cd शोकार्तश्चोदकं कृत्वा किष्किन्धामागतः सखे ॥५२॥
40ab गूहमानस्य मे तत् तु यत्नतो मन्त्रिभिः श्रुतं ।
40cd ततोऽहं मन्त्रिभिः सर्वै राज्येऽस्मिन्नभिषेचितः ॥५३॥
41ab मयि शासति राज्यं तु धर्मेण रघुनन्दन ।
41cd आजगाम रिपुं हत्वा घोरं तं सोऽथ वानरः ॥५४॥
42ab अभिषिक्तं तु मां दृष्ट्वा क्रोधसंरक्तलोचनः ।
42cd मदीयान् मन्त्रिणो बद्ध्वा परुषं वाक्यमब्रवीत् ॥५५॥
43ab निग्रहेऽपि समर्थस्य तस्य पापस्य राघव ।
43cd प्रावर्तत न मे बुद्धिस्तदा गौरवयन्त्रिता ॥५६॥
44ab असान्वयमहं तं च यथावदभिनन्दयन् ।
44cd उचिताश्चाशिषस्तस्य प्रयुञ्जन् वै यथाविधि ॥५७॥
एवंविधेन मानेन मानयामि स्म बालिनं ।
न च स प्रतिजग्राह कलुषेणान्तरात्मना ॥५८॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे वैरनिवेदनं
नाम अष्टमः सर्गः ॥

6+7+8. IX.

7.45cd ततस्तं क्रोधसंरक्तं संरम्भसमुपागतं ।
46ab संप्रासादयमव्यग्रो भ्रातरं प्रियकाम्यया ॥ १ ॥
46cd दिष्ट्यासि कुशली प्राप्तो दिष्ट्यापि निहतो रिपुः ।
47ab अनाथस्य हि मे नाथस्त्वमेकः कपियूथप ॥ २ ॥
47cd इदं बहुशलाकं ते पूर्णचन्द्रनिभं शुभं ।
48ab छत्त्रं सबालव्यजनं प्रतीच्छ त्वं मयोद्धृतं ॥ ३ ॥
48cd त्वमेव राजा लोकानां तव चाज्ञाकरा वयं ।
अमात्यैर्विनियुक्तोऽहं राज्ये नात्मेच्छया विभो ॥ ४ ॥
49ab न्यासभूतमिदं राज्यं तव विज्ञापयाम्यहं ।
49cd मा च रोषं कृथा वीर मम शत्रुनिसूदन ॥ ५ ॥
50ab याचे त्वां शिरसा राजन् मया बद्धोऽयमञ्जलिः ।
50cd बलादस्मिन् समागम्य मन्त्रिभिः पुरवासिभिः ॥ ६ ॥
51ab राज्यभारे नियुक्तोऽस्मि राज्याय न हि मे स्पृहा ।
अनिच्छन्नपि विक्रोशंस्त्वया हीने पुरेऽनघ ॥ ७ ॥
51cd तमेवं भाषमाणं तु स मां निर्भर्त्स्य वानरः ।
51ef धिक्कृत्य परुषं वाक्यं बहु तत् तदुवाच ह ॥ ८ ॥
52ab प्रकृतीस्तु समानाय्य तदा स प्लवगेश्वरः ।
52cd मामाह सुहृदां मध्ये वाक्यमेतत् सुदारुणं ॥ ९ ॥

53ab विदितं वो यथा रात्रौ मायावी स महासुरः ।
53cd समाह्वयति मां नित्यं युद्धाकाङ्क्षी महोद्धतः ॥ १० ॥
54ab तस्यातिगर्जितं श्रुत्वा निःसृतोऽस्मि गुहामुखात् ।
54cd अनुयातश्च मां तूर्णमयं भ्रातृमुखो रिपुः ॥ ११ ॥
55ab स तु दृष्ट्वैव मां रात्रौ सद्वितीयं महाबलः ।
55cd प्राद्रवत् परमत्रस्तः पृष्ठतो नावलोकयन् ॥ १२ ॥
56ab विद्रवन्तं तथा तं तु निशम्य भुवि दानवं ।
अवोचं सहसुग्रीवस्तिष्ठ तिष्ठेत्यमर्षितः ॥ १३ ॥
स तु द्वादशमात्राणि योजनानि प्रधावितः ।
ततो धरण्यां विवरं प्रविवेश भयार्दितः ॥ १४ ॥
तं तु दृष्ट्वा बिलप्राप्तं सपत्नं नित्यशोऽहितं ।
57cd अयमुक्तोऽधमो भ्राता शुचिना क्रूरदर्शनः ॥ १५ ॥
58ab अहत्वा नास्ति मे बुद्धिः प्रतिगन्तुमितः पुरीं ।
58cd बिलद्वारि प्रतीक्षस्वेत्युक्त एष मया तदा ॥ १६ ॥
59ab स्थितोऽयमिति मत्वाहं प्रविष्टस्तद्बिलं महत् ।
60ab द्वारं मे मार्गमाणस्य साग्रः संवत्सरो गतः ॥ १७ ॥
61ab स तु दृष्टो मया शत्रुरनिर्वेदाद्भयावहः ।
61cd निहतश्च मया सद्यः सोऽसुरो बन्धुभिः सह ॥ १८ ॥
62ab तस्यास्यात् तु प्रवृत्तेन रुधिरौघेण तद्बिलं ।
62cd पूर्णमासीद्दुराक्रोशं स्तनतस्तस्य भूतले ॥ १९ ॥

63ab मायाविनं सूदयित्वा तं शत्रुं दुन्दुभिप्रियं ।
63cd निष्क्रामन्नेव चापश्यं विलस्यापिहितं मुखं ॥ २० ॥
64ab विक्रोशतोऽपि हि मम सुग्रीवेति पुनः पुनः ।
64cd यदा प्रतिवचो नास्ति मन्युमानभवं तदा ॥ २१ ॥
~~65ab~~ पादप्रहारैश्च मया बहुशस्तद्विदारितं ।
~~65cd~~ ततोऽहं तेन निष्क्रम्य यथागतमिहागतः ॥ २२ ॥
65ab तत्र तेनास्मि संरुद्धो राज्यं प्रार्थयता तदा ।
65cd सुग्रीवेण नृशंसेन विस्मृत्य भ्रातृसौहृदं ॥ २३ ॥
66ab एवमुक्त्वा तु मां तत्र वस्त्रेणैकेन वानरः ।
66cd ततो निष्क्रामयामास बाली विगतसाध्वसः ॥ २४ ॥
67ab इत्थं तेनास्मि निकृतो बहुशो रघुनन्दन ।
हृतदारो हृतश्रीको लूनपक्ष इव द्विजः ॥ २५ ॥
मद्वधे कृतबुद्धिश्च विनिःसृत्य गुहामुखात् ।
त्रासयामास मां बाली वृक्षमुद्यम्य दारुणं ॥ २६ ॥
67cd तद्भयाच्च मया सर्वा पृथिवी सागराम्बरा ।
पर्वतैश्च समाकीर्णा चरिता रघुनन्दन ॥ २७ ॥
ततोऽहमेतं शैलेन्द्रमृष्यमूकमुपागतः ।
कारणान्तराद्दुर्धर्षः शैलं बाली व्यवर्जयत् ॥ २८ ॥
69ab एतत् ते सर्वमाख्यातं वैरस्यागमनं महत् ।
69cd अनागसा मया प्राप्तः पश्य राघव संशयः ॥ २९ ॥

70ab बालित्रासादिहार्तस्य कृच्छ्रप्राणस्य राघव ।
70cd कर्तुमर्हसि मे वीर प्रसादं तस्य निग्रहे ॥ ३० ॥
71ab एवमुक्तः स तेजस्वी सुग्रीवेण परंतपः ।
71cd आश्वासयितुमारेभे सुग्रीवं रघुनन्दनः ॥ ३१ ॥
72ab अमोघाः सूर्यसंकाशा ममैते निशिताः शराः ।
72cd तस्मिन् बालिनि सुग्रीव पतिष्यन्ति मयेरिताः ॥ ३२ ॥
73ab यावत् तं न हि पश्येयं तव भार्यापहारिणं ।
73cd तावज्जीवेत् स दुष्टात्मा बाली चारित्रदूषकः ॥ ३३ ॥
74ab आत्मानुमानाज्जानामि मग्नं त्वां शोकसागरे ।
अद्य बालिनि मोक्ष्यामि रावणक्रोधमागतं ॥ ३४ ॥
1ab स तु तद्वचनं श्रुत्वा राघवस्यात्मनो हितं ।
1cd सुग्रीवः शङ्कयाविष्टः पुनर्वचनमब्रवीत् ॥ ३५ ॥
29ab 2ab आसीन्महासुरः पूर्वं दुन्दुभिर्नाम राघव ।
2cd बलं नागसहस्रस्य धारयंश्च स वीर्यवान् ॥ ३६ ॥
3ab वीर्योत्सुकः स दुष्टात्मा वरदानाच्च मोहितः ।
3cd आजगाम महाबाहुः समुद्रं सरितां पतिं ॥ ३७ ॥
4ab ऊर्मिमन्तं समासाद्य सागरं मकरालयं ।
4cd मम युद्धं प्रयच्छेति स उवाच महार्णवं ॥ ३८ ॥
5ab ततः समुद्रो धर्मात्मा समुत्थाय महास्वनः ।
5cd अब्रवीद्वचनं दैत्यं राम कालप्रचोदितं ॥ ३९ ॥

8. 6ab न ते दातुं समर्थोऽहं युद्धं युद्धविशारद ।
6cd श्रूयतामभिधास्यामि येन युद्धं तव क्षमं ॥४०॥
7ab शैलराजो महारण्ये तपस्विशरणं महान् ।
7cd शङ्करश्वशुरो नाम्ना हिमवानिति विश्रुतः ॥४१॥
8ab गुहाप्रस्रवणोपेतो बहुकन्दरनिर्झरः ।
8cd स समर्थस्तव प्रीतिमतुलां कर्तुमाहवे ॥४२॥
9ab तमशक्तमिति ज्ञात्वा समुद्रमसुरोत्तमः ।
9cd हिमवद्वनमागच्छच्छरश्चापादिव च्युतः ॥४३॥
10ab ततस्तस्य गिरेः श्वेता गजेन्द्रप्रतिमाः शिलाः ।
10cd चिक्षेप बहुधा भूमौ दुन्दुभिर्विननाद च ॥४४॥
युद्धं प्रयच्छ मे शीघ्रं पर्वतेन्द्र महाबल । ✓
समुद्रेण समाख्यातस्त्वं वै युद्धविशारदः ॥४५॥ ✓
11ab ततो हिमधरो धीरः सौम्यः प्रतिभयाकृतिं ।
11cd हिमवानब्रवीद्वाक्यं दुन्दुभिं दानवर्षभं ॥४६॥
12ab अवदारयितुं वीर न त्वमर्हसि मामिह ।
12cd अशक्तोऽस्मि रणोद्धर्षे तपस्विशरणं ह्यहं ॥४७॥
13ab तस्य तद्वचनं श्रुत्वा गिरिराजस्य दानवः ।
13cd उवाच दुन्दुभिर्वाक्यं क्रोधसंरक्तलोचनः ॥४८॥
14ab युद्धे यद्यसमर्थस्त्वं यदि वासि निरुद्यमः ।
8. 14cd तमाचक्ष्व प्रदद्यान्मे योऽद्य युद्धं युयुत्सवे ॥४९॥

6. 30ab ततो गिरिवरो दध्यौ केनोपायेन दुन्दुभिं ।
30cd न पश्येयं रणे कोऽस्य भवेदभिमुखो नरः ॥५०॥
मुहूर्तमिव स ध्यात्वा हिमवानथ बालिनं ।
31cd जगाम मनसा शैलो दुन्दुभिं चेदमब्रवीत् ॥५१॥
32ab दुन्दुभे युद्धदानाय नाहं प्रतिबलस्तव ।
32cd दत्तं युद्धं तदप्याकुर्यात् सम्यगुपदिश्यते ॥५२॥
8. 16ab बाली नाम महाबाहुः शक्रतुल्यपराक्रमः ।
16cd अध्यास्ते वानरः श्रीमान् किष्किन्धामतुलप्रभः ॥५३॥
17ab स समर्थो महाप्राज्ञस्तव युद्धविशारदः ।
17cd द्वन्द्वयुद्धं महान् दातुं नमुचेरिव वासवः ॥५४॥
18ab तं शीघ्रमभिगच्छ त्वं यदि मृत्युवशा तव ।
18cd स हि दुर्धर्षणो बाली नित्यं समरकर्मसु ॥५५॥
6. 33ab किष्किन्धां त्वमुपागम्य हेममालिगुहां शुभां ।
33cd चरन् मधुवने तस्य मधु सर्वं विनाशय ॥५६॥
34ab स युद्धतृष्णां कुपितस्तवेमामपनेष्यति ।
34cd न हि जातु तमासाद्य जीवन् प्रतिगमिष्यसि ॥५७॥
35ab स विनद्य महानादं दुन्दुभिर्विजिगीषया ।
जितमेव तदा मेने बालिनं बलदर्पितः ॥५८॥
8. 19ab ततः श्रुत्वा हिमवतः पर्वतेन्द्रस्य दुन्दुभिः ।
19cd जगाम तां पुरीं रम्यां किष्किन्धां बालिपालितां ॥५९॥

4, 20ab धारयन् माहिषं रूपं तीक्ष्णशृङ्गो भयावहः ।
20cd प्रावृषीव महामेघस्तोयपूर्णो नभस्तले ॥ ६० ॥
21ab स निष्पीड्य महाद्वारं किष्किन्धाया महाबलः ।
21cd ननर्द कम्पयन् भूमिं दुन्दुभिर्विजिगीषया ॥ ६१ ॥
22ab समीपगान् द्रुमान् भञ्जन् वसुधां दारयन् खुरैः ।
22cd शृङ्गाभ्यामालिखन् दर्पात् तद्द्वारं द्विरदो यथा ॥ ६२ ॥
तं तु मेघप्रतीकाशं नर्दन्तं च भयावहं ।
दुन्दुभिं दानवश्रेष्ठं न कश्चित् प्रत्यषेधयत् ॥ ६३ ॥
23ab तस्य वै रुवतो बाली श्रुत्वा शब्दममर्षणः ।
23cd निष्पपात सह स्त्रीभिस्ताराभिरिव चन्द्रमाः ॥ ६४ ॥
24ab मदाव्यक्ताक्षरपदं तमुवाच स दुन्दुभिं ।
24cd हरीणामीश्वरो बाली सर्वेषां वनचारिणां ॥ ६५ ॥
25ab किमर्थं नगरद्वारमिदं रुद्ध्वा विनर्दसि ।
25cd दुन्दुभे विदितो मे त्वं प्राणान् रक्ष महासुर ॥ ६६ ॥
26ab तस्यैतद्वचनं श्रुत्वा वानरेन्द्रस्य बालिनः ।
26cd उवाच दुन्दुभिर्वाक्यं क्रोधसंरक्तलोचनः ॥ ६७ ॥
27ab किं त्वं स्त्रीसंनिधौ वीर शूरवाक्यानि मुञ्चसि ।
27cd मम युद्धं प्रयच्छ त्वं ततो ज्ञास्यसि मे बलं ॥ ६८ ॥
28ab अथवा मर्षयिष्यामि क्रोधमद्य निशामिमां ।
28cd गृह्यतामुदयः स्वैरं कामभोगेषु वानर ॥ ६९ ॥

29ab यो मत्तं वा प्रमत्तं वा सुप्तं वा रक्षिते रतं ।
29cd हन्यात् स खलु हन्याद्धि त्वद्विधं मदविह्वलं ॥ ७० ॥
30cd तं प्रहस्याब्रवीद्वाली वाक्यं वाक्यविशारदः ।
31ab विसृज्य ताः स्त्रियः सर्वास्ताराद्या वानरेश्वरः ॥ ७१ ॥
31cd मत्तोऽयमिति दुर्बुद्धे मोहान्मामवमन्यसे ।
मदीये संप्रहारेऽस्मिन् वीर पानं समर्थ्यतां ॥ ७२ ॥
31cd यदि युद्धस्पृहा तेऽद्य यदि भीतो न संयुगे ।
तिष्ठ त्वं समरे मेऽद्य दर्शयस्व स्वपौरुषं ॥ ७३ ॥
33ab तमेवमुक्त्वा संक्रुद्धो मालामुत्क्षिप्य काञ्चनीं ।
33cd पित्रा दत्तां महेन्द्रेण युद्धाय व्यवतिष्ठत ॥ ७४ ॥
ततो युद्धं प्रववृते तयोः सुतुमुलं तदा ।
बालिनश्च महाबाहोर्बलिनो दानवस्य च ॥ ७५ ॥
ततो बाली विषाणाग्रैर्लिखितो दनुसूनुना ।
प्रचकाशे महाबाहुरशोक इव पुष्पितः ॥ ७६ ॥
स तेन सह विक्रीड्य मुहूर्तं वानरेश्वरः ।
प्रहसन् दानववृषं वीरो वचनमब्रवीत् ॥ ७७ ॥
असुराधम दुर्बुद्धे वरदानेन दर्पितः ।
अद्य ते बलमुद्वृत्तं शमयेऽग्निमिवाम्भसा ॥ ७८ ॥
34ab स गृहीत्वा विषाणाभ्यां दुन्दुभिं दानवर्षभं ।
34cd आविध्य बलवान् बाली भूतले निष्पिपेष ह ॥ ७९ ॥

आविद्धस्तेन बलिना विनिष्पिष्टो महासुरः ।
8, 35ab विमुञ्चन् रुधिरं खेभ्यः प्राणांस्तत्याज वीर्यवान् ॥ ८० ॥
35cd स पपात महाकायः क्षितौ पञ्चत्वमागतः ।
36ab तं तोलयित्वा बाहुभ्यां गतसत्त्वमचेतनं ॥ ८१ ॥
36cd चिक्षेप बलवान् बाली पादेनैकेन योजनं ।
37ab तस्य वेगप्रवृद्धस्य वक्त्रात् क्षतजबिन्दवः ॥ ८२ ॥
37cd प्रपेतुर्मारुतोत्क्षिप्ता मतङ्गस्याश्रमे किल ।
38ab तान् दृष्ट्वा पतितान् गात्रे मुनिः शोणितबिन्दुकान् ॥ ८३ ॥
38cd उपस्पृश्य ददौ शापं क्षेप्तारं बालिनं प्रति ।
येनैष दानवः क्षिप्तो ममाश्रमपदं प्रति ॥ ८४ ॥
39ab इह ते न प्रवेष्टव्यमृष्यमूकवनं हरे ।
प्रविष्टस्य हि ते सद्यो जीवितं न भवेदिति ॥ ८५ ॥
40ab ततः शापभयाद्वाली ऋष्यमूकं महागिरिं ।
40cd प्रवेष्टुं न स शक्नोति द्रष्टुं वा रघुनन्दन ॥ ८६ ॥
41ab तस्याप्रवेशं मत्वाहमिह राम महावने ।
41cd विचरामि सहामात्यो भयं संत्यज्य दूरतः ॥ ८७ ॥
6, 36cd 8, 42ab एतत् तस्यास्थि काकुत्स्थ दुन्दुभेः संप्रकाशते ।
8, 42cd वीर्योत्सेकनिरस्तस्य गिरिकूटनिभं महत् ॥ ८८ ॥
43ab इमे च विपुलास्तालाः सप्त शाखावलम्बिनः ।
43cd वालिर्येषां त्रयो भिन्नास्तेन वीर्यं वितन्वता ॥ ८९ ॥

एतत् तस्य महद्वीर्यं तव संकीर्तितं मया ।
कथमुत्सहसे हन्तुं समरे तं दुरासदं ॥ १० ॥
अथैवं वदतस्तस्य सुग्रीवस्य महात्मनः ।
राघवो दुन्दुभेः कायं पादाङ्गुष्ठेन तोलयन् ॥ ११ ॥
लीलयैव तदा रामश्चिक्षेप शतयोजनं ।
असुरस्य तनुं शुष्कां पादेनैकेन राघवः ॥ १२ ॥
क्षिप्तं दृष्ट्वा च तं कायं सुग्रीवः प्लवगेश्वरः ।
लक्ष्मणस्याग्रतो राममिदं वचनमब्रवीत् ॥ १३ ॥
परिश्रान्तेन मत्तेन भ्रात्रा मे बालिना पुरा ।
आर्द्रः समांसः प्रत्यग्रः क्षिप्तः कायस्तदा सखे ॥ १४ ॥
लघुः संप्रति निर्मांसस्तृणभूतश्च शुष्ककः ।
नात्र शक्यं बलं ज्ञातुं तव वा तस्य वाधिकं ॥ १५ ॥
स हि शूरश्च मानी च प्रख्यातबलपौरुषः ।
तेजस्वी वानरो बाली संयुगेष्वपराजितः ॥ १६ ॥
दृश्यन्ते चास्य कर्माणि दुष्कराणि सुरासुरैः ।
यानि संस्मृत्य संस्मृत्य ऋष्यमूकं त्यजामि न ॥ १७ ॥
उद्विग्नः शङ्कितश्चाहं वनेषूद्भ्रान्तचेतनः ।
अनुरक्तैः सहामात्यैश्चरामि हनुमादिभिः ॥ १८ ॥
यदि भिन्द्याद्भवान् सालानिमानेकेषुणा ततः ।
जानीयां त्वां महाबाहो समर्थं बालिनो बधे ॥ १९ ॥

खल्वहं त्वां न तुलये नावमन्ये च राघव ।
कर्मभिस्तस्य भीमैस्तु कातर्यं जायते मम ॥ १०० ॥
उपलब्धं हि मित्रं मे सुश्लाघ्यं मित्रवत्सलं ।
त्वामहं पुरुषव्याघ्र हिमवन्तमिवाश्रितः ॥ १०१ ॥
किन्तु तस्य बलज्ञोऽहं भ्रातृरूपस्य वैरिणः ।
अप्रत्यक्षं च मे वीर्यं समरे तव राघव ॥ १०२ ॥
स्निग्धानां प्रीतियुक्तानां सुहृदां सुहृदं प्रति ।
कातरं हृदयं राम प्रत्ययं नाधिगच्छति ॥ १०३ ॥
यच्चैवं तोलयामि त्वां तच्च मे क्षन्तुमर्हसि ।
अवश्यं हि बलं ज्ञेयं मया तव च तस्य च ॥ १०४ ॥
कामं राम तव त्रीणि प्रमाणं धैर्यमाकृतिः ।
सूचयन्ति परं तेजो भस्मच्छन्नमिवानलं ॥ १०५ ॥
तत् कृत्वा कार्मुकं सज्यं हस्तिहस्तमिवायतं ।
आकर्णमूलमाकृष्य विसृज त्वं महाशरं ॥ १०६ ॥
इमान् हि तालान् प्रहितस्त्वया शरो न संशयो मेऽस्ति विदारयेद्ध्रुवं ।
अलं विमर्शेन सखे मम प्रियं कुरुष्व राजात्मज याचितो मया ॥ १०७ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे दुन्दुभ्युपाख्यानं
नाम नवमः सर्गः ॥

## X.

एवमुक्त्वा तु सुग्रीवो रामं दशरथात्मजं ।
ध्यात्वा मुहूर्तं काकुत्स्थमिदं वचनमब्रवीत् ॥ १ ॥
य एष रावणो नाम सीतां हरति दुर्मतिः ।
एष वीर्यवतां वीर्यमादत्ते राक्षसेश्वरः ॥ २ ॥
देवदानवगन्धर्वयक्षरक्षोमहोरगाः ।
मानवाश्चैव राजानो महाबलपराक्रमाः ॥ ३ ॥
त्रैलोक्यविजयार्थाय युधि विक्रम्य निर्जिताः ।
पितामहवरोत्सिक्तोऽगणयन्न हि किञ्चन ॥ ४ ॥
एवंप्रभावो रक्षः स रावणो युधि दुर्जयः ।
नित्यं तु बाली समये भ्राता मे वानरेश्वरः ॥ ५ ॥
संध्यामुपासितुं याति समुद्रौ पूर्वपश्चिमौ ।
गच्छन्तं चानुगच्छामि नित्यं भ्रातरमग्रजं ॥ ६ ॥
अन्वेष्टुं पदवीं चास्य न शक्यं गरुडादृते ।
तस्यानिलगतेः पूर्वं समुद्रतटमासतः ॥ ७ ॥
देवकार्यं कर्तुकामो रावणोऽभ्यागमत् तदा ।
बलवन्तं तमालक्ष्य राक्षसः पुरुषादकः ॥ ८ ॥
जितकाशी दुरात्मा स युद्धं देहीति चाब्रवीत् ।
वानरेन्द्रो राक्षसेन्द्रमब्रवीत् प्रियदुर्मते ॥ ९ ॥

मुहूर्तं मृष्यतां संध्या यावदुपासिता मया ।
तच्छ्रुत्वा क्रोधरक्ताक्षो दशग्रीवो महाबलः ॥ १० ॥
कोऽयं देवोऽथ वा यस्य पूजां त्वं कर्तुमर्हसि ।
मामनादृत्य दुर्बुद्धे कर्तव्यस्तव निग्रहः ॥ ११ ॥
यदा देवा मया युद्धे सासुरोरगदानवाः ।
निर्जिता युधि विक्रम्य मन्नामिव च घुष्यतां ॥ १२ ॥
दुर्बुद्धे अकृतप्रज्ञ वानर त्वं न बुध्यसे ।
लोकेश्वरं रावणं मां पौलस्त्यकुलनन्दनं ॥ १३ ॥
आख्यातो नारदेनासि ततस्त्वं विदितो मम ।
तिष्ठ त्वं देहि युद्धं मे ततो द्रक्ष्यसि पूर्वजान् ॥ १४ ॥
तच्छ्रुत्वा वानरेन्द्रस्तु युद्धायैव मनो दधे ।
एह्येहि रावण क्रूर वेद्मि त्वां देवकण्टकं ॥ १५ ॥
युध्यस्व यदि ते शक्तिर्मया सह निशाचर ।
हृष्टाः पश्यन्तु निहतं त्वामद्य त्रिदिवौकसः ॥ १६ ॥
स तथोक्तो दशग्रीवो मुष्टिमुद्यम्य वानरं ।
प्रहर्तुकामश्चक्राम दृष्ट्वा बालिनमाहवे ॥ १७ ॥
दशास्यं विंशतिभुजं राक्षसं पर्वतोपमं ।
दीर्घदंष्ट्रं महाकायं विकृतास्यं महाभुजं ॥ १८ ॥
असंभ्रान्तं तदा बाली प्रहस्य बलिनां वरं ।
नातितीव्रेण देवारिं गृह्य कक्षान्तरेऽकरोत् ॥ १९ ॥

तस्य निष्पीड्यमानस्य भुजान्तरगतस्य च ।
सोच्छ्वा समभवद्वक्रं सार्चिर्ज्वालाकुलं महत् ॥ २० ॥
अविच्छिन्नान्तरज्वालो कृताकृतिरिवानलः ।
बाहुदण्डविरुद्धस्तु निःश्वासपरमोऽभवत् ॥ २१ ॥
दशशीर्षो महाबाहुः कन्धरान्तरसंवृतः ।
वृक्षमूले महानागो यथा पाशेन यन्त्रितः ॥ २२ ॥
सभाजितश्च मे भ्राता दिष्ट्या दिष्ट्येति चाब्रवीत् ।
समाभाष्य परिष्वज्य मामथैकेन पाणिना ॥ २३ ॥
उपस्पृश्य शुचिर्भूत्वा संध्यां तां समुपासत ।
स तु संध्यामुपासित्वा वायुमार्गमथाविशत् ॥ २४ ॥
महाभारैरिवासक्तैः सज्वालकवलैर्मुखैः ।
तुण्डाग्रनखपुच्छस्तु गरुत्मानिव वीर्यवान् ॥ २५ ॥
गच्छता वायुवेगेन कालमेघेन संगतः ।
हिमवान् पारिपात्रो वा विन्ध्यो वेति ततस्ततः ॥ २६ ॥
गिरिकन्दरमूर्ध्नि स्थो नगो वेति विभाव्यते ।
पूर्वां संध्यामुपासित्वा दक्षिणेन प्रदक्षिणः ॥ २७ ॥
मध्याह्नात् पश्चिमे स्थित्वा सोत्तरे वायुपास्पृशत् ।
किष्किन्धामागतः शीघ्रमथ बाली महाबलः ॥ २८ ॥
उवाच रावणं मुक्त्वा कृतकृत्योऽस्मि साम्प्रतं ।
आदित्यगं तदाभून्मे मनो राक्षसपुङ्गव ॥ २९ ॥

ततो युद्धं मया वीर न ते दत्तं महाबल ।
साम्प्रतं कृतकृत्योऽस्मि युध्यस्व बलमास्थितः ॥ ३० ॥
एवमुक्तो दशग्रीवो मुखेन परिशुष्यता ।
कृच्छ्राद्व्रीडायुतोवाच भुजयन्त्रनिपीडितः ॥ ३१ ॥
वानरेन्द्र महाबाहो बलवीर्यसमन्वितः ।
त्रिषु लोकेष्वजेयोऽस्मि सोऽहमद्य त्वया जितः ॥ ३२ ॥
अनुज्ञातो गमिष्यामि त्वया वानरपुङ्गव ।
संनिवर्ताभिनन्दस्व गच्छेयं स्वस्तिमागतः ॥ ३३ ॥
तस्य तद्वचनं श्रुत्वा बाली बलवतां वरः ।
सिद्धार्थो गच्छ रक्षेति किष्किन्ध्यामगमत् तदा ॥ ३४ ॥
एवंप्रभावो बाली स यदि शक्नोषि संयुगे ।
शरेणैकेन तं हन्तुं ततो युध्यामि संयुगे ॥ ३५ ॥
इतीव काकुत्स्थबलं विचिन्तयन् बलं च बालिप्रभवं स वानरः ।
न वेद रामस्य स पौरुषं ध्रुवं सुरासुरैरप्यविषह्यमाहवे ॥ ३६ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे बालिबलप्रख्यापनं
नाम दशमः सर्गः ॥

8 = XI.

तस्य तद्वचनं श्रुत्वा सुग्रीवस्य महात्मनः ।
53cd स्मितपूर्वमिदं रामः प्रत्युवाच कपीश्वरं ॥ १ ॥ —
यदि न प्रत्ययोऽस्मासु विद्यते तव वानर । —
प्रत्ययं समरश्लाघ्यमहमुत्पादयामि ते ॥ २ ॥ —
54cd स गृहीत्वा धनुर्दिव्यं शक्रचापसमद्युति ।
55ab मुमोच बाणं संधाय तालानुद्दिश्य राघवः ॥ ३ ॥
56ab स विसृष्टो बलवता बाणो हेमपरिष्कृतः ।
56cd भित्त्वा तालान् गिरिं चैव प्रविवेश रसातलं ॥ ४ ॥
57ab स तु हंसस्य रूपेण तत उत्पत्य सायकः ।
57cd आजगाम पुनस्तूणं रामस्यामिततेजसः ॥ ५ ॥
58ab तान् दृष्ट्वा सप्त निर्भिन्नान् तालान् वानरपुङ्गवः ।
58cd रामस्य शरवेगेन विस्मयं परमं गतः ॥ ६ ॥
59ab सुदुष्करं तु तत् कर्म सुग्रीवः प्रसमीक्ष्य हि । —
59cd मूर्ध्नि कृत्वाञ्जलिं हृष्टो राघवं प्रशशंस ह ॥ ७ ॥
62ab राम विक्रमशौटीरमहेन्द्रवरुणोपम ।
62cd अहो ते चापमुक्तस्य सायकस्य महद्बलं ॥ ८ ॥
पूर्वमेव मया राम तर्कितस्त्वं नरर्षभ ।
महता तेजसा युक्तो गूढोऽग्निरिव दारुषु ॥ ९ ॥

नाभवद्भूतभव्यानां विश्वे जगति राघव ।
समर्थस्तव काकुत्स्थ धनुष्यस्त्रबले मतौ ॥१०॥
यथा हि तेजस्विवरो दिवाकरो
यथा नगानां च वरो हिमालयः ।
यथोदधीनां च वरो महार्णवम्
तथा नराणामसि विक्रमे वरः ॥११॥
न वृत्रशत्रुर्न यमो न चासुरो
न सर्वयक्षेशधनेश्वरो विभुः ।
न पाशहस्तो वरुणश्च ते समो
न मारुतो नैव च हव्यवाहनः ॥१२॥

इत्यार्षे रामायणे किष्किन्धाकाण्डे तालनिर्भेदो
नाम एकादशः सर्गः

४ = XII.

स मूर्ध्ना न्यपतद्भूमौ प्रलम्बीकृतमूर्धजः ।
सुग्रीवो विपुलग्रीवो राघवाय कृताञ्जलिः ॥ १ ॥
इदं चोवाच वचनं पुनरेव कपीश्वरः ।
रामं सर्वास्त्रसंपन्नं श्रेष्ठं सर्वधनुष्मतां ॥ २ ॥
सेन्द्रानपि सुरान् सर्वांस्त्वं बाणैः पुरुषर्षभ ।
समर्थः समरे हन्तुं किं पुनर्बालिनं रणे ॥ ३ ॥
अपि बालिसहस्राणां सहस्रं पार्थिवात्मज ।
समर्थोऽसि रणे जेतुं किमुतैकमरिंदम ॥ ४ ॥
येन सप्त महातालाः शैलोऽयं दानवास्थितः ।
शरेणैकेन निर्भिन्नाः समर्थस्तस्य कः पुमान् ॥ ५ ॥
8. 64ab अद्य मे विगतः शोकः प्रीतिरद्य परा मम ।
अद्य मन्ये विनिहतं बालिनं युद्धदुर्मदं ॥ ६ ॥
8. 64cd सुहृदं त्वां समासाद्य महेन्द्रवरुणोपमं ।
उद्युक्तेभ्योऽपि देवेभ्यः समरे नास्ति मे भयं ॥ ७ ॥
65ab तदद्यैव प्रियार्थं मे वैरिणं भ्रातृरूपिणं । ।
65cd बालिनं जहि काकुत्स्थ संवरं मघवानिव ॥ ८ ॥
67ab ततो रामः परिष्वज्य सुग्रीवं प्रियवादिनं ।
67cd प्रत्युवाच महाप्राज्ञो लक्ष्मणानुमतं वचः ॥ ९ ॥

एहि गच्छामि सुग्रीव किष्किन्धां बालिपालितां ।
गत्वा चाह्वय युद्धाय वैरिणं भ्रातृरूपिणं ॥१०॥
एवमुक्तस्तु सुग्रीवो रामेण रिपुघातिना ।
गच्छामीत्यब्रवीद्धृष्टः प्रयातास्तेऽथ सत्वराः ॥११॥
किष्किन्धां त्वरितं गत्वा देशे पादपसङ्कटे ।
वृक्षैरात्मानमावृत्य तेऽतिष्ठन् गहने वने ॥१२॥
अथ रामोऽब्रवीत् तत्र सुग्रीवं प्रियवादिनं ।
कुरु नादं गुहाद्वारि स्थित्वा त्वमकुतोभयः ॥१३॥
बालिनं चाह्वय तथा निष्क्रमेत् स गुहामुखात् ।
तमहं निहनिष्यामि शरेणाशनिवर्चसा ॥१४॥
एवमुक्ते तु वचने काकुत्स्थेनामितौजसा ।
नादः स्निग्धोऽथ गम्भीरो महानासीत् तदा दिवि ॥१५॥
माला च काञ्चनी दिव्या नानारत्नविभूषिता ।
दिवः सुग्रीवमूर्धानमभितो निपपात ह ॥१६॥
सा पतन्ती महीं माला काञ्चनी देवनिर्मिता ।
प्रचकाशे तदाकाशे विद्युन्माला मनोहरा ॥१७॥
सा हि पित्रा कृता स्नेहादादित्येन दिवौकसा ।
बालिनो मालया तुल्या स्वयं यत्नाद्विनिर्मिता ॥१८॥
तयापि नद्धया तत्र सुग्रीवः प्लवगेश्वरः ।
शुशुभे हरिशार्दूलो ज्वलदग्निरिवानलः ॥१९॥

ततः स कृत्वा सुग्रीवो नमस्कारं दिवं प्रति ।
कृताञ्जलिरथो पश्चाद्राघवं परिषस्वजे ॥ २० ॥
स पूजितो गुरुस्नेहाल्लक्ष्मणेनापि धीमता ।
अभिवादितश्च विधिवल्लक्ष्मणं परिषस्वजे ॥ २१ ॥
प्रदक्षिणं समावृत्य स तौ दशरथात्मजौ ।
सुग्रीवो विपुलग्रीव आजगाम गुहामुखं ॥ २२ ॥
76cd ततो नदन् महानादं बालिनं स समाह्वयत् ।
77ab सुग्रीवो गाढसंवीतो नादैर्भिन्दन्निवाम्बरं ॥ २३ ॥
77cd तं श्रुत्वा विनदं बाली घोरं चुक्रोध वीर्यवान् ।
77ef निष्पपात च संक्रुद्धस्तोयदादिव भास्करः ॥ २४ ॥
78ab तयोः सुतुमुलं युद्धं बालिसुग्रीवयोरभूत् ।
78cd दिवीव ग्रहयोर्घोरं बुधाङ्गारकयोर्महत् ॥ २५ ॥
79ab तलैरशनिकल्पैश्च वज्रकल्पैश्च मुष्टिभिः ।
79cd जघ्नतुः समरेऽन्योन्यं वृक्षैर्गिरितटैरपि ॥ २६ ॥
80ab रामोऽथ धनुरादाय तावुभौ समवेक्षत ।
पश्यंश्च बालिसुग्रीवौ ददर्श वपुषा समौ ॥ २७ ॥
80cd अन्योन्यसदृशौ वीरावन्योन्यसमविक्रमौ ।
उभौ जज्ञे तदा तुल्यावश्विनाविव रूपिणौ ॥ २८ ॥
81ab स नाभिजानन् सुग्रीवं बालिनं चापि राघवः ।
81cd न चकार तदा बुद्धिं सायकस्य विमोक्षणे ॥ २९ ॥

82ab एतस्मिन्नन्तरे भग्नः सुग्रीवस्तेन बालिना ।
82cd ऋष्यमूकं प्रदुद्राव ज्ञात्वा रामस्य चाश्रयं ॥३०॥
83ab क्लान्तो रुधिरसिक्ताङ्गः प्रहारैर्जर्जरीकृतः ।
83cd बालिनाभिद्रुतो रोषात् प्रविवेश महावनं ॥३१॥
84ab तं प्रविष्टं वनं दृष्ट्वा बाली शापभयात् तदा ।
84cd मुक्तस्त्वमिति होवाच संनिवृत्य महाद्युतिः ॥३२॥
85ab राघवोऽपि सह भ्रात्रा तैश्चापि सह मन्त्रिभिः ।
85cd तदेव वनमागच्छत् सुग्रीवो यत्र वानरः ॥३३॥
86ab तं दृष्ट्वाभ्यागतं रामं सामात्यं सहलक्ष्मणं ।
86cd दीनोऽथाधोमुखो ह्रीमान् सुग्रीवो वाक्यमब्रवीत् ॥३४॥
87ab आह्वयस्वेति मामुक्त्वा दर्शयित्वा च विक्रमं ।
87cd वैरिणा घातयित्वा मां किमुपेक्षा कृता त्वया ॥३५॥
88ab तस्मिन्नेव हि वक्तव्यं काले राघव तत्त्वतः ।
88cd न हनिष्याम्यहमिति न स्थास्ये क्षणमप्यहं ॥३६॥
अभविष्यं विनिहतो बालिना यद्यहं रणे ।
ममाभविष्यत् को राज्येनार्थो बन्धुजनेन वा ॥३७॥
89ab तमेवमादिवचनं वदन्तं कृपणं बहु ।
89cd अनामर्षयमाणश्च रामः सुग्रीवमब्रवीत् ॥३८॥
90ab सुग्रीव श्रूयतां तावन्मन्युश्चैवापनीयतां ।
90cd कारणं येन बाणोऽयं न मुक्तः प्लवगाधिप ॥३९॥

91ab अलंकारेण वेशेन प्रमाणेन गतेन च ।
91cd त्वं च सुग्रीव बाली च सदृशौ स्थः परस्परं ॥४०॥
92ab स्वरेण वर्चसा चैव प्रेक्षितेन स्थितेन च ।
92cd विक्रमेण च वाचा च व्यक्तं वां नोपलक्षये ॥४१॥
93ab तदहं रूपसादृश्यान्मोहितो वानरेश्वर ।
93cd कथं सुहृद्वधो न स्यादिति बाणं न मुक्तवान् ॥४२॥
94ab इमं मुहूर्तं तु मया पश्य बालिनमाहवे ।
94cd निरस्तमिषुणैकेन चेष्टमानं महीतले ॥४३॥
95ab चिह्नभूतं त्वभिज्ञानं त्वमङ्ग कर्तुमर्हसि ।
95cd येन त्वामभिजानीयां द्वन्द्वयुद्धमुपागतं ॥४४॥
96ab गजपुष्पमयीं मालामुत्पाद्य कुसुमायुतां ।
96cd कुरु लक्ष्मण कण्ठेऽस्य सुग्रीवस्य महात्मनः ॥४५॥
97ab ततो गिरितटे जातामारुह्य सुदुरासदां ।
97cd लक्ष्मणो गजपुष्पीं तां तस्य कण्ठे स सक्तवान् ॥४६॥
98ab स तया शुशुभे वीरो मालया कण्ठसक्तया ।
98cd विहायसि बलाकानां मालया तोयदो यथा ॥४७॥
99ab भ्राजमानेन वपुषा मालया कृतलक्षणः ।
99cd प्रतस्थे सह रामेण पुनरेव गुहां प्रति ॥४८॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे बालिबधविधानं नाम द्वादशः सर्गः ॥

L.E 1 = E.E XIII.

1ab ऋष्यमूकात् स धर्मात्मा किष्किन्धां लक्ष्मणाग्रजः ।
1cd जगाम सहसुग्रीवो बालिपौरुषपालितां ॥ १ ॥
2ab समुद्यम्य महच्चापं रामः काञ्चनभूषणं ।
2cd बाणमुद्धृत्य चैवैकं ज्वलितानलवर्चसं ॥ २ ॥
3ab अग्रतः प्रययौ तस्य राघवस्य महात्मनः ।
3cd सुग्रीवो विपुलग्रीवो लक्ष्मणश्चैव वीर्यवान् ॥ ३ ॥
4ab पृष्ठतो हनुमान् वीरो नलनीलौ च वानरौ ।
4cd तारश्चैव महातेजा हरियूथपयूथपाः ॥ ४ ॥
5ab पश्यन्तस्ते ययुर्वृक्षान् पुष्पितान् रुचिरान् बहून् ।
5cd प्रसन्नाम्बुवहाश्चैव सरितः सागरंगमाः ॥ ५ ॥
6ab कन्दराणि च शैलानां निर्झराणि गुहास्तथा ।
6cd शिखराणि च दिव्यानि दरीश्च विविधाः शुभाः ॥ ६ ॥
7ab वैदूर्यकान्ततोयाश्च नलिनीः फुल्लपङ्कजाः ।
7cd पश्यन्तः प्रययुर्मार्गे नानापुष्पगणैर्युताः ॥ ७ ॥
8ab कादम्बैः सारसैर्हंसैर्वञ्जुलैर्जलकुक्कुटैः ।
8cd चक्रवाकैस्तथान्यैश्च दात्यूहैश्च विनादिताः ॥ ८ ॥
सुस्थांश्चापि गताशङ्कान् वनराजिसमाश्रयान् ।
9ab चरतो वीक्षमाणाश्च ययुर्मृगगणान् वने ॥ ९ ॥

तडागसेविनश्चैव कुञ्जरान् गिरिसंनिभान् ।
जलस्थांश्च स्थलस्थांश्च करेणुगणसंवृतान् ॥ १० ॥
वने वनचरांश्चान्यान् विविधान् मृगपक्षिणः ।
पश्यन्तस्ते ययुः सर्वे सुग्रीवपरिवर्तिनः ॥ ११ ॥
तेषां तु गच्छतां तत्र त्वरितं सुमनोहरं ।
द्रुमषण्डमथो दृष्ट्वा रामः सुग्रीवमब्रवीत् ॥ १२ ॥
कस्येदं मेघसंकाशं तरुषण्डं प्रकाशते ।
नानागुल्मलतानद्धं पर्यन्तकदलीवनं ॥ १३ ॥
किमेतज्ज्ञातुमिच्छामि सखे कौतूहलं हि मे ।
महदस्य परिज्ञाने गच्छन्नेव च शंस मे ॥ १४ ॥
तस्यैतद्वचनं श्रुत्वा राघवस्य महात्मनः ।
गच्छन्नेवाचचक्षेऽथ सुग्रीवस्तन्महावनं ॥ १५ ॥
यदेतन्मेघसंकाशं पश्यस्याश्रममण्डलं ।
कदलीवनसंछन्नं स्वादुमूलफलोदकं ॥ १६ ॥
अत्र सप्तजना नाम मुनयः संशितव्रताः ।
सप्तैवासन् धर्मशीला नित्यं वायुजलाशनाः ॥ १७ ॥
अहोरात्रकृताहारा मौनव्रतपरायणाः ।
दिवं वर्षशतैर्याताः सप्तभिः सकलेवराः ॥ १८ ॥
तेषामेष प्रभावेन कदलीवनसंवृतः ।
आश्रमः सुदुराधर्षः सेन्द्रैरपि सुरासुरैः ॥ १९ ॥

पक्षिणो वर्जयन्त्येनं तथान्ये वनचारिणः ।
विशन्ति मोहाद्ये ह्येनं निवर्तन्ते न ते पुनः ॥ २० ॥
विभूषणरवो ह्यत्र श्रूयते सकलाक्षरः ।
तूर्यगीतनिनादश्च दिव्यो गन्धः प्रवाति च ॥ २१ ॥
दृश्यन्ते चाग्नयो दीप्तास्तेषामत्र महात्मनां ।
धूमश्च दृश्यतेऽद्यापि कपोताङ्गारुणो महान् ॥ २२ ॥
कुरु प्रणामं धर्मज्ञ तानुद्दिश्य तपोधनान् ।
लक्ष्मणेन सह भ्रात्रा प्रयतः संहताञ्जलिः ॥ २३ ॥
प्रणमन्ति हि ये तेषामृषीणां संशितात्मनां ।
न तेषामशुभं किञ्चित् कदाचिदुपपद्यते ॥ २४ ॥
ततो रामः सह भ्रात्रा प्रयतः संहताञ्जलिः ।
स निश्चित्य नमश्चक्रे महर्षीन् संशितव्रतान् ॥ २५ ॥
स च प्रणम्य तान् सर्वान् रामो भूयः सलक्ष्मणः ।
ससुग्रीवः पुनर्हृष्टो गुहामभिमुखो ययौ ॥ २६ ॥
ते गत्वा दूरमध्वानं तस्मात् सप्तजनाश्रमात् ।
ददृशुस्तां दुराधर्षां किष्किन्धां बालिपालितां ॥ २७ ॥
वृक्षैर्देहांस्तथावृत्य व्यतिष्ठन् गहने वने ।
राघवावथ सुग्रीवो हनुमत्प्रमुखाश्च ये ॥ २८ ॥
अथ राजीवताम्राक्षं दृप्तसिंहर्षभाञ्चितं ।
वीक्ष्य रामं क्रियादक्षं सुग्रीवो वाक्यमब्रवीत् ॥ २९ ॥

30ab हरिराजगुहां दीप्तां तप्तकाञ्चनतोरणां ।
30cd प्राप्ताः स्मो ध्वजयन्त्राढ्यां किष्किन्धां बालिपालितां ॥ ३० ॥
31ab या प्रतिज्ञा त्वया वीर पुरा बालिबधे कृता ।
31cd सफलां तां कुरु क्षिप्रं लतां कुसुमितामिव ॥ ३१ ॥
32ab एवमुक्तस्तु धर्मात्मा सुग्रीवेण स राघवः ।
32cd सुग्रीवं हर्षयन् वाक्यमुवाचेदमनन्तरं ॥ ३२ ॥
कृतचिह्नस्त्वमनया मालया वानरेश्वर ।
विश्रब्धं बालिनं भूयः समाह्वय सखे युधि ॥ ३३ ॥
34ab अद्य बालिसमुत्थं ते भयं दुःखं च वानर ।
34cd नाशयाम्येकवाणेन सखे सत्येन ते शपे ॥ ३४ ॥
35ab मम दर्शय तं पापं वैरिणं भ्रातृरूपिणं ।
35ab यं तमद्यैव वाणेन हतं पांसुषु शायये ॥ ३५ ॥
36ab यदि दृष्टिपथं प्राप्तो भूयो जीवन् व्रजेत सः ।
36cd तव शत्रुस्ततो मां त्वं गर्हयेथा विगर्हितं ॥ ३६ ॥
37ab प्रत्यक्षं ते मया तालाः सप्त वाणेन दारिताः ।
37cd तेनाद्य विद्धि नियतं बालिनं समरे हतं ॥ ३७ ॥
38ab अनृतं नोक्तपूर्वं हि मया कृच्छ्रेऽपि तिष्ठता ।
38cd धर्मलोपभयाद्वीर न च वक्ष्ये कदाचन ॥ ३८ ॥
39ab सफलां ते करिष्यामि प्रतिज्ञां संभ्रमं त्यज ।
39cd प्राप्तबीजमिव क्षेत्रं वृष्टिसर्गेण वासवः ॥ ३९ ॥

40ab आह्वानं कारणं तस्माद्वालिनो हेममालिनः ।
40cd सुग्रीव कुरु संशब्दं निष्पतेत् स यथा पुनः ॥ ४० ॥
41ab जितकाशी बलश्लाघी त्वया च धर्षितः पुरा ।
41cd निष्पतिष्यत्यमर्षेण बाली स प्रियसङ्गरः ॥ ४१ ॥
42ab रिपुतो धर्षणां वीरो मर्षयेन्न स संयुगे ।
42cd जानीमो हि स्वकं वीर्यं स्त्रीसमक्षं विशेषतः ॥ ४२ ॥
43ab स तद्रामवचः श्रुत्वा हेमपिङ्गेक्षणः कपिः ।
43cd ननाद पुनरेवोच्चैर्नादैर्भिन्दन्निवाम्बरं ॥ ४३ ॥
27ab विचार्य स ततो दृष्टिं कानने काननप्रियः ।
27cd सुग्रीवो विपुलग्रीवः क्रोधमाहारयत् परं ॥ ४४ ॥
28ab ननादोच्चैर्गुहां सर्वां शब्देनापूरयन्निव ।
28cd गाढं निरसितः श्रीमानाह्वयद्वालिनं युधि ॥ ४५ ॥
44ab तेन शब्देन वित्रस्ता बभ्रमुर्मृगपक्षिणः ।
44cd राजदोषपरामृष्टाः कुलस्त्रिय इवातुराः ॥ ४६ ॥
45ab व्यद्रवंश्च भयाद्भीता दिशो वनगजास्तथा ।
45cd गुहागता मृगेन्द्राश्च वित्रेसुः शब्दधर्षिताः ॥ ४७ ॥

इत्यार्षे रामायणे किष्किन्धाकाण्डे किष्किन्धागमनं
नाम त्रयोदशः सर्गः ॥

10 + 16 = XIV.

1ab अथ तस्य निनादं तु सुग्रीवस्याभिगर्जितं ।
1cd शुश्रावान्तःपुरगतो बाली भ्रातुरमर्षणः ॥ १ ॥
2ab श्रुत्वैव च निनादं तु बलिनो दारुणं पुनः ।
2cd मद एकपदे नष्टः क्रोधश्चास्य ततोऽभवत् ॥ २ ॥
3ab स रोषताम्रनयनो बाली संध्यातपप्रभः ।
3cd उपरक्त इवादित्यः सद्यो निष्प्रभतां गतः ॥ ३ ॥
4ab दंष्ट्राकरालवदनः क्रोधताम्रतराकृतिः ।
4cd बभ्राजोत्फुल्लनयनः समृणाल इव ह्रदः ॥ ४ ॥
5ab सोऽमर्षवशमापन्नो निष्पपात हरीश्वरः ।
5cd वेगेन चरणन्यासैः कम्पयन्निव मेदिनीं ॥ ५ ॥
6ab तमुवाच ततस्तारा भर्तारं वानरेश्वरं ।
6cd परिष्वज्य भयादित्थं निष्पतन्तं गुहामुखात् ॥ ६ ॥
7ab साधु क्रोधमिमं वीर नदीवेगमिवागतं ।
8ab शयनादुत्थितः कल्यं माल्यं भुक्तमिव त्यज ॥ ७ ॥
8cd तवायं सहसा भूयो निर्गमो मे न रोचते ।
8ef श्रूयतां चाभिधास्यामि यन्निमित्तं निवार्यसे ॥ ८ ॥
9ab पूर्वमापतितः क्रोधात् त्वां स आह्वतवान् युधि ।
9cd भयाद्भुतस्त्वया संख्ये बलान्निःसृत्य निर्जितः ॥ ९ ॥

10ab त्वया तस्य निरस्तस्य सूदितस्य विशेषतः ।
10cd इहैव पुनराह्वानं शङ्कां जनयतीव मे ॥ १० ॥
11ab दर्पश्च व्यवसायश्च यादृशस्तस्य नर्दतः ।
11cd निनादस्य च संह्रादो नैतदल्पप्रयोजनं ॥ ११ ॥
12ab ससहायमहं मन्ये सुग्रीवमतितेजसं ।
सुव्यक्तमाश्रयं लब्ध्वा वलिनं पुनरागतः ॥ १२ ॥
13ab प्रकृत्या निपुणश्चासौ बुद्धिमांश्चैव वानरः ।
नानाश्रयात् समाह्वानं तव भूयः करोति सः ॥ १३ ॥
सत्यसधेन वीरेण राघवेण महात्मना ।
किल कृत्वैव सुमहत् सख्यमत्रागतः पुनः ॥ १४ ॥
13cd सुपरीक्षितवीर्येण लब्धलक्ष्येण धीमता ।
14ab परिश्रुतो मया पूर्वं रामेणैष सहायवान् ॥ १५ ॥
15ab तव भ्रातुर्हि विख्यातः सहायो रणकर्कशः ।
15cd रामः परबलामर्दी युगान्ताग्निसमः किल ॥ १६ ॥
16ab निवासवृक्षः साधूनामार्तानामार्तिनाशनः ।
16cd संपदां महतीनां च यशसो भुवि भाजनं ॥ १७ ॥
17ab ज्ञानविज्ञानसंपन्नो निदेशे निरतः पितुः ।
17cd धातूनामिव शैलेन्द्रो गुणानामाकरो महान् ॥ १८ ॥
18ab तत् क्षमं न विरोद्धुं ते सह तेन महात्मना ।
18cd दुर्जयेनाप्रमेयेन वीरेण रणकर्मणि ॥ १९ ॥

19ab वक्ष्यामि त्वां हितं किञ्चिन्न तु सम्यगसूयया ।
19cd श्रूयतां क्रियतां चैव यत् त्वां वक्ष्याम्यहं हितं ॥ २० ॥
20ab सुग्रीवं प्लवगश्रेष्ठं यौवराज्येऽभिषेचय ।
20cd विग्रहं मा कृथा वीर रामेणामिततेजसा ॥ २१ ॥
21ab अहं हि ते क्षमं मन्ये रामेण सह सौहृदं ।
21cd सुग्रीवेण च संप्रीतिं वैरमुत्सृज्य दूरतः ॥ २२ ॥
22ab लालनीयो हि ते भ्राता यवीयान वानरेश्वर ।
22cd विधेयो वाविधेयो वा सर्वथा बन्धुरेव सः ॥ २३ ॥
23ab यदिवा मत्प्रियं कार्यं यदिवावैषि ते हितं ।
23cd याच्यमानः प्रयत्नेन साधु मे कुरु भाषितं ॥ २४ ॥
रामो घोरतरो वीरः साक्षात् काल इवान्तकः । 6
तस्यैव च महावीर्यो भ्राता वै लक्ष्मणः श्रुतः ॥ २५ ॥
11.1ab तावुभौ सहितौ नित्यं धनुर्हस्तौ महाबलौ ।
1cd नैव सादयितव्यौ ते मनसापि कथञ्चन ॥ २६ ॥
2ab अथ सर्वाणि रत्नानि यानि सन्तीह ते गृहे ।
2cd तान्यादायाङ्गदो यातु राघवाय प्रयच्छतु ॥ २७ ॥
3ab संधिं गच्छतु रामेण युगान्तरवितेजसा ।
3cd गुहामिमां परित्यज्य देशं वान्यं व्रजामहे ॥ २८ ॥
4ab रामः सुग्रीवसहितो यतिष्यति महाभये ।
4cd अनागतविधानं च तस्यार्थे प्रविधीयतां ॥ २९ ॥

5ab संभ्रमोऽयं समुत्पन्नस्तस्माद्देशमिमं त्यज ।
6ab+5cd समर्थस्त्वमिमं नेतुमधिष्ठानपराक्रमैः ॥३०॥
6cd अशक्यः संयुगे स्थातुमवध्यास्यो बलीयसा ।
कुलबन्धुप्रयुक्तेन दृष्टापसरणे मतिः ॥३१॥
8ab तस्यास्तद्वचनं बाली हितमप्यायतिक्षमं ।
8cd तारायाः सौम्यरूपाया नागृह्णात् कालचोदितः ॥३२॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे तारावाक्यं
नाम चतुर्दशः सर्गः ॥

11+12 XV.

1ab तामेवं ब्रुवतीं तारां तारापतिनिभाननां ।
1cd बाली निर्भर्त्सयामास वाक्यमेतदुवाच ह ॥ १ ॥
2ab गर्जतोऽस्य सुविश्रब्धं शत्रोर्नित्याततायिनः ।
2cd मर्षयिष्यामि संशब्दं जातक्रोधः कथं प्रिये ॥ २ ॥
3ab अधर्षितानां शूराणां संयुगेष्वनिवर्तिनां ।
3cd धर्षणामर्षणं कान्ते मरणादतिरिच्यते ॥ ३ ॥
4ab सोढुं न च समर्थोऽहं योद्धुकामस्य संयुगे ।
4cd सुग्रीवस्यातिसंशब्दं पीनग्रीवस्य गर्जतः ॥ ४ ॥
प्रयुक्तां धर्षणां मानी यो मर्षयति शक्तिमान् ।
मनुष्य इति नाहं तं गणयामि मनस्विनि ॥ ५ ॥
11-9cd भूयश्च सिंहविक्रान्तस्तारामाह हरीश्वरः ।
11ab नाहं त्वन्मतिमासाद्य वैक्लव्याद्दैन्यमास्थितः ॥ ६ ॥
11cd स्वपराक्रमयुक्तश्च भविष्यामि पराङ्मुखः ।
12ab उत्पाटयतु वा रामो बाहुभ्यां विन्ध्यपर्वतं ॥ ७ ॥
12cd इमां सप्तसमुद्रान्तां संवर्तयतु वा महीं ।
13ab सचन्द्रतारं गगनं जगच्चेदं चराचरं ॥ ८ ॥
13cd दहत्वग्निशिखैर्वापि सायकैर्मर्मभेदिभिः ।
14ab न बिभीयामहं रामात् सुग्रीवसहितादपि ॥ ९ ॥

5ab न तु कार्यो विषादस्ते राघवं प्रति मत्कृते ।
5cd धर्मज्ञश्च कृतज्ञश्च न स पापं करिष्यति ॥ १० ॥
6ab प्रतियोत्स्याम्यहं गत्वा सुग्रीवं त्यज संभ्रमं ।
6cd दर्पं चास्यापनेष्यामि न च प्राणैर्विमोक्ष्यते ॥ ११ ॥
7ab निवर्तस्व सह स्त्रीभिः किं वा भूयोऽनुगच्छसि ।
7cd सौहृदं दर्शितं भद्रे मम तत् सुकृतं त्वया ॥ १२ ॥
8ab शापितासि मम प्राणैर्निवर्तस्व जयेन च ।
8cd अयं जित्वा निवृत्तोऽस्मि तमहं भ्रातरं रणे ॥ १३ ॥
9ab तं तु तारा परिष्वज्य बालिनं प्रियदर्शनं ।
9cd चकार रुदती मन्दं वेपमाना प्रदक्षिणं ॥ १४ ॥
10ab ततः स्वस्त्ययनं कृत्वा मन्त्रवद्विजयैषिणी ।
10cd अन्तःपुरं सह स्त्रीभिः प्रविवेश सुमध्यमा ॥ १५ ॥
11ab प्रविष्टायां तु तारायां सह स्त्रीभिः स्वमालयं ।
11cd निश्चक्राम ततो बाली महासर्प इव श्वसन् ॥ १६ ॥
12ab स निष्पत्य महावेगः क्रोधपर्याकुलेक्षणः ।
12cd सर्वतश्चारयन् दृष्टिं शत्रुदर्शनकाङ्क्षया ॥ १७ ॥
13ab स ददर्श ततो दूरात् सुग्रीवं हेमपिङ्गलं ।
15cd तमेवाभिमुखश्चापि ययौ योद्धुमतित्वरन् ॥ १८ ॥
सुसंनद्धं योद्धुकामं रामस्याश्रयगर्वितं ।
14ab स तं दृष्ट्वा महावीर्यः सुग्रीवं प्रत्युपस्थितं ॥ १९ ॥

14cd गाढं संनहनं चक्रे करिष्यन् कर्म दुष्करं ।
उवाच चातिताम्राक्षः सुग्रीवं रोषमूर्छितः ॥२०॥
दुर्बुद्धे पाप सुग्रीव का त्वरा मरणे पुनः ।
18ab एष मुष्टिर्मया बद्धस्त्वद्वधार्थं समुद्यतः ॥२१॥
18cd यस्ते मूर्ध्नि विनिर्मुक्तः प्राणानपहरिष्यति ।
एवमुक्त्वा तु सुग्रीवो हृदये तेन ताडितः ॥२२॥
20ab स क्रुद्धस्ताडितस्तेन समभिद्रुत्य वेगितः ।
20cd अभवच्छोणितोद्गारात् सोत्पीड इव सर्वतः ॥२३॥
21ab सुग्रीवेण तु निःशङ्कं सालमुत्पाट्य तेजसा ।
21cd हृदये निहतो बाली वज्रेणेव महागिरिः ॥२४॥
22ab स तु वाली रणगतः सालताडनविह्वलः ।
22cd गुरुभारसमाक्रान्तश्चचाल च जुघूर्ण च ॥२५॥
24ab तौ भीमबलविक्रान्तौ सुपर्णगतिवेगितौ ।
24cd प्रयुद्धौ घोररूपौ च खस्थौ पापग्रहाविव ॥२६॥
25ab बालिना भग्नदर्पे तु सुग्रीवे मन्दतेजसि ।
25cd बालिनं प्रति सामर्षश्चुक्रोधातीव राघवः ॥२७॥
26ab ततः संधाय रामेण शरमाशीविषोपमं ।
26cd निहतो हृदये बाली हेममाली महाबलः ॥२८॥
स तेन हृदये बाली निहतो निपपात ह ।
हा हतोऽस्मीति विक्रुश्य भ्रष्टमार्गश्च विह्वलः ॥२९॥

28ab वाष्पसंरुद्धकण्ठोऽथ दृष्ट्वा राममुपस्थितं ।
28cd उवाचार्तस्वरो बाली पङ्कमग्न इव द्विपः ॥३०॥
29ab पराङ्मुखबधं कृत्वा को नु प्राप्तस्त्वया गुणः ।
30cd यदहं युद्धसंसक्तस्त्वयादृश्येन ताडितः ॥३१॥
31ab न शोचामि तथात्मानं न तारां न च बान्धवान् ।
31cd यथा पुत्रं गुणश्रेष्ठमङ्गदं कनकाङ्गदं ॥३२॥
32ab यो मयादर्शनाद्दीनो बाल्यात् प्रभृति लालितः ।
दुःखमासाद्य सहसा सततं मामनुस्मरन् ॥३३॥
वाय्वर्कपरिपीताम्बुर्विपरिम्लानपङ्कजः ।
32cd तडाग इव कालेन परिशोषं गमिष्यति ॥३४॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे बालिबधो
नाम पञ्चदशः सर्गः ॥

## 13+16 = XVI.

तथा शरेणाभिहतो रामेणाक्लिष्टकर्मणा ।
पपात सहसा भूमौ निकृत्त इव पादपः ॥ १ ॥
16·47ab स भूमौ न्यस्तसर्वाङ्गस्तप्तकाञ्चनभूषणः ।
47cd पपात देवराजस्य मुक्तरश्मिरिव ध्वजः ॥ २ ॥
48ab तस्मिन् निपतिते वीरे तदा वानरपुङ्गवे ।
48cd मग्नचन्द्रमिव व्योम न प्रकाशति मेदिनी ॥ ३ ॥
49ab भूमौ निपतितस्यापि तस्य देहं महात्मनः ।
49cd जहौ न लक्ष्मीर्न प्राणो न तेजो न पराक्रमः ॥ ४ ॥
50ab तस्य दिव्या हि सा माला काञ्चनी देवनिर्मिता ।
50cd दधार हरिमुख्यस्य प्राणानन्ते समाहिता ॥ ५ ॥
51ab स तया मालया वीरः शुशुभे शक्रदत्तया ।
51cd संध्यानुगतपर्यन्तः पयोधर इवोद्गतः ॥ ६ ॥
52ab तस्य माला च देहश्च मर्मघाती शरश्च सः ।
52cd त्रिधेवोत्पतिता लक्ष्मीः पतितस्याप्यशोभत ॥ ७ ॥
13· 2cd ततस्तं वालिनं भूमौ शयानं रुधिरोक्षितं ।
3ab ययातिमिव पुण्यान्ते देवलोकात् परिच्युतं ॥ ८ ॥
1cd महेन्द्रपुत्रं पतितं दीप्तास्यं हरिलोचनं ।
उपासर्पत सुग्रीवो भ्रातरं प्लवगर्षभं ॥ ९ ॥ ✓

4ab बहुमानाच्च तं वीरं कर्कशं रणशोभितं ।
4cd लक्ष्मणानुचरो रामो ददर्शोपससर्प च ॥ १० ॥
5ab स दृष्ट्वा राघवं बाली लक्ष्मणं च महाबलं ।
5cd अब्रवीत् परुषं वाक्यं प्रसृतं धर्मसंहितं ॥ ११ ॥
6ab कुलीनः सत्त्वसंपन्नस्तेजस्वी चरितव्रतः ।
7ab रामः कारुण्यवेदी च प्रजानां च हिते रतः ॥ १२ ॥
6cd सानुक्रोशो महोत्साहः समयज्ञो दृढव्रतः ।
7cd इति ते सर्वभूतानि कथयन्ति यशो भुवि ॥ १३ ॥
8ab तान् गुणान् संप्रधार्याहमग्र्यं चाभिजनं तव ।
13. 8cd तारया प्रतिषिद्धोऽपि सुग्रीवेण समागतः ॥ १४ ॥
16. 55ab त्वं नराधिपतेः पुत्रः प्रथितः प्रियदर्शनः ।
55cd लिङ्गमेतच्च ते राम दृश्यते धर्मसंहितं ॥ १५ ॥
13. 9cd इयं चासीन्मम मतिस्त्वयि संभाविता गुणाः ।
10ab न त्वहं त्वां विजानामि धर्मच्छद्मवृतं शठं ॥ १६ ॥
10cd न च त्वां बुद्धवानस्मि तृणैः कूपमिवावृतं ।
सतां वेशधरं पापं भस्मच्छन्नमिवानलं ॥ १७ ॥
धर्मवैतंसिकं क्षुद्रमहं त्वां नावबुद्धवान् ।
12ab सतां वेशधरं पापं प्रच्छन्नाधर्मचारिणं ॥ १८ ॥
11ab नगरे वा पुरे वापि यदि नापकरोम्यहं ।
13. 11cd न च तेऽहं विरुध्यामि कस्मान्मां हतवानसि ॥ १९ ॥

राज्ञो दशरथस्याथ पुत्रः ख्यातो मतः कथं ।
धर्मात् परिच्युतो रामो धर्मलिङ्गधरश्च सन् ॥२०॥
16. 56ab कः क्षत्रियकुले जातः श्रुतवान् छिन्नसंशयः ।
56cd छद्मधर्मपरिच्छन्नः क्रूरं कर्म समाचरेत् ॥२१॥
58ab साम दानमहङ्कारः क्षमा सत्यं धृतिः स्थितिः ।
58cd इति क्षत्रगुणा राम दण्डश्चाप्यपकारिणां ॥२२॥
59ab वयं शाखामृगा राम पुष्पमूलफलाशनाः ।
संप्रवर्तामहे नैवं यथा राम प्रवर्तसे ॥२३॥
62ab भूमिर्हिरण्यं रूप्यं च विग्रहे कारणानि च ।
16. 62cd तत्र कस्ते मदीयेऽस्मिन् वने लोभः फलेषु वा ॥२४॥
नयश्च विनयश्चैव निग्रहानुग्रहौ तथा ।
राजवृत्तमसंकीर्णं न स्यात् कामात्मको नृपः ॥२५॥
त्वं तु कामप्रधानश्च राजवृत्ते न च स्थितः ।
संकीर्णधर्मवृत्तिश्च हिंसालोभपरायणः ॥२६॥
न तेऽस्ति सुमतिर्धर्मे नार्थे बुद्धिरुपस्थिता ।
इन्द्रियैः कामवृत्तैस्त्वं क्लिश्यसे प्राकृतो यथा ॥२७॥
13. 13ab फलमूलाशनं राम बालिनं वनगोचरं ।
13cd मामिहायुध्यमानं त्वमन्येन च समागतं ॥२८॥
14ab कृत्वा बाणेन तीक्ष्णेन ज्वलतानपकारिणं ।
14cd किं वक्ष्यसि सतां मध्ये कृत्वा कर्म जुगुप्सितं ॥२९॥

15ab राजहा ब्रह्महा गोघ्नश्चौरः प्राणिबधे रतः ।
15cd नास्तिकः परिवेत्ता च सर्वे निरयगामिनः ॥ ३० ॥
16ab अधार्यं चर्म मे सद्भिः करिष्यसि किमस्थिभिः ।
16cd अभक्ष्यं चैव मे मांसं त्वादृशैर्ब्रह्मचारिभिः ॥ ३१ ॥
17ab पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेषु राघव ।
17cd शशकः शल्लकी गोधा खड्गः कूर्मश्च पञ्चमः ॥ ३२ ॥
अभक्ष्याणि च पञ्चैव यानि राम श्रुतानि मे ।
सृगालश्चैव नक्रश्च वानरः किन्नरो नरः ॥ ३३ ॥
18ab चर्म चास्थि च मे राम न स्पृशन्ति मनीषिणः ।
18cd भक्ष्यं नैव च मे मांसं सद्भिः पञ्चनखो ह्यहं ॥ ३४ ॥
19ab त्वया नाथेन काकुत्स्थ न सनाथा वसुंधरा ।
19cd प्रमदा शीलसंपन्ना धूर्तेन पतिना यथा ॥ ३५ ॥
20ab शठो नैकृतिकः क्षुद्रो धर्मवैतंसिकोऽनृजुः ।
20cd कथं दशरथेन त्वं जातः पापो महात्मना ॥ ३६ ॥
21ab छिन्नचारित्रकक्षेण सतां धर्मातिवर्तिना ।
21cd त्यक्तधर्माङ्कुशेनाहं निहतो राम हस्तिना ॥ ३७ ॥
23ab त्वया ह्यदृष्टेन रणे निहतोऽहं दुरात्मना ।
23cd प्रसुप्तः पन्नगेनेव नरः कालवशंगतः ॥ ३८ ॥
22ab दृश्यस्त्वं यदि युध्येथा मया सह नृपात्मज ।
22cd अद्य वैवस्वतं पश्येस्त्वं ध्रुवं निहतो मया ॥ ३९ ॥

24ab सुग्रीवप्रियकामेन यदहं हिंसितस्त्वया ।
24cd कण्ठे बद्ध्वा प्रदत्तः स्यान्मया तव स रावणः ॥ ४० ॥
25ab न्यस्तां सागरतोये वा पाताले वापि मैथिलीं ।
25cd आनयेयमहं दर्शे श्वेतामश्वतरीमिव ॥ ४१ ॥
पूर्वं मां स किलागत्य रावणो राक्षसाधिपः ।
संध्याकालेऽब्रवीद्रक्षो युध्यस्वेति मया सह ॥ ४२ ॥
इति ब्रुवन् मया चोक्तो मुहूर्तं मृष्यतामिति ।
यावत् संध्यामुपासेऽहं चातुःसागरिकीमिमां ॥ ४३ ॥
एवमुक्तं यदा रक्षो न व्यतिष्ठत पापकृत् ।
तदा वै बाहुपाशेन बद्ध्वा संध्यामुपास्य च ॥ ४४ ॥
इहानीय मया प्रोक्तो युध्यस्वेति स राक्षसः ।
स प्रणम्य गतो नाहं तव शक्त इति ब्रुवन् ॥ ४५ ॥
तत् तु कार्यमयं नैव सुग्रीवस्ते करिष्यति ।
चिरेण वा मन्दबुद्धिः कृच्छ्रेण च करिष्यति ॥ ४६ ॥
अहं यदर्थं निहतस्त्वया वै कार्यगौरवात् ।
अहमेव त्वया तत्र किमर्थं न नियोजितः ॥ ४७ ॥
कार्यस्य कारणार्थाय यदर्थं परितप्यसे ।
मयैव दत्तः स भवेत् तव भार्यापहारकः ॥ ४८ ॥
26ab युक्तं यत् प्राप्नुयाद्राज्यं सुग्रीवः स्वर्गते मयि ।
26cd तदयुक्तमधर्मेण यत् त्वयाहं हतो रणे ॥ ४९ ॥

काममेवंविधो लोकः कालेन परिमुच्यते ।
क्षमं कृतं चेद्भवता दुष्कृतं संप्रधार्यतां ॥५०॥
इन्द्रदत्तामिमां मालां सुग्रीवः प्रतिमुञ्चतु ।
प्राप्नोतु हरिराज्यं च त्यक्ष्यामि जीवितं स्वयं ॥५१॥
सुग्रीवमङ्गदं चैव तारां चैव सुदुःखितां ।
भवान् परिग्रहैः प्रीतैर्यथावदनुपश्यतु ॥५२॥

इत्येवमुक्त्वा परिशुष्कवक्त्रः
शराभिघातव्यथितान्तरात्मा ।
समीक्ष्य रामं रविसंनिकाशं
बभूव तूष्णीं स तदा विचेताः ॥५३॥

इत्यार्षे रामायणे किष्किन्धाकाण्डे बालिवाक्यं
नाम षोडशः सर्गः ॥

## 14+16 = XVII.

14. 1ab इत्युक्तः प्रश्रितं वाक्यं रामो धर्मार्थसंहितं ।
1cd परुषं बालिना तत्र पतितेन धरातले ॥ १ ॥
2ab तं निष्प्रभमिवादित्यं मुक्ततोयमिवाम्बुदं ।
2cd उक्तवाक्यं हरिश्रेष्ठमुपशान्तमिवानलं ॥ २ ॥
3ab धर्मार्थगुणसंयुक्तं शरीराहितमुत्तमं ।
3cd अधिक्षिप्तस्तदा रामस्तथा वचनमब्रवीत् ॥ ३ ॥
4ab धर्ममर्थं च कामं च समयं चापि लौकिकं ।
4cd अविज्ञाय कथं बालिन् मां धर्षयितुमर्हसि ॥ ४ ॥
6ab अपृष्ट्वा बुद्धिसंपन्नान् वृद्धान् वानर चापलात् ।
6cd यत्किञ्चन प्रलापी त्वं वाक्शरैरुपकृन्तसि ॥ ५ ॥
7ab सूक्ष्मः परमदुर्बोधः सतां धर्मः प्लवङ्गम ।
7cd हृदिस्थः सर्वभूतानामात्मा वेद शुभाशुभे ॥ ६ ॥
8ab चपलैः सचिवैः सार्धं वानरैरकृतात्मभिः ।
8cd अन्धोऽन्धैरिव संयुक्तो विज्ञास्यसि कथं नयं ॥ ७ ॥
9ab अहं तु व्यर्थतामस्य वचनस्य ब्रवीमि ते ।
9cd नैव मां केवलं रोषात् त्वं धर्षयितुमर्हसि ॥ ८ ॥
16. 63ab इक्ष्वाकूणामियं भूमिः सशैलवनकानना ।
63cd मृगपक्षिमनुष्येषु निग्राह्या धर्मदूषकाः ॥ ९ ॥

16. 64ab तामिमां पालयत्यद्य भरतः पृथिवीपतिः ।
64cd धर्मकामार्थतत्त्वज्ञो निग्रहानुग्रहे रतः ॥१०॥
65ab नयज्ञो विनयज्ञश्च यस्मिन् सत्यं च संस्थितं ।
65cd विक्रमी देशकालज्ञो विजिगीषुर्जितेन्द्रियः ॥११॥
66ab यस्य धर्मकृतोद्देशाद्वयमन्ये च साधवः ।
66cd चरन्ति वसुधां कृत्स्नां धर्माधर्मानवेक्षकाः ॥१२॥
67ab अस्मिन् नृपतिशार्दूले सततं धर्मवत्सले ।
67cd पालयत्यखिलां भूमिं कस्य बुध्येत विग्रहः ॥१३॥
ते वयं शासनात् तस्य चरन्तः पृथिवीमिमां ।
धर्मातिक्रमिणां धर्म्यं कुर्महे दण्डधारणं ॥१४॥
70ab स त्वं विक्लिष्टधर्मा च पापकर्मा विगर्हितः ।
कामतन्त्रप्रधानश्च प्राकृतो वानरो यथा ॥१५॥
10ab वागुराभिश्च पाशैश्च कूटैश्च विविधैर्नराः ।
10cd प्रतिच्छन्नाश्च दृश्याश्च निघ्नन्ति स्म बहून् मृगान् ॥१६॥
प्रधावितानविश्वस्तान् विश्वस्तानप्यविद्रुतान् ।
प्रसुप्तानप्रसुप्तांश्च घ्नन्ति मांसार्थिनो मृगान् ॥१७॥
14. 11cd यान्ति राजर्षयश्चात्र मृगयां धर्मकोविदाः ।
लिप्यन्ते न च दोषेण निघ्नन्तोऽपि मृगान् बहून् ॥१८॥
12ab तस्मात् त्वं निहतो युद्धे मया बाणेन वानर ।
12cd अयुध्यन् प्रतियुध्यन् वा सौम्य शाखामृगो ह्यसि ॥१९॥

पूर्वेण मम मान्धात्रा संप्राप्तं व्यसनं महत् ।
श्रवणेन कृते पापे यथा पापं कृतं त्वया ॥ २० ॥
अन्यैरपि कृते पापे प्रमत्तैर्वसुधाधिपाः ।
प्रायश्चित्तानि कुर्वन्ति यथोद्दिष्टानि वानर ॥ २१ ॥
तेन तेषां न तत् पापं कृतं सौम्येन कर्मणा ।
नात्यारोहति जातोर्मिर्महौघः स्वनवानपि ॥ २२ ॥
ततस्त्वं निहतः पाप शरेणानतपर्वणा ।
गमिष्यसि सतां लोकान् शस्त्रपूतो मनोरमान् ॥ २३ ॥
राजभिर्धृतदण्डा ये कृत्वा पापानि मानवाः ।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ २४ ॥
दुर्लभस्य हि धर्मस्य जीवितस्य सुखस्य च ।
राजानो वानरश्रेष्ठ प्रदातारो न संशयः ॥ २५ ॥
पञ्चरूपाणि राजानो धारयन्त्यमितौजसः ।
अग्नेरिन्द्रस्य सोमस्य यमस्य वरुणस्य च ॥ २६ ॥
तान् न हिंस्यान्न चाक्रोशेन्नासत्यं नाप्रियं वदेत् ।
देवानामनुरूपा हि चरन्त्येते महीतले ॥ २७ ॥
कारणं चापरं पश्य मया येनासि हिंसितः ।
भार्यायां वर्तसे भ्रातू रुमायां त्वमधार्मिकः ॥ २८ ॥
अस्य त्वं ध्रियमाणस्य सुग्रीवस्य यवीयसः ।
स्त्रीविमुक्तः कथं मूढ त्यक्त्वा धर्मं सनातनं ॥ २९ ॥

16.71ab ज्येष्ठो भ्राता पिता चैव यश्च विद्यां प्रयच्छति ।
71cd त्रयस्ते पितरो ज्ञेया धर्मं चेदनुरुध्यते ॥ ३० ॥
72ab यवीयान् सोदरः पुत्रः शिष्यश्च गुणवानपि ।
72cd पुत्रवत् तेऽपि संचिन्त्या धर्मश्चेदस्ति कारणं ॥ ३१ ॥
73ab तद्यतीतस्य ते धर्मात् कपिवृत्तस्य वानर ।
73cd भ्रातुर्भार्यापहर्तुस्ते दण्डोऽयं विनिपातितः ॥ ३२ ॥
74ab न हि धर्मविरुद्धस्य लोभवृत्तस्य पापिनः ।
74cd दण्डादन्यं न पश्यामि निग्रहं हरियूथप ॥ ३३ ॥
औरसस्य च पुत्रस्य पत्न्याश्चैवानुजस्य च ।
75ab स्वैरवृत्तस्य कर्तव्यं राजभिर्दण्डधारणं ॥ ३४ ॥
76ab भरतश्च महीपालो वयं चादेशकारिणः ।
76cd त्वं च धर्मव्यतिक्रान्तः कथं शक्यमुपेक्षितुं ॥ ३५ ॥
77ab गुरुवृत्तश्च विक्रान्तः प्रजा धर्मेण पालयन् ।
77cd भरतः कामवृत्तानां निग्रहे पर्युपस्थितः ॥ ३६ ॥
78ab ते वयं भरतादेशं विधिं कृत्वा विशेषतः ।
78cd त्वद्विधान् भिन्नमर्यादान् नियन्तुं सततोद्यताः ॥ ३७ ॥
79ab सुग्रीवश्चैव रक्ष्योऽयं लक्ष्मणोऽयं यथा तथा ।
79cd दारराज्यहरोऽस्य त्वमतोऽसि निहतो मया ॥ ३८ ॥
80ab प्रतिज्ञातं मया तस्य तदा वानरसंनिधौ ।
राज्यं दाराश्च तच्छक्यं कथं कर्तुं मयान्यथा ॥ ३९ ॥

प्रतिज्ञा च कथं मिथ्या कर्तव्या मद्विधेन हि ।
न मे मिथ्या भवेद्वाक्यमतोऽसि विनिपातितः ॥४०॥
तदेतैः कारणैर्धर्म्यैर्ह्यासि निहतो मया ।
न मां धर्ममविज्ञाय त्वं गर्हयितुमर्हसि ॥४१॥
अविज्ञाय परं धर्मं केवलं मौर्ख्यमास्थितः ।
नान्तकाले हि परुषं वक्तुमेवं त्वमर्हसि ॥४२॥
सर्वथा धर्म्य एवैष कृतस्ते निग्रहो मया ।
भ्रातृदाराभिमर्दी च मया तेनासि हिंसितः ॥४३॥
अलं ते परितप्तस्य पूतोऽसि निहतो मया ।
स्वर्गं प्राप्नुहि दुष्प्राप्यं कार्यार्थं निहतो ह्यसि ॥४४॥
यदिवा लोभमास्थाय मया त्वं निहतो वृथा ।
तत् क्षम्यतां हरिश्रेष्ठ मान्यो ह्येवं गतोऽसि मे ॥४५॥
इति रामवचः श्रुत्वा बाली धर्मार्थसंहितं ।
समाहितमनोबुद्धिरिदं वचनमब्रवीत् ॥४६॥
यदात्थ रघुशार्दूल तथेदं नात्र संशयः ।
प्रतिकर्तुं प्रकृष्टस्य नावकृष्टेन युज्यते ॥४७॥
यच्चाप्युक्तं मया पूर्वं संरम्भाद्वाक्यमप्रियं ।
क्षन्तुमर्हसि मे दोषमेतं रिपुनिसूदन ॥४८॥
त्वं हि दृष्टार्थतत्त्वज्ञः प्रजानां च हिते रतः ।
कार्यकारणयुक्ता ते प्रसन्ना बुद्धिरुत्तमा ॥४९॥

स त्वं धर्माद्यपगतं कामवृत्तं वनौकसं ।
धर्मसंयुक्तया बुद्ध्या स्वधर्मं प्रतिपादय ॥ ५० ॥
सुग्रीवे चाङ्गदे चैव विधत्स्व यदनन्तरं ।
त्वं हि शास्ता च गोप्ता च भूतानां रघुनन्दन ॥ ५१ ॥
या ते नरपते वृत्तिर्भरते लक्ष्मणे तथा ।
सुग्रीवाङ्गदयोश्चापि तां त्वं वर्तितुमर्हसि ॥ ५२ ॥
मद्दोषकृतदोषां च यथा तारां तपस्विनीं ।
नावमन्येत सुग्रीवस्तथा त्वं कर्तुमर्हसि ॥ ५३ ॥
त्वया ह्यनुगृहीतेन शक्यं राज्यं प्रशासितुं ।
त्वद्वशे वर्तमानेन तव चित्तानुवर्तिना ॥ ५४ ॥
इति बालिवचः श्रुत्वा रामो राजीवलोचनः ।
आश्वासयन्निदं वाक्यमुवाच मधुराक्षरं ॥ ५५ ॥
न शेषं भवता चिन्त्यं नात्मनोऽपि सुहृज्जनः ।
धर्मतः शेषकरणे प्रतीक्षिष्यामहे वयं ॥ ५६ ॥
दण्ड्ये निपातयन् दण्डमदण्ड्यं परिपालयन् ।
समः शत्रौ च मित्रे च यो राजा स न सीदति ॥ ५७ ॥
स भवान् दण्डसंयोगेनानेन हृतकिल्विषः ।
गतः शुभां गतिं पुण्यां न शोचितुमतोऽर्हसि ॥ ५८ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे बालिबधे
रामवाक्यं नाम सप्तदशः सर्गः ॥

## 15 = XVIII.

1ab स वानरो महातेजाः शयानः शरविक्षतः ।
1cd प्रत्युक्तो हेतुमद्वाक्यं नोत्तरं प्रत्यपद्यत ॥ १ ॥
2ab अश्मभिः परिभिन्नाङ्गः पादपैराहतो भृशं ।
2cd रामवाणेन चाक्रान्तो मुमोह भयपीडितः ॥ २ ॥
3ab तं भार्या राममुक्तेन शरेण भृशताडितं ।
3cd तारा शुश्राव पतितं भर्तारं वालिनं तदा ॥ ३ ॥
4ab सा सपुत्रा वधं श्रुत्वा तारा भर्तुः सुदारुणं ।
4cd निष्पपात द्रुतं तस्माद्रुदती गिरिगह्वरात् ॥ ४ ॥
5ab सा ददर्श परित्रस्तान् हरीनापततो द्रुतं ।
5cd यूथादिव परिभ्रष्टान् मृगान् निहतयूथपान् ॥ ५ ॥
7ab तानुवाच समासाद्य दुःखितान् भृशदुःखिता ।
7cd रामवित्रासितान् भीतान् भृशविद्धानिवेषुभिः ॥ ६ ॥
वानरा वानरेन्द्रस्य यस्य यूयं पुरःसराः ।
तं विहाय परित्रस्ताः कस्माद्द्रवथ संघशः ॥ ७ ॥
9ab कच्चिद्भर्ता च रौद्रेण राज्यलुब्धेन घातितः ।
9cd रामेण विकृताकारैः शरैराशीविषोपमैः ॥ ८ ॥
10ab कपीन्द्रपत्न्यास्तच्छ्रुत्वा वानराः करुणं वचः ।
10cd प्राप्तकालं वचस्तस्या ऊचुः संभ्रान्तमानसाः ॥ ९ ॥

11ab जीवपुत्रि निवर्तस्व रक्ष पुत्रं त्वमङ्गदं ।
11cd अन्तको रामरूपेण हत्वा हरति बालिनं ॥ १० ॥
क्षिपन् वृक्षान् महाकायान् विसृजंश्च महाशिलाः ।
वह्निवज्रोपमैर्बाणै रामेण विनिपातितः ॥ ११ ॥
भीतभीतमिदं सर्वं विद्रुतं वानरं बलं ।
तस्मिन् प्लवगशार्दूले हते समिति शोभने ॥ १२ ॥
12ab रक्ष्यतां नगरी शूरैरङ्गदश्चाभिषिच्यतां ।
12cd पदस्थं बालिनः पुत्रं भजिष्यन्तेऽथ वानराः ॥ १३ ॥
एतत् ते रोचतां क्षिप्रमङ्गदस्याभिषेचनं ।
अनेन विधिना श्रेयो भविष्यति तवाङ्गने ॥ १४ ॥
14cd विशन्तु वनदुर्गाणि क्षिप्रमन्यानि वानराः ।
15ab अदाराश्च सदाराश्च बहवो निहतेश्वराः ॥ १५ ॥
सर्वेषां हि प्रकृत्यैव स्वेभ्यो नः सुमहद्भयं ।
भीतानां भृशमार्तानामन्योन्यं हि वनौकसां ॥ १६ ॥
16ab अल्पान्तरगतानां तु श्रुत्वा तेषां वचोऽङ्गना ।
16cd आत्मनः प्रतिरूपं सा बभाषे चारुभाषिणी ॥ १७ ॥
17ab पुत्रेण मम किं कार्यं किं राज्येन किमात्मना ।
17cd कपिसिंहे महाभागे विनष्टे मम भर्तरि ॥ १८ ॥
18ab पादमूलं गमिष्यामि तस्यैव विदितात्मनः ।
19ab एवमुक्त्वा प्रदुद्राव रुदती शोकलालसा ॥ १९ ॥

19cd शिरश्चोरश्च पाणिभ्यां निघ्नन्ती साथ निर्दयं ।
20ab आधावन्ती ददर्शाथ पतिं निपतितं भुवि ॥ २० ॥
20cd भर्तारं वानरेन्द्राणां संयुगेष्वनिवर्तिनां ।
21ab क्षेप्तारं गिरिशृङ्गाणां वज्राणामिव वासवं ॥ २१ ॥
22ab संवर्त्तनिनदं घोरं शूरं शूरेण संगतं ।
22cd शार्दूलेनामिषस्यार्थे मृगराजं यथा हतं ॥ २२ ॥
23ab अर्चितं सर्वलोकानां सस्कन्धविटपं द्रुमं ।
23cd नागहेतोः सुपर्णेन चैत्यमुन्मूलितं यथा ॥ २३ ॥
24ab अवष्टभ्य च तिष्ठन्तं ददर्श धनुरुत्तमं ।
24cd रामं रामानुजं चैव भर्तुश्चैवानुजं तथा ॥ २४ ॥
25ab सा तदा तु समालक्ष्य भर्तारं निहतं रणे ।
25cd आसाद्य व्यथिता भूमौ सपुत्रा निषसाद ह ॥ २५ ॥
26ab प्रसुप्तमिव चालिङ्ग्य ह्यार्यपुत्रेति भाषिणी ।
ननाद संपरिष्वज्य पतितं धरणीतले ॥ २६ ॥
हा हतास्मि महाबाहो त्वयाद्य विधवा कृता ।
अशृण्वता मम वचस्त्वयेदमनुभूयते ॥ २७ ॥
न कालस्य प्रियः कश्चिन्न द्वेष्योऽस्ति कपीश्वर ।
कालः कालयते सर्वान् सर्वः कालेन बध्यते ॥ २८ ॥
कालः सर्वस्य मध्यस्थः प्रियस्यैवाप्रियस्य च ।
कालेनासि हतो नूनं मम वैधव्यकारिणा ॥ २९ ॥

उक्तोऽसि कपिशार्दूल मया सुबहुशस्तदा ।
उत्तिष्ठ वानरश्रेष्ठ किं शेषे पतितः क्षितौ ॥३०॥
न मां पश्यसि दुःखार्तां सपुत्रां पतितां भुवि ।
समाश्वासय तावन्मां यथापूर्वमरिंदम ॥३१॥
अनाथां परितप्यन्तीं सपुत्रां निहते त्वयि ।
तामवेक्ष्याथ सौमित्रिः क्रोशन्तीं कुररीमिव ।
अङ्गदं सचिवांश्चार्तान् मुमोचाश्रूणि वीर्यवान् ॥३२॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे तारानिष्पतनं
नाम अष्टादशः सर्गः ॥

15+16 = XIX.

रामचापविमुक्तेन शरेण हृदि विक्षतं ।
भर्तारमथ सालोक्य तारा निपतितं भुवि ॥ १ ॥
शरीरे न दयां काश्चिदात्मनः समवैक्षत ।
विनिष्पिपेष चात्मानं प्रगृह्य सुभुजा भुजौ ॥ २ ॥
हा हतास्मीति विक्रुश्य पपात धरणीतले ।
व्यावर्तत च सा भूमौ लुब्धेनेव हता मृगी ॥ ३ ॥
परिग्रहश्च यस्तस्य बालिनोऽभ्यन्तरस्त्रियः ।
कुरर्य इव वानर्यो विनिष्पेतुर्गुहामुखात् ॥ ४ ॥
विक्रोशन्त्यो महानादान् यावांस्तस्य परिग्रहः ।
ताश्चाप्यतीव शोकार्तास्तारां शोकाभिसंवृतां ॥ ५ ॥
रुदतीमार्तरूपां तां दुःखोपहतचेतनां ।
आर्तामाश्वासयन्ति स्म वानर्यः शोकलालसाः ॥ ६ ॥
सर्वाः कृच्छ्रगताः स्मार्ताः सर्वा एव स्म पीडिताः ।
सर्वासां व्यसनं कृच्छ्रमिदमस्माकमागतं ॥ ७ ॥
रामधनुर्विमुक्तेन महावेगेन पत्रिणा ।
हताः स्मैकेषुणा सर्वाः शाखामृगपतौ हते ॥ ८ ॥
कृता स्म विधवाः सर्वाः सर्वाश्च निहताः समं ।
सर्वासां नः सुखं जीर्णं हतेऽस्मिन् हरिपुङ्गवे ॥ ९ ॥

36cd अथ तारा परिष्वज्य पतिं शक्रपराक्रमं ।
37ab उवाच रुदती दीना साश्रुपाताविलेक्षणा ॥ १० ॥
37cd कृता ताराहमुन्मूला तव मूलविनाशनात् ।
38ab दुःखशोकवती लोके वर्तयिष्यामि जीवितं ॥ ११ ॥
38cd स्मरन्त्या हसितं चारु संलापं च शुचिस्मितं ।
39ab धक्ष्यते हृदयं नूनं ममायं शोकपावकः ॥ १२ ॥
39cd यानि चापि त्वया सार्धं वनेषु च सुगन्धिषु ।
40ab विहृतानि सुखं काले तेषामुपरमः कृतः ॥ १३ ॥
40cd निरानन्दा निराशाहं निमग्ना शोकसागरे ।
41ab त्वयि पञ्चत्वमापन्ने महावानरयूथपे ॥ १४ ॥
वज्रसारमिदं नूनं हृदयं मे कपीश्वर ।
यत् त्वां दृष्ट्वा हतं भूमौ स्फुटितं न सहस्रधा ॥ १५ ॥
42ab सुग्रीवस्य प्रिया भार्या हृता स च विवासितः ।
42cd अद्य तस्य फलं प्राप्तं त्वया वानरपुङ्गव ॥ १६ ॥
43ab निःश्रेयसपरा चाहं त्वया वीर विगर्हिता ।
43cd भाषमाणा हितं वाक्यं वानरेन्द्रहितैषिणी ॥ १७ ॥
44ab कालो निःसंशयमयं जीवितान्तकरस्तव ।
44cd बलाद्येनाभिपन्नोऽसि सुग्रीवस्यावशो वशं ॥ १८ ॥
त्वया विहीना दुःखार्ता निरपेक्षास्मि जीविते ।
भवता विप्रयुक्ताया दुर्लभं मम जीवनं ॥ १९ ॥

16. 4ab खादन्तु मम मांसानि गृध्रवायसजम्बुकाः ।
4cd ये चान्ये पिशिताहारा मृगपक्षिगणा भुवि ॥२०॥
5ab निरनुक्रोशयुक्तेति कामं वक्ष्यति मां जनः ।
5cd त्यजन्तीं दयितं पुत्रमङ्गदं प्रियदर्शनं ॥२१॥
6ab न पुत्रो न पिता तत्र भवेद्यत्र स्त्रियाः पतिः ।
6cd न चैतदवगच्छन्ति प्रायशः प्राकृताः स्त्रियः ॥२२॥
7ab न ह्याज्ञापयितुं शक्यः सुतोऽस्य विद्यते त्वयि ।
7cd अप्रियो वा प्रियो वापि यथा भर्ता सदा स्त्रियाः ॥२३॥
8ab हितार्थं विप्रियं ह्युक्तो मातुः कुप्यति वै सुतः ।
8cd क्रुद्धया तु स्त्रिया ह्युक्तो भर्ता नैव हि कुप्यति ॥२४॥
9ab अनुवर्तितुमिच्छन्ति मातरं सततं सुताः ।
मात्रर्थे न तथा पुत्रो दारार्थे वै यथा पतिः ॥२५॥
9cd पुत्रहस्तात् तु का नारी सत्त्वयुक्ता मनस्विनी ।
9ef भोक्तुमुत्सहते पिण्डं वैधव्यमलदूषिता ॥२६॥
10ab जीवितं हि विहास्यामि विमुक्तसुतसंश्रया ।
10cd श्रेयान् प्राणपरित्यागस्तेन चैव गतिः सह ॥२७॥
11ab एष मे रोचते मार्गस्त्यक्त्वा जीवितमप्रियं ।
11cd भर्तारमनुगच्छेयं प्रयान्तं स्वर्गमक्षयं ॥२८॥
12ab एवं तु रुदती तारा बाष्पगद्गदभाषिणी ।
12cd शरीराद्भूषणं सर्वमात्मनः सावतारयत् ॥२९॥

13ab सा विभूषणहीनाङ्गी चन्द्रहीनेव शर्वरी ।
13cd अश्रुसंरुद्धनयना सोपरागेव रोहिणी ॥ ३० ॥
14ab क्रोशन्ती हार्यपुत्रेति भर्तृवैधव्यकर्षिता ।
14cd पपात सहसा भूमौ दिव्योल्केव नभश्च्युता ॥ ३१ ॥
15ab सा विवर्णमुखी दीना वेपमाना महीतले ।
15cd पांशुदूषितसर्वाङ्गी रुदती पर्यचेष्टत ॥ ३२ ॥
16ab प्रेरयन्ती ततश्चक्षुः सुग्रीवं सा ददर्श च ।
16cd कनिष्ठं भ्रातरं भर्तुस्तारा दीनमवस्थितं ॥ ३३ ॥
17ab सा समाभाष्य सक्रोधाद्दुःखादागतसंभ्रमा ।
17cd उवाच वाक्यं वाक्यज्ञा संरब्धा मधुराक्षरं ॥ ३४ ॥
18ab साधु मामपि सुग्रीव परित्याजय जीवितं ।
18cd धिङ्मे सत्पतिहीनायाः कृपणं जीवितं स्त्रियाः ॥ ३५ ॥
19ab हतेवाहं त्वया पूर्वं निघ्नता दयितं मम ।
19cd परं हि मरणं स्त्रीणां लोके पतिबधेन तु ॥ ३६ ॥
20ab एवमुक्तस्तु सुग्रीवो वचनं तारया तदा ।
21ab वसुधासक्तनयनो नोत्तरं प्रत्यपद्यत ॥ ३७ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे ताराविलापो नाम ऊनविंशतितमः सर्गः ॥

16 = XX.

22ab तां तथा परितप्यन्तीं तारां शोकसमाकुलां ।
22cd वानर्यो विविधैर्वाक्यैर्हेतुमद्भिर्न्यदर्शयन् ॥ १ ॥
23ab तासां वचनमाज्ञाय मर्तव्ये कृतनिश्चया ।
23cd भूयो रोषसमाक्रान्ता विलप्तुमुपचक्रमे ॥ २ ॥
25ab अङ्गदप्रतिरूपाणां पुत्राणां शतमेकतः ।
25cd मृतस्यापि च मे भर्तुः सङ्ग एव विशिष्यते ॥ ३ ॥
मितं ददाति हि पिता मितं भ्राता मितं सुतः ।
अमितस्य हि दातारं भर्तारं का न पूजयेत् ॥ ४ ॥
पार्थिवेन प्रियेणाहं मुहूर्तमपि वर्जिता ।
26ab कथं प्राणैः परित्यक्तं न त्यक्ष्यामि कलेवरं ॥ ५ ॥
26cd अवश्यं मरणं चात्र न जाने कालमात्मनः ।
भर्तृयुक्तं हि विधिवच् श्लाघनीयतरं मम ॥ ६ ॥
27ab राजर्षिकुलजातस्य वने वन्येन जीवतः ।
27cd अनुरूपो न ते राम निर्वैरं बालिनो बधः ॥ ७ ॥
28ab प्रहरन्ति महात्मानो न नारीषु न वानरे ।
28cd बालिनो मन्दभाग्यत्वात् सर्वं रामेण विस्मृतं ॥ ८ ॥
29ab नात्यर्थं परितप्ये ऽहं हतो यदि भवेत् समं ।
29cd इमं व्याजहतं दृष्ट्वा मनो मे परितप्यते ॥ ९ ॥

30ab अस्थाने बालिनं हत्वा राम किं त्वं न तप्यसे ।
31ab पलाशप्रेप्सुना भग्नं त्वयाच्युतवनं महत् ॥ १० ॥
32ab यदि वानरसाध्यत्वं मन्यसे कार्यमात्मनः ।
32cd ज्ञातीनां प्रवरः कस्मान्न बाली विनियोजितः ॥ ११ ॥
36ab सेन्द्रैरपि सुरैः सीता यदि वा सहितैर्हृता ।
36cd गतः सहायतां बाली न चिरादानयेत् स तां ॥ १२ ॥
37ab बाहुभ्यां येन सुग्रीवः सुसुखं नैकशो जितः ।
37cd सोऽद्य त्वया रणे राम जीवितं त्याजितः कथं ॥ १३ ॥
38ab त्वां तु शप्तुं समर्थास्मि पतिव्रतसमाश्रयात् ।
38cd वैदेह्यास्त्वभिभूताया न तावच्छापमर्हसि ॥ १४ ॥
39ab अचिरेण तु कालेन त्वया बाणैरुपार्जिता ।
39cd न सीता मम शापेन चिरं त्वयि भविष्यति ॥ १५ ॥
40ab आत्मनः शौचमाधार्य पतिव्रतगुणा सती ।
40cd याच्यमाना त्वया सीता पुनर्यास्यति भूतलं ॥ १६ ॥
41ab एवमुक्त्वा ततस्तारा तदा रामाश्रितं वचः ।
41cd संनिकर्षे स्थितं पुत्रमिदं वचनमब्रवीत् ॥ १७ ॥
42ab मित्राण्येव हि रक्षन्ति मित्रवान् नावसीदति ।
42cd मित्रादुत्पादितं वैरमपि मूलं निकृन्तति ॥ १८ ॥
43ab अश्रुधाराविलमुखी साथ तारा तपस्विनी ।
43cd क्रोशन्ती न्यपतद्भूमौ पतिशोकेन विह्वला ॥ १९ ॥

ततो मोहगतस्याङ्के शीर्षमारोप्य बालिनः ।
मुमोच सहसा बाष्पं शोकेन महतावृता ॥ २० ॥
तस्या रुदितशब्देन बाली मोहं गतोऽपि सन् ।
शनैरुन्मीलयामास नयने हरिपिङ्गले ॥ २१ ॥

इत्यार्षे रामायणे किष्किन्धाकाण्डे तारानुशोचनं
नाम विंशतितमः सर्गः ॥

16 = XXI.

85cd वीक्षमाणास्तु मन्दाक्षः सर्वतो मन्दमुच्छ्वसन् ।
86ab बाली सुग्रीवमभितो ददर्शानुजमात्मनः ॥ १ ॥
86cd तं प्राप्तविजयं बाली सुग्रीवं प्लवगेश्वरं ।
87ab आभाष्य व्यक्तया वाचा सस्नेहमिदमब्रवीत् ॥ २ ॥
87cd न मां दोषेण सुग्रीव गन्तुमर्हस्यकिल्विषं ।
88ab भाविना बुद्धिमोहेन कृष्यमाणं प्लवङ्गम ॥ ३ ॥
88cd युगपद्विहितं नूनं न मन्ये सुखमावयोः ।
89ab सौन्दर्यं भ्रातृयुक्तं हि विहितं तु ततोऽन्यथा ॥ ४ ॥
89cd प्रतिपद्यस्व चाद्यैव राज्यमेषां वनौकसां ।
90ab मामप्यद्यैव गच्छन्तं विद्धि वैवस्वतक्षयं ॥ ५ ॥
92cd शरो हि मे शरीरस्थो बङ्क मर्म निकृन्तति ।
93ab सुतीक्ष्णः सूक्ष्मकर्मा वै जीवितं भ्रंशयत्यतः ॥ ६ ॥
90cd जीवितं च हि राज्यं च श्रियं च विपुलामिमां ।
91ab विजहाम्येष वै तूर्णं महच्चाभ्युद्गतं यशः ॥ ७ ॥
91cd अस्यामहमवस्थायां वीर वक्ष्यामि यद्वचः ।
यद्यप्यसुकरं तन्मे कर्तुमेवं त्वमर्हसि ॥ ८ ॥
93ab सुखार्हं सुखसंवृद्धं बालमेतमबालिशं ।
94cd वाष्पपूर्णमुखं पश्य भूमौ पतितमङ्गदं ॥ ९ ॥

95ab मम प्राणैः प्रियतरं पुत्रं पुत्रमिवौरसं ।
95cd मया हीनमनाथं हि सर्वतः परिपालय ॥१०॥
96ab त्वमस्याप्य पिता तात परित्राता च धर्मतः ।
96cd भयेष्वभयदश्चैव यथाहं प्लवगेश्वर ॥११॥
97ab एष तारात्मजः श्रीमानङ्गदः कनकाङ्गदः ।
98cd राक्षसानां वधे तेषामग्रयोधी भविष्यति ॥१२॥
99ab अनुरूपाणि कर्माणि विक्रम्य बलवान् रणे ।
99cd करिष्यति महाबाहुस्तेजस्वी तरुणोऽङ्गदः ॥१३॥
100ab सुषेणदुहिता चेयमर्थसूक्ष्मविनिश्चये ।
100cd औत्पातिके च विविधे सर्वत्र परिनिष्ठिता ॥१४॥
101ab यदेषा साध्विति ब्रूयात् तत् कर्तव्यमसंशयं ।
101cd न हि तारामतं किञ्चिदन्यथा परिवर्तते ॥१५॥
102ab राघवस्य च ते कार्यं कर्तव्यं वाक्प्रचोदनात् ।
102cd स्यादधर्मो ह्यकरणे त्वां च हिंस्याद्विमानितः ॥१६॥
103ab इमां च मालामाधत्स्व दिव्यां सुग्रीव काञ्चनीं ।
103cd उदारा श्रीः स्थिता ह्यस्यां त्वामेष्यति मृते मयि ॥१७॥
104ab इत्येवमुक्त्वा सुग्रीवं रामं प्राञ्जलिरब्रवीत् ।
104cd प्रणम्य शिरसा बाली पुत्रं प्रति महायशाः ॥१८॥
105ab आदितः कृशवृत्तिर्यः कृपणो न स राघव ।
105cd महात्मा व्यसनं प्राप्तो दीनः कृपण उच्यते ॥१९॥

106ab कुलेऽप्यकृपणो राम संभूतः सर्वकामदे ।
106cd अङ्गदः कृपणो राम मृते मयि भविष्यति ॥ २० ॥
107ab एतदेवानुशोचामि यः प्रियं प्रियदर्शनं ।
107cd न द्रक्ष्याम्यङ्गदं पुत्रं पापकर्मा दिवं यथा ॥ २१ ॥
108ab दर्शनेनाङ्गदस्याहं पुत्रस्य नृवरात्मज ।
108cd अवितृप्तो मरिष्यामि त्वया वीर रणे हतः ॥ २२ ॥
109ab त्वं गतिः सर्वभूतानां शरणं च परंतप ।
109cd प्रतिगृह्णीष्व मे पुत्रमङ्गदं कनकाङ्गदं ॥ २३ ॥
110ab छिन्नमर्मा परामार्ति प्राप्तोऽस्मि शरपीडितः ।
110cd जीवितं त्यक्तुमिच्छामि प्राणाः संवर्यन्ति मां ॥ २४ ॥
111ab इयमैन्द्री शुभा माला काञ्चनी शतपुष्करा ।
111cd दत्ता मम महेन्द्रेण प्रीतेन मनुजर्षभ ॥ २५ ॥
112ab इमामैन्द्रीं शुभां मालां लक्ष्मणः प्रतिपद्यतां ।
112cd स्वयं वा त्वं महाबाहो सुग्रीवाय प्रयच्छ वा ॥ २६ ॥
113ab तमब्रवीत् ततो रामो दुःखार्तं बालिनं प्रभुः ।
113cd गच्छ लोकान् महेन्द्रस्य शस्त्रपूतो मनोरमान् ॥ २७ ॥
114ab इत्येवमुक्त्वा रामस्तु ततः सुग्रीवमब्रवीत् ।
114cd इमां मालां त्वमाधत्स्व दिव्यां सुग्रीव काञ्चनीं ॥ २८ ॥
115ab उदारा श्रीः स्थिता ह्यस्यां सा हि त्वां समुपैष्यति ।
इत्येवमुक्तः सुग्रीवो राघवेण महात्मना ॥ २९ ॥

115cd मेने प्रहर्षं शोकं च मालाख्या बालिनाशनं ।
116ab बालिना त्वभ्यनुज्ञातो राघवेण च धीमता ॥ ३० ॥
बहुमेने स तामाज्ञां सुग्रीवो हरिपुङ्गवः ।
116cd जग्राह चाभ्यनुज्ञातो मालामिन्द्रीं कृताञ्जलिः ॥ ३१ ॥
117ab तां मालां काञ्चनीं दत्वा मूर्ध्न्युपाघ्राय चाङ्गदं ।
117cd संसिद्धः प्रेतभावाय स्नेहादङ्गदमब्रवीत् ॥ ३२ ॥
118ab देशकालौ भजस्वाद्य क्षममाणः प्रियाप्रिये ।
118cd सुखदुःखसहः पुत्र सुग्रीववशगो भव ॥ ३३ ॥
119ab एष चैव मया बाल्ये लालितः सततं यथा ।
119cd स तथा मन्यमानस्त्वां सुग्रीवः साधु मंस्यते ॥ ३४ ॥
120ab मास्य शत्रुभिरेको भूस्तदीयादेशमाश्रय ।
120cd सुग्रीवस्य महाबाहोः कृतज्ञो भव पुत्रक ॥ ३५ ॥
121ab न चातिप्रणयः कार्यः कर्तव्यः प्रणयश्च ते ।
121cd एकान्ते हि महान् दोषस्तस्मादुभयभाग्भव ॥ ३६ ॥
122ab इति जल्पन् विवृत्ताक्षः शरसंपीडितो भृशं ।
122cd विशीर्णदशनैर्भीमैर्बभूवोत्क्रान्तजीवितः ॥ ३७ ॥
124ab ततस्तु तारा व्यसनार्णवप्लुता निरीक्षमाणा वदनं प्रियस्य वै ।
124cd विवेश भूमौ परिरभ्य बालिनं महाद्रुमं छिन्नमिवाश्रिता लता ।३८।

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे बालिप्राणोद्गमो
नाम एकविंशतितमः सर्गः ॥

17 = XXII.

1 ab ततः समुपजिघ्रन्ती कपिराजमधोमुखी ।
1 cd पतिलोकच्युता तारा पतिं वचनमब्रवीत् ॥ १ ॥
2 ab शेषे त्वं व्यसनेऽदुःखमकृत्वा वचनं मम ।
2 cd प्रियान् हित्वा ततः प्राणानद्वितीयस्त्रिभिर्हतः ॥ २ ॥
3 ab मत्तः प्रियतरा नूनं वानरेन्द्र मही तव ।
3 cd शेषे ह्येनां परिष्वज्य मां न च प्रतिभाषसे ॥ ३ ॥
4 ab श्रीमन् मन्नाथ विक्रान्त सर्वसाहसिकप्रिय ।
4 cd ऋक्षवानरमुख्यास्त्वां बहवः पर्युपासते ॥ ४ ॥
5 ab रणामर्षणविक्रान्त प्रदीप्त तपतां वर ।
5 cd किमेतदद्य ते वीर पुरोगान् नाभिनन्दसि ॥ ५ ॥
6 ab नन्दयन् सुहृदः सर्वान् सामदानपरिग्रहैः ।
6 cd यः पुरा बुध्यसे कान्त सोऽद्य किं त्वं न बुध्यसे ॥ ६ ॥
7 cd एषां विलपतां कृच्छ्रं क्रोशतश्चाङ्गदस्य च ।
8 ab ममापि विलपन्त्याश्च शयानः किं न बुध्यसे ॥ ७ ॥
8 cd पश्येममङ्गदं वीर तीव्रशोकमुपस्थितं ।
कृताञ्जलिमुपासीनं किमेतं नाभिभाषसे ॥ ८ ॥
9 ab इदं तत्क्रूर शयनं यत्र शेषे हतो युधि ।
9 cd समीपे मन्दभाग्यायाः कथितं यत् त्वया मम ॥ ९ ॥

10ab उत्तिष्ठ हरिशार्दूल त्यजैतच्छयनं क्षितौ ।
10cd वीरा नैवंविधा भूमौ शेरते कृतलक्षणाः ॥१०॥
11ab अतीव ननु ते कान्ता वसुधा वसुधाधिप ।
11cd गतायुरपि यां गात्रैर्मां विहाय निषेवसे ॥११॥
12ab विशुद्धसत्त्वविज्ञान प्रियकाम मम प्रिय ।
12cd मामनाथां विहायैको गतः खल्वसि मानद ॥१२॥
13ab न शूराय प्रदातव्या कन्या खलु विपश्चिता ।
13cd शूरभार्यां हि मां पश्य सद्यो वैधव्यमागतां ॥१३॥
14ab अवभग्नश्च मे मानो गतिर्भग्ना च शाश्वती ।
14cd आकाशान्ते निमग्नास्मि विवृते शोकसागरे ॥१४॥
15ab अश्मसारमयं नूनमिदं मे हृदयं दृढं ।
15cd भर्तारं निहतं दृष्ट्वा यन्नाद्य शतधा गतं ॥१५॥
16ab सुहृच्चैव च भर्ता च प्रकृत्या च मम प्रियः ।
16cd आहवे विपरिक्रान्तः शूरः पञ्चत्वमागतः ॥१६॥
17ab पतिहीना च या नारी कामं भवति पुत्रिणी ।
17cd धनधान्यौघयुक्तापि विधवेत्युच्यते बुधैः ॥१७॥
18ab स्वगात्रप्रभवे वीर शेषे रुधिरकर्दमे ।
18cd कृमिरागपरिस्तोमे यथैव शयने पुरा ॥१८॥
19ab प्रहारैर्विक्षतं गात्रं रामसायकपीडितं ।
19cd परिरब्धुं न शक्नोमि बाहुभ्यां ते हरीश्वर ॥१९॥

20ab कृतकार्योऽथ सुग्रीवो वैरेऽस्मिन् प्रतिपादिते ।
युष्माभिः कपिराजस्य प्राणा यत् सायकैर्हृताः ॥ २० ॥
21cd उद्धधार ततो नीलः शरं तस्य कलेवरात् ।
22ab घोरमाशीविषं दीप्तं पर्वतस्येव गह्वरात् ॥ २१ ॥
22cd तस्य निष्कृष्यमाणस्य सायकस्याभवद्युतिः ।
23cd वर्षवेगनिगूढायाः स्फुरन्त्या इव विद्युतः ॥ २२ ॥
24ab पेतुः क्षतजधाराश्च व्रणेभ्यस्तस्य सर्वशः ।
24cd ताम्रधातुविनिर्मुक्ता धारा इव धराधरात् ॥ २३ ॥
25ab अवकीर्णां प्रमार्जन्ती भर्तारं रणपांशुभिः ।
25cd अश्रुपातैर्नयनजैः सिषेच भृशदुःखिता ॥ २४ ॥
26ab विवर्तमाना तं दृष्ट्वा धरण्यां पतितं पतिं ।
26cd उवाच तारा पिङ्गाक्षं पुत्रमङ्गदमङ्गना ॥ २५ ॥
27ab अवस्थां पश्चिमां पश्य पितुः पुत्र सुदारुणां ।
27cd संप्रसक्तस्य वैरस्य कृतोऽन्तः पापकर्मणा ॥ २६ ॥
अप्रतीतोऽसि सततं नीयमानं यमक्षयं ।
28ab अभिवादय राजानं पितरं पुत्र मानिनं ॥ २७ ॥
28cd एवमुक्तः स च तया जग्राह चरणौ पितुः ।
29ab भुजाभ्यां पीनवृत्ताभ्यामङ्गदोऽहमिति ब्रुवन् ॥ २८ ॥
29cd तं दृष्ट्वा रुदती तारा बालिनं वाक्यमब्रवीत् ।
30ab अभिवादयमानं त्वमङ्गदं च यथा पुरा ॥ २९ ॥

30cd आयुष्मान् भव पुत्रेति किमर्थं नाभिभाषसे ।
31ab आर्यपुत्र सपुत्रा त्वामुपासे गतचेतनं ॥ ३० ॥
31cd सिंहेन निहतं गोष्ठे गौः सवत्सेव गोपतिं ।
32ab इष्ट्वा संग्रामयज्ञेन रामबाणमहाम्भसा ॥ ३१ ॥
32cd अस्मिन्नवभृथे स्नातः किं त्वं पत्न्या मया विना ।
33cd शातकुम्भमयीं मालां न ते पश्यामि मूर्धनि ॥ ३२ ॥
33ab या दत्ता देवराजेन स्वयमेवासुरे हते ।
34ab न त्वां श्रीर्विजहात्येव गतायुषमपि प्रभो ॥ ३३ ॥
34cd अर्कस्यावर्तमानस्य शैलराजमिव प्रभा ।
35ab किष्किन्धेव पुरी पूर्वं स्वर्गमार्गः प्रकाशते ।
विदितं ते परं स्थानं शूरमार्गप्रदर्शितं ॥ ३४ ॥

किमङ्गदं त्वं च सुदीर्घबाहुं
39ab विहाय यास्यस्यचिरेण वीर ।
न युक्तमेवंविधमुग्रवीर्य
39cd विहाय पुत्रं प्रियपुत्र गन्तुं ॥ ३५ ॥

किमप्रियं ते प्रियभार्य तावत्
40ab कृतं मया वासवपुत्र येन ।
सहायिनीमद्य विहाय वीर
40cd यमालयं गच्छसि दुर्निवृत्तं ॥ ३६ ॥

कथं हरीनृक्षगणान् समस्तान्

प्रियेषु पथ्येषु च वर्तमानान् ।
प्राणैः प्रकृष्टैरपि पालयित्वा
परित्यजन् यासि पितुः समीपे ॥ ३७ ॥
यदप्रियं किञ्चिदसंप्रधार्य
41ab कृतं मया वै तव दीर्घबाहो ।
क्षमस्व तन्मे हरियूथनाथ
41cd व्रजामि मूर्ध्ना तव वीर पादौ ॥ ३८ ॥
न मे वचस्तथ्यमिदं त्वया कृतं
38ab न चास्मि शक्ता विनिवारणे तव ।
हता सपुत्रास्मि हते रणे त्वयि
38cd त्वया सह श्रीश्च विनिर्गता मम ॥ ३९ ॥

इत्यार्षे रामायणे किष्किन्धाकाण्डे ताराक्रन्दनो
नाम द्वाविंशतितमः सर्गः ॥

## XXIII.

तामार्तां पतितां दृष्ट्वा च्युतामिव विहायसः ।
तारामाश्वासयामास हनूमान् कपिसत्तमः ॥ १ ॥
यस्य स्म हरिमुख्यानामयुतान्यर्बुदानि च ।
तत्पराणि दधुश्चाज्ञां सोऽयं भूमौ विचेष्टते ॥ २ ॥
तदस्मिंस्त्यागधर्मार्थसामदानक्षमापरे ।
गते धर्मार्जितांल्लोकान् नैवं शोचितुमर्हसि ॥ ३ ॥
त्वया चापि वयं चिन्त्याः सपितृव्यस्तथाङ्गदः
हरयश्च महाभागे गोलाङ्गूलर्क्षसंहताः ॥ ४ ॥
तमिमं शोकसंतापं शनैर्मोक्ष्यसि मानिनि ।
प्रशासति हरीन् सर्वानङ्गदे त्वत्परिग्रहात् ॥ ५ ॥
आनन्तर्येण यद्दृष्टं कर्म यच्चापि साम्प्रतं ।
राज्ञस्तन्नियतं कर्तुमेष लोकस्य निश्चयः ॥ ६ ॥
सत्कृत्य बालिनं वीरमङ्गदः स्थाप्यतामिति ।
सिंहासनगतं पुत्रं पश्यन्ती शान्तिमेष्यसि ॥ ७ ॥
सा तस्य वचनं श्रुत्वा भर्तृव्यसनकर्षिता ।
अब्रवीदुत्तरं तारा हनूमन्तमवस्थितं ॥ ८ ॥
किं कार्यं पतिहीनायाः पुत्राणामयुतैरपि ।
निहतस्यास्य वीरस्य गात्रच्छाया विशिष्यते ॥ ९ ॥

न चाहं हरिराज्यस्य प्रभवाम्यङ्गदस्य च ।
पितृव्यस्तस्य वीरस्य सर्वकार्येष्वनन्तरं ॥ १० ॥
न ह्येषा बुद्धिरास्थेया हनूमन्नङ्गदं प्रति ।
पितेव बन्धुः पुत्रस्य न माता हरिपुङ्गव ॥ ११ ॥
न हि मम हरिराजसंश्रयात्
क्षमतरमस्ति परत्र शोभनं ।
अभिमुखहतवीरसेवितं
शयनमिदं मम सेवितुं क्षमं ॥ १२ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे ताराविलापे
हनूमद्वाक्यं नाम त्रयोविंशतितमः सर्गः ॥

## XXIV.

१४ =

गतासुं बालिनं दृष्ट्वा राघवस्तदनन्तरं ।
अब्रवीत् प्रसृतं वाक्यं सुग्रीवं शत्रुनाशनः ॥ १ ॥
न तथा परितापेन श्रेयसा युज्यते नरः ।
सपुत्रा त्वां समाश्रित्य तारा वसतु संप्रति ॥ २ ॥
शोकप्रभावानुगतो वाष्पमोक्षः कृतश्च ते ।
न कालादुत्तरं किञ्चित् कर्म शेषमुपासितुं ॥ ३ ॥
नियतिः कारणं लोके नियतिर्लोकसंग्रहः ।
नियतिः सर्वभूतानां वियोगेष्वपि कारणं ॥ ४ ॥
न कर्ता कस्यचित् कश्चिन्नियोगे नापि चेश्वरः ।
स्वभावे वर्तते कालः कस्य कालः परायणः ॥ ५ ॥
न कालः कालमभ्येति न कालः परिहीयते ।
स्वभावं वा समासाद्य न किञ्चिदतिवर्तते ॥ ६ ॥
न कालस्यात्महेतुत्वान्न बुद्धिर्न पराक्रमः ।
न मित्रज्ञातिसंबन्धः कारणं नात्मनो वशः ॥ ७ ॥
किन्तु कालपरीणामे द्रष्टव्यं साधु दृश्यतां ।
धर्मश्चार्थश्च कामश्च कालक्रमसमाहिताः ॥ ८ ॥
प्रयातः प्रकृतिं बाली हतः प्राप्तः क्रियाफलं ।
स संपन्नोऽर्थसंयोगैः सत्कार्यः प्लवगेश्वरः ॥ ९ ॥

अधर्मफलसंयोगात् त्यक्ता तेनात्मनस्तनूः ।
स्वर्गः परिगृहीतश्च स्वधर्मं परिरक्षता ॥ १० ॥
एषा वै नियतिः श्रेष्ठा यां गतो हरियूथपः ।
अलं हि परिसंतप्य प्राप्तकालमुपास्यतां ॥ ११ ॥
18. 1ab वचनान्ते तु रामस्य लक्ष्मणः परवीरहा ।
1cd अब्रवीत् प्रसृतं वाक्यं सुग्रीवं प्लवगेश्वरं ॥ १२ ॥
2ab क्रियतामस्य सुग्रीव प्रेतकार्यमनन्तरं ।
2cd ताराङ्गदाभ्यां सह वै वीरेण च हनूमता ॥ १३ ॥
3ab समानाय्य च काष्ठानि शुष्काणि च बहूनि च ।
3cd चन्दनागुरुमुख्यानि बालिसत्कारकारणात् ॥ १४ ॥
4ab समाश्वासय तारां त्वमङ्गदं च शुभाङ्गदं ।
4cd मा भूर्बालिशबुद्धिस्त्वं त्वदधीनमिदं पुरं ॥ १५ ॥
5ab हनूमन् गच्छ माल्यानि वस्त्राणि विविधानि च ।
5cd गन्धतैलं च गन्धांश्च पश्चात्र समनन्तरं ॥ १६ ॥
6ab सत्वरं शिविकां शीघ्रमादायागच्छ वानर ।
6cd त्वरा गुणवती प्रोक्ता ह्यस्मिन् काले विशेषतः ॥ १७ ॥
7ab सज्जीभवन्तु प्लवगाः शिविकावाहनोचिताः ।
7cd समर्था बलिनश्चैव ये वहिष्यन्ति बालिनं ॥ १८ ॥
8ab आज्ञाप्य चैव सुग्रीवं सुमित्रानन्दिवर्धनः ।
8cd तस्थौ भ्रातुः समीपेऽथ लक्ष्मणः परवीरहा ॥ १९ ॥

9ab लक्ष्मणस्य वचः श्रुत्वा तारः संतप्तमानसः ।
9cd प्रविवेश गुहां शीघ्रं शिविकानयनोद्यतः ॥ २० ॥
10ab आदाय शिविकां तारः स तु पर्यापतत् पुरः ।
10cd वाहकैरुह्यमानां तां शूरैरुद्वहनोचितैः ॥ २१ ॥
11ab ततो वालिनमुद्यम्य सुग्रीवः शिविकां तदा ।
11cd आरोपयदभिक्रोशन्नङ्गदेन सह प्रभुः ॥ २२ ॥
आरोप्य शिविकायां तु वालिनं नष्टजीवितं ।
12ab वाससाच्छादयामास माल्येनावचकार च ॥ २३ ॥
12cd तदा चाज्ञापयामास सुग्रीवः प्लवगेश्वरः ।
13ab और्ध्वदेहिकमार्यस्य क्रियतामिति वानराः ॥ २४ ॥
ततो रत्नानि हरयो बहूनि विविधानि च ।
13cd ययुरग्रे प्रयच्छन्तः शिविकासमनन्तरं ॥ २५ ॥
14ab राज्ञां मूर्ध्नि विशेषा हि दृश्यन्ते भुवि यादृशाः ।
14cd तादृशैर्वालिनः सर्वमकुर्वन्नौर्ध्वदेहिकं ॥ २६ ॥
15ab अङ्गदं परिगृह्याथ तारप्रभृतयस्तदा ।
15cd क्रोशन्तः प्रययुस्तत्र प्रशंसन्तश्च वालिनं ॥ २७ ॥
16ab ताराप्रभृतयश्चापि वानर्यो हतबान्धवाः ।
16cd अनुजग्मुः कपीन्द्रं तं क्रोशन्त्यो बाष्पविक्लवाः ॥ २८ ॥
17ab तासां रुदितशब्देन वानरीणां वनान्तरे ।
17cd वनानि गिरयश्चैव रुदन्तीव समन्ततः ॥ २९ ॥

18ab पुलिने गिरिनद्याश्च विविक्ते जलसंवृते ।
18cd चितां चक्रुः सुबहुशो वानरा बालिवल्लभाः ॥ ३० ॥
19ab अवरोप्य च तां स्कन्धाच्छिबिकां वानरर्षभाः ।
19cd तस्थुरेकान्तमासाद्य सर्वे ध्यानपरायणाः ॥ ३१ ॥
20ab ततस्तारा पतिं दृष्ट्वा शिबिकालयशायिनं ।
20cd आरोप्याङ्के शिरस्तस्य विललाप सुदुःखिता ॥ ३२ ॥
21ab अङ्गदोऽयं प्रियो नाम ननु ते पुत्रवत्सल ।
21cd जलवत् पश्यसीमं त्वं कस्माच्छोकाभिपीडितं ॥ ३३ ॥
प्रहृष्टमिव ते वक्त्रं गतासोरपि वानर ।
तरुणादित्यसदृशं दृश्यते जीवतो यथा ॥ ३४ ॥
22ab एष त्वां रामरूपेण कालः कर्षति वानर ।
22cd येन स्मो विधवाः सर्वा एकबाणहताः कृताः ॥ ३५ ॥
23ab इमास्ते च स्त्रियो वीर सर्वाः सुदयिता भृशं ।
23cd पादै रुदन्त्यो नगरादागताः किं न बुध्यसे ॥ ३६ ॥
24ab तवेष्टा ननु नामैता भार्याश्चन्द्रनिभाननाः ।
24cd कथमीर्ष्यां न कुरुषे सुग्रीवस्य समीपतः ॥ ३७ ॥
25ab एते हि सचिवा राजंस्तारप्रभृतयस्तव ।
25cd पुरवासी जनश्चायं परिवार्य स्थिता विभो ॥ ३८ ॥
25ef विसर्जयैतान् सचिवान् यथापूर्वमरिंदम ।
26ab ततः क्रीडाम सहिता वनेऽस्मिन् मदिरोत्कटाः ॥ ३९ ॥

एवं विलपतीं तारां पतिशोकपरिप्लुतां ।
उत्थापयन्ति स्म तदा वानर्यः शोकविह्वलाः ॥ ४० ॥
सुग्रीवेण ततः सार्धमङ्गदः पितरं रुदन् ।
चितामारोपयामास क्रन्दमानो मुहुर्मुहुः ॥ ४१ ॥
ततोऽग्निं विधिवद्दत्त्वा सोऽपसव्यं चकार ह ।
पितरं दीर्घमध्वानं प्रस्थितं व्याकुलेन्द्रियः ॥ ४२ ॥
बालिनं ते तु सत्कृत्य विधिपूर्वं प्लवङ्गमाः ।
आजग्मुरुदकं कर्तुं पम्पां शीतजलां शुभां ॥ ४३ ॥
ततः कृतोदकाः सर्वे पम्पायां क्लिन्नवाससः ।
आजग्मू राघवं द्रष्टुं लक्ष्मणं च महौजसं ॥ ४४ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे बालिसत्कारो
नाम चतुर्विंशतितमः सर्गः ॥

19 = XXV.

1ab ततः शोकाभिसंतप्तं सुग्रीवं क्लिन्नवाससं ।
2ab शाखामृगमहामात्राः परिवव्रुः कृतोदकाः ॥ १ ॥
3ab अभिगम्य च काकुत्स्थं राममक्लिष्टकारिणं ।
3cd तस्थुः प्राञ्जलयः सर्वे पितामहमिवर्षयः ॥ २ ॥
4ab ततः शैलवपुर्धीमांस्तरुणादित्यसंनिभः ।
4cd अब्रवीत् प्राञ्जलिर्वाक्यं हनूमान् रघुनन्दनं ॥ ३ ॥
5ab तव प्रसादात् सुग्रीवः पितृपैतामहं महत् ।
5cd वानराणां सुदुष्प्रापं प्राप राज्यं परंतप ॥ ४ ॥
6ab भवता समनुज्ञातः प्रविश्य नगरीमिमां ।
6cd संविधास्यति कार्याणि सर्वथा ससुहृज्जनः ॥ ५ ॥
7ab स्नातोऽयं विविधै रत्नैरौषधैश्च समन्ततः ।
7cd अर्चयिष्यति दिव्यैश्च गन्धैस्त्वां प्रीतिमानसः ॥ ६ ॥
8ab इमां गिरिगुहां दिव्यामभियातुं त्वमर्हसि ।
8cd कुरुष्व स्वामिसंबन्धं वानरान् संप्रहर्षयन् ॥ ७ ॥
9ab एवमुक्तो हनुमता रामो दशरथात्मजः ।
9cd प्रत्युवाच हनूमन्तं बुद्धिमान् वाक्यकोविदः ॥ ८ ॥
10ab चतुर्दशसमाः सौम्य ग्रामं वा यदिवा पुरं ।
10cd न प्रवेक्ष्यामि हनुमन् पितुरादेश एष मे ॥ ९ ॥

11ab यूयं प्रविशत क्षिप्रं कुरुध्वं यदनन्तरं ।
11cd सुग्रीवो विधिना तात एष राज्येऽभिषिच्यतां ॥१०॥
12ab एवमुक्त्वा हनूमन्तं रामः सुग्रीवमब्रवीत् ।
12cd एनमप्यङ्गदं राजन् यौवराज्येऽभिषेचय ॥११॥
13ab प्रथमो वार्षिको मासः श्रावणः सलिलाप्लुतः ।
13cd प्रवृत्ताः सौम्य चत्वारो मासाश्च वार्षिका इमे ॥१२॥
14ab नायमुद्योगसमयः प्रविश त्वं पुरीमिमां ।
14cd इह वत्स्याम्यहं सौम्य पर्वते नियतेन्द्रियः ॥१३॥
15ab इयं गिरिगुहा रम्या विशाला मुक्तमारुता ।
16ab इह वत्स्याम्यहं सौम्य वर्षां सौमित्रिणा सह ॥१४॥ —
15cd प्रसन्नसलिलां रम्यां प्रभूतकमलोत्पलां ।
16cd कार्त्तिकीं समतिक्रम्य त्वं रावणवधे यत ॥१५॥
17ab एष नः समयः सौम्य प्रविश त्वं पुरीं शुभां ।
17cd अभिषिक्तः स्वराज्ये च सुहृदः संप्रहर्षय ॥१६॥
18ab इति रामाभ्यनुज्ञातः सुग्रीवो वानरर्षभः ।
18cd प्रविवेश पुरीं रम्यां प्रहृष्टो विगतज्वरः ॥१७॥
19ab तं वानरसहस्राणि प्रविष्टं वानरर्षभं ।
19cd अभिवाद्य प्रहृष्टानि सर्वतः पर्यवारयन् ॥१८॥
20ab ततः प्रकृतयः सर्वा वन्दयित्वा हरीश्वरं ।
20cd जयेति पतिता भूमौ शिरोभिः सुसमाहिताः ॥१९॥

21ab ताः समुत्थाप्य सुग्रीवः संमान्य च यथाविधि ।
21cd भ्रातुरन्तःपुरं रम्यं प्रविवेश महाकपिः ॥ २० ॥
22ab प्रविश्य चाभिनिष्क्रान्तं सुग्रीवं वानरर्षभाः ।
22cd अभ्यषिञ्चन् महामात्राः सहस्राक्षमिवामराः ॥ २१ ॥
23ab तस्य पाण्डरमाजह्रुश्छत्रं कनकभूषणं ।
23cd शुक्ले च बालव्यजने हेमदण्डपरिष्कृते ॥ २२ ॥
24ab दिव्यानि मणिरत्नानि सर्ववीजौषधानि च ।
24cd सक्षीराणां च वृक्षाणां प्ररोहं कुसुमानि च ॥ २३ ॥
25ab सुगन्धीनि च माल्यानि स्थलजान्यम्बुजानि च ।
25cd वासांसि चाथ मुख्यानि गन्धांश्च विविधान् वरान् ॥ २४ ॥
26ab अक्षतं जातरूपं च प्रियङ्गुं मधुसर्पिषी ।
26cd दधि चर्म च वैयाघ्रं वरार्हे चैव पादुके ॥ २५ ॥
27ab समालम्भनमादाय लाजाश्च शुभदर्शनाः ।
27cd आजग्मुस्तत्र सहिता वराः कन्याश्च षोडश ॥ २६ ॥
28ab ततस्ते वानरश्रेष्ठा यथाभागं यथाविधि ।
28cd रत्नैर्वस्त्रैश्च भक्ष्यैश्च तोषयित्वा द्विजर्षभान् ॥ २७ ॥
29ab ततः कुशपरिस्तीर्णं समिद्धं जातवेदसं ।
29cd मन्त्रपूतेन हविषा हुत्वा मन्त्रविदो जनाः ॥ २८ ॥
30ab ततो हेमप्रतिष्ठानं वरास्तरणसंवृतं ।
30cd प्रासादशिखराकारं चित्रमाल्योपशोभितं ॥ २९ ॥

30ef प्राङ्मुखं विधिवन्मन्त्रैः स्थापयित्वा वरासनं ।
31ab नदीनदेभ्यः संहृत्य जलं दिव्यं च शोभनं ॥३०॥
31cd आहृत्य च समुद्रेभ्यः सर्वेभ्यो वानरर्षभाः ।
अपः कनककुम्भेषु निधाय विमलाः शुभाः ॥३१॥
32ab शुभैस्ताम्रैश्च रौप्यैश्च कलशैश्चापि पार्थिवैः ।
35ab शास्त्रदृष्टेन विधिना महर्षिविहितेन च ॥३२॥
35cd गयो गवाक्षो गवयः शरभो गन्धमादनः ।
-36ab मैन्दश्च द्विविदश्चैव हनूमान् जाम्बवांस्तथा ॥३३॥
37ab अभ्यषिञ्चन्त सुग्रीवं विमलेन सुगन्धिना ।
37cd सलिलेन सपद्मेन वसवो वासवं यथा ॥३४॥
38ab अभिषिक्ते तु सुग्रीवे सर्वे ते वानरर्षभाः ।
38cd प्रचुक्रुशुर्महात्मानो हृष्टरूपाः सहस्रशः ॥३५॥
41ab रामस्य वचनं कुर्वन् सुग्रीवो वानरर्षभः ।
41cd अङ्गदं संपरिष्वज्य यौवराज्येऽभ्यषेचयत् ॥३६॥
42ab अङ्गदे चाभिषिक्ते तु सानुक्रोशाः प्लवङ्गमाः ।
42cd साधु साध्विति सुग्रीवं महात्मानोऽभ्यपूजयन् ॥३७॥
43ab तुष्टहृष्टजनाकीर्णा पताकाध्वजमालिनी ।
43cd बभूव नगरी रम्या किष्किन्धा चित्रकानना ॥३८॥
44ab निवेद्य रामाय महात्मने ततः कृताभिषेकः कपिवाहिनीपतिः ।
44cd उवास भार्यां प्रतिलभ्य वीर्यवानवाप्य राज्यं त्रिदशाधिपो यथा ।३९।

20 = XXVI.

1ab अभिषिक्ते तु सुग्रीवे प्रविष्टे वानरे गुहां ।
1cd आजगाम सह भ्रात्रा रामः प्रस्रवणं गिरिं ॥ १ ॥
2ab शार्दूलमृगसंघुष्टं सिंहैर्भीमबलैर्वृतं ।
3ab ऋक्षवानरगोपुच्छैर्मार्जारैश्च निषेवितं ॥ २ ॥
3cd मेघराशिनिभं शैलं नित्यं गिरिगुहाकुलं ।
4ab तस्य शैलस्य शिखरे महतीमायतां गुहां ॥ ३ ॥
4cd प्रतिजग्राह वासार्थं रामः सौमित्रिणा सह ।
5ab गुहायाश्चाप्यदूरस्थं गिरिकुण्डं बहूदकं ॥ ४ ॥
5cd विस्तीर्णं चायतं चैव पद्मिन्या चोपशोभितं ।
दात्यूहैः सारसैश्चैव कादम्बैश्चाप्यलंकृतं ॥ ५ ॥
7ab अन्वसेवत धर्मात्मा राघवः सहलक्ष्मणः ।
7cd बहुनिम्ने दरी कुञ्जे सुपुण्ये धरणीतले ॥ ६ ॥
8ab बहुरम्ये वनोद्देशे नानामृगसमाकुले ।
8cd शुशोच राघवस्तत्र लक्ष्मणस्य समीपतः ॥ ७ ॥
9ab हृतां च भार्यां कौमारीं प्राणेभ्योऽपि गरीयसीं ।
9cd दध्यावभ्युदयं दृष्ट्वा शशाङ्कं स विशेषतः ॥ ८ ॥
10ab न विवेश च निद्रैनं निशासु शयनं गतं ।
चिन्ता चैव विवेशैनं बाष्पशोकपरिप्लुतं ॥ ९ ॥

शोचन्तमथ काकुत्स्थं निशि शोकपरायणं ।
तुल्यदुःखोऽब्रवीद्भ्राता लक्ष्मणोऽनुनयं वचः ॥ १० ॥
अलं वीर व्यथां गत्वा न त्वं शोचितुमर्हसि ।
शोचन्तो ह्यवसीदन्ति सर्वथा विदितं हि ते ॥ ११ ॥
भव कार्यपरो नित्यं भव धर्मपरायणः ।
अक्रोधो धर्मशीलश्च व्यवसायी स राघव ॥ १२ ॥
न ह्यव्यवसितः शत्रुं राक्षसं च विशेषतः ।
समर्थस्त्वं रणे जेतुं विक्रमे सिंहसंनिभं ॥ १३ ॥
समुद्दीपय तेजस्त्वं व्यवसायं स्थिरीकुरु ।
ततः सपरिवारं तं निष्कुलं कुरु वैरिणं ॥ १४ ॥
पृथिवीमपि कामं त्वंससागरवनाचलां ।
परिवर्तयितुं शक्तः किमु तं रावणं रणे ॥ १५ ॥
हितं तु खलु वीर्यं ते प्रसुप्तं प्रतिबोधय ।
दीप्तमाहुतिभिः काले भस्मच्छन्नमिवानलं ॥ १६ ॥
लक्ष्मणस्य तु तद्वाक्यं प्रतिगृह्य शुभं हितं ।
राघवः सौहृदस्निग्धमिदं वचनमब्रवीत् ॥ १७ ॥
वाच्यं यदनुरक्तेन स्निग्धेनावहितेन च ।
सत्वविक्रमयुक्तेन तदुक्तं लक्ष्मण त्वया ॥ १८ ॥
एष शोकः परित्यक्तः सर्वकार्यावसादकः ।
विक्रमेष्वप्रतिहतं तेजः प्रोत्साहयाम्यहं ॥ १९ ॥

26ab शरत्कालं प्रतीक्षेऽहमियं प्रावृडुपस्थिता ।
26cd ततः सराष्ट्रं सगणं राक्षसं तं निहन्म्यहं ॥ २० ॥
25ab तस्य तद्वचनं श्रुत्वा हृष्टो रामस्य लक्ष्मणः ।
25cd पुनरेवाब्रवीद्वाक्यं सौमित्रिर्मित्रनन्दनः ॥ २१ ॥
एतत् ते सदृशं वाक्यमुक्तं शत्रुनिर्बर्हण ।
इदानीमसि काकुत्स्थ प्रकृतिं स्वामुपागतः ॥ २२ ॥
विज्ञाय ह्यात्मवीर्यं त्वं तथ्यं भावितुमर्हसि ।
एतत् सदृशमुक्तं ते श्रुतस्याभिजनस्य च ॥ २३ ॥
तस्मात् पुरुषशार्दूल चिन्तयन् शत्रुनिग्रहं ।
वर्षारात्रमनुप्राप्तमतिक्रामय राघव ॥ २४ ॥

भजस्व शान्तिं प्रतिलभ्यतां शरत्
27ab क्षमस्व मासांश्चतुरो मया सह ।
वसाचलेऽस्मिन् मृगराजसेविते
27cd समर्थयन् शत्रुबधे समुद्यमं ॥ २५ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे सुग्रीवाभिषेको नाम पञ्चविंशतितमः सर्गः — प्रस्रवणगिरिनिवासो नाम षड्विंशतितमः सर्गः ॥

२१ = XXVII.

1ab स तथा बालिनं हत्वा सुग्रीवमभिषिच्य च ।
1cd वसन् माल्यवतः पृष्ठे रामः सौमित्रिमब्रवीत् ॥ १ ॥
2ab अयं लक्ष्मण संप्राप्तः समयो जलदागमः ।
2cd पश्याद्य गगनं मेघैरावृतं गिरिसंनिभैः ॥ २ ॥
3ab अष्टमासधृतं गर्भं भास्करस्य गभस्तिभिः ।
3cd रसं सर्वसमुद्राणां द्यौः प्रसूते रसायनं ॥ ३ ॥
6ab एषा घर्मपरिक्लिष्टा नववारिपरिप्लुता ।
6cd सीतासंतापतप्तेव मही बाष्पं विमुञ्चति ॥ ४ ॥
7ab एष फुल्लार्जुनः शैलः केतकैरधिवासितः ।
7cd सुग्रीव इव शान्तारिर्धाराभिरभिषिच्यते ॥ ५ ॥
8ab नीलमेघाश्रिता विद्युत् स्फुरन्ती प्रतिभात्यसौ ।
8cd स्फुरन्ती रावणस्याङ्के ह्रियमाणेव मैथिली ॥ ६ ॥
9ab इमास्ता मन्मथव्यथाहिताः प्रतिमुखा निशाः ।
9cd अनुलिप्ता इव घनैर्नष्टग्रहनिशाकराः ॥ ७ ॥
4ab यतो याता नरेन्द्राणां सेनाः प्रतिनिवर्तिताः ।
4cd वैराणि च हि मार्गाश्च सलिलेन समीकृताः ॥ ८ ॥
5ab घनैः समुदितै रुद्धो दीनरूपः प्रकाशते ।
5cd सूर्यः प्रनष्टो धर्मज्ञ शोकेनाहमिवावृतः ॥ ९ ॥

10ab मासः प्रौष्ठपदो रम्यो ब्राह्मणानां विवक्षतां ।
10cd अयं स्वाध्यायसमयः सामगानामुपस्थितः ॥ १० ॥
निवृत्तकर्मा प्रयतो नूनं संचितसंचयः ।
आषाढीमभ्युपगतो भरतः कोशलाधिपः ॥ ११ ॥
11ab नूनमापूर्यमाणायाः शरय्वा वर्धते रवः ।
11cd मां समीक्ष्य वनं यान्तमयोध्याया इव स्वनः ॥ १२ ॥
12ab इमाः स्फीतगुणा वर्षाः सुग्रीवः सुखमेधते ।
39ab विजितारिः सदारश्च राज्ये च महति स्थितः ॥ १३ ॥
39cd अहं तु हृतदारश्च राज्याच्च महतश्च्युतः ।
39ef नदीकूलमिव क्लिन्नमवसीदामि लक्ष्मण ॥ १४ ॥
40ab सागरश्चापि विस्तीर्णो पन्थानो भृशदुर्गमाः ।
40cd रावणश्च महाशत्रुरपारः प्रतिभाति मे ॥ १५ ॥
41ab अयात्रां चैव दृष्ट्वेमां सागरस्य च दुर्गतां ।
41cd प्रणते चापि सुग्रीवे न किञ्चिद्याहृतं मया ॥ १६ ॥
42ab अपि चातिपरिक्लिष्टं चिराद्दारैः समागतं ।
42cd आत्मकार्यगरीयस्त्वाद्वक्तुं नेच्छामि वानरं ॥ १७ ॥
44ab स्वयमेव हि विश्वस्य ज्ञात्वा कालमुपस्थितं ।
44cd उपकारं च सुग्रीवो वेत्स्यते नात्र संशयः ॥ १८ ॥
47ab तस्य संकल्प्य विश्वासं स्थितोऽहमिदमन्तरं ।
47cd सुग्रीवस्य नदीनां च प्रसादं प्रतिपालयन् ॥ १९ ॥

46ab उपकारः कृतज्ञेषु प्रतिकारेण युज्यते ।
46cd अकृतज्ञे प्रतिकृतं हन्ति सत्त्ववतां मनः ॥२०॥

अथैवमुक्तः प्रणिधाय लक्ष्मणः
48ab कृताञ्जलिस्तत् प्रतिभाषितं वचः ।
उवाच रामं स्वभिरामदर्शनं
48cd प्रदर्शयन् दर्शनमात्मनः शुभं ॥२१॥

यथोक्तमेतत् तव सर्वमीप्सितं
49ab नरेन्द्र कर्ता न चिरेण वानरः ।
शरत्प्रतीक्षं क्षमतामिमं भवान्
49cd त्यज प्रलापं रिपुनिग्रहे रतः ॥२२॥

तथापि तस्मिन् वसतो महागिरौ
50ab महात्मनश्चिन्तयतो हृतां प्रियां ।
विसृज्य तोयं जलभारवाहना
50cd घना निवृत्ताः शरदं न्यवेदयन् ॥२३॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे प्रावृड्वर्णनं
नाम सप्तविंशतितमः सर्गः ॥

## XXVIII.

समीक्ष्य कामात् सुग्रीवं मन्दं धर्मार्थसंग्रहे ।
रत्यर्थेऽवहितात्मानं कान्तास्वेकान्तमानसं ॥ १ ॥
निवृत्ताशममभिप्रायैरिष्टैर्भ्रात्रा विवासितं ।
प्राप्तवन्तमभिप्रायान् सर्वानेव मनोरमान् ॥ २ ॥
स्वां च पत्नीमभिप्रेतां तारां च परमेप्सितां ।
सहस्रं राजपत्नीनां लब्ध्वा कामपरायणं ॥ ३ ॥
विहरन्तमहोरात्रं कृतार्थं विगतज्वरं ।
मरुत्पतिं शक्रमिव नन्दने साप्सरोगणं ॥ ४ ॥
मन्त्रिसंन्यस्तकार्यार्थं मन्त्रिणामनपेक्षिणं ।
राज्यस्थं सुखसंदोहे वर्तमानमुपस्थिते ॥ ५ ॥
निश्चितार्थोऽर्थतत्त्वज्ञः कार्यकालविशेषवित् ।
प्रसादमधुरैर्वाक्यैर्हरीणां मानयन् पतिं ॥ ६ ॥
वाक्यविद्वाक्यतत्त्वज्ञं सुग्रीवं मारुतात्मजः ।
हितं तथ्यं च पथ्यं च धर्मकामार्थहेतुमत् ॥ ७ ॥
प्रणयप्रीतिसंयुक्तं विश्वासकृतनिश्चयः ।
हरीश्वरमुपामन्त्र्य हनूमान् वाक्यमब्रवीत् ॥ ८ ॥
राज्यं राजन् यशो दिव्यं कौली श्रीरात्मसात्कृता ।
रञ्जिताश्च प्रकृतयः स्वजनाः प्रतिपूजिताः ॥ ९ ॥

9ab शत्रवस्ते प्रतापेन नाममात्रावशेषिताः ।
9cd मित्राणां संग्रहः शेषस्तद्भवाननुबुध्यतां ॥ १० ॥
10ab यो हि मित्रेषु मित्रज्ञः सततं साधु वर्तते ।
10cd तस्य राज्यं च कीर्तिश्च प्रतापश्चाभिवर्धते ॥ ११ ॥
11ab यस्य दण्डश्च कोषश्च मित्राण्यात्मा च भूमिप ।
11cd समवेतानि सर्वाणि स राजा श्रियमश्नुते ॥ १२ ॥
12ab स भवान् वृत्तसंपन्नः स्थितः पथि निरत्यये ।
12cd मित्रार्थमभिनीतस्त्वं यथावत् कर्तुमर्हसि ॥ १३ ॥
13ab यो हि कालव्यतीतेषु मित्रकार्येषु वर्तते ।
13cd स कृत्वा महतोऽप्यर्थान् न मित्रार्थेन युज्यते ॥ १४ ॥
14ab मनसापि हि कर्माणि यः काले प्रतिपद्यते ।
14cd स राजा बुद्धिसंपन्नः परेषां मूर्ध्नि वर्तते ॥ १५ ॥
15ab तदिदं मित्रकार्यं ते कालातीतमरिंदम ।
15cd रामस्य रणविक्रान्त वैदेह्याः परिमार्गणां ॥ १६ ॥
16ab न च कालमतीतं त्वां संचोदयति धर्मवित् ।
16cd त्वरमाणोऽपि स प्राज्ञस्तव राजन् वशानुगः ॥ १७ ॥
17ab कुलस्य कर्तुः स्फीतस्य दीर्घकालं स राघवः ।
17cd अप्रमेयोऽप्रमेयैः स स्वयमप्रतिमो गुणैः ॥ १८ ॥
18ab तस्य प्राक्चोदनात् कार्यं पूर्वं कृतवतः प्रियं ।
हरीश्वर हरिश्रेष्ठानाज्ञापयितुमर्हसि ॥ १९ ॥

असक्यंगतयो हीमे हरिवीरा महाबलाः ।
न हि तावद्भवेत् कालो व्यतीतश्चोदनाय ते ॥ २० ॥
अचोदितस्य कार्यस्य भवेत् कालव्यतिक्रमः ।
अकर्तुरपि कार्यं भो भवान् कर्ता हरीश्वर ॥ २१ ॥
किं पुनर्यः प्रियं कर्ता राज्ये त्वय्यर्पणस्य च ।
शक्तिमानसि विक्रान्त हर्यक्षाणां गणेश्वरः ॥ २२ ॥
कर्तुं दाशरथेः प्रीतिमाज्ञया सज्जते तव ।
कामं खलु शरैः शक्तः ससुरासुरमानुषान् ॥ २३ ॥
वशे दाशरथिः कर्तुं प्रतिज्ञां तव काङ्क्षते ।
प्राणत्यागविशङ्केन कृतं येन तव प्रियं ॥ २४ ॥
तस्य मृग्या तु वैदेही पृथिव्यामपि चाम्बरे ।
तदेवं शक्तिसंपन्नः पूर्वं कृतवतः प्रियं ॥ २५ ॥
कर्तुमर्हसि पिङ्गाक्ष राघवस्य महत् प्रियं ।
19ab नाधस्तान्नोपरिष्टाच्च गतिर्नाप्सु न चाम्बरे ॥ २६ ॥
19cd कस्यचित् सज्जतेऽस्माकं सज्जते तु तवाज्ञया ।
20ab तदाज्ञापय कः कस्मिन् कुतो वापि व्यवस्यतु ॥ २७ ॥
20cd हरयो ह्यप्रधृष्यास्ते सन्ति कोट्यग्रगा नृप ।
21ab तस्य तद्वचनं श्रुत्वा काले साधु निवेदितं ॥ २८ ॥
21cd सुग्रीवः सत्त्वसंपन्नश्चकार मतिमात्मवान् ।
22ab स संदिदेशाथ कपिं नीलं नित्यकृतोद्यमं ॥ २९ ॥

22cd दिक्षु सर्वासु सैन्यानां सर्वेषां कुरु संग्रहं ।
23ab यथा सेनाः समग्रा मे यूथपालाश्च सर्वशः ॥३०॥
23cd समागच्छन्त्यसंमोहात् सेनाग्राणि तथा कुरु ।
24ab ये चान्तपालाः प्लवगाः शीघ्रगा व्यवसायिनः ॥३१॥
24cd स्वयं चानन्तरं सैन्यं भवानेवानुपश्यतु ।
25ab यः पञ्चरात्रादूर्ध्वं मे नागमिष्यति वानरः ।
25cd तस्य प्राणान्तिकं दण्डं कुर्यामिति मतिर्मम ॥३२॥

इत्यार्षे रामायणे किष्किन्धाकाण्डे सैन्यव्यपदेशो
नाम अष्टाविंशतितमः सर्गः ॥

23 = XXIX.

1ab शरद्यथोपयातायां विमुक्ते गगने घनैः ।
1cd वर्षाकालोषितो रामः कामशोकाभिपीडितः ॥ १ ॥
2ab कामवन्तं च सुग्रीवं नष्टां च जनकात्मजां ।
2cd बुद्ध्वा कालमतीतं च मुमोह परमातुरः ॥ २ ॥
3ab ततः संज्ञामुपागम्य मुहूर्तात् पुनरात्मनः ।
3cd मनःस्थामपि वैदेहीं चिन्तयामास राघवः ॥ ३ ॥
5ab पाण्डरं विमलं व्योम्नि विमले चन्द्रमण्डलं ।
5cd रक्तां च रजनीं दृष्ट्वा शरज्ज्योत्स्नानुलेपनां ॥ ४ ॥
6ab आसीनः पर्वतस्याग्रे हेमधातुविभूषिते ।
6cd कन्दर्पशरसंतप्तो जगाम मनसा प्रियां ॥ ५ ॥
7ab ततः पद्मपलाशाक्षीं मैथिलीमनुचिन्तयन् ।
- स शून्यहृदयः शून्ये फलार्थे लक्ष्मणे गते ॥ ६ ॥
7cd अब्रवील्लक्ष्मणं दीनो मुखेन परिशुष्यता ।
8ab तर्पयित्वा सहस्राक्षः सलिलेन वसुंधरां ॥ ७ ॥
8cd निर्वर्त्य सर्वसंभूतिं कृतकर्मा पुरंदरः ।
11ab स्निग्धगम्भीरनिर्घोषाः शैलद्रुमपुरोगमाः ॥ ८ ॥
विसृज्य सलिलं मेघाः प्रतियाता नृपात्मज ।
12ab नीलोत्पलदलश्यामाः श्यामीकृत्य दिशो दश ॥ ९ ॥

12cd समदा इव मातङ्गा गतवेगाः पयोधराः ।
जलगर्भा महावेगाः कुटजार्जुनगन्धिनः ॥ १० ॥
निर्ववुः शतशश्चैव वृष्टिवाताः सविद्युतः ।
15ab असनाः सप्तपर्णाश्च कोविदाराश्च पुष्पिताः ॥ ११ ॥
लक्ष्यन्ते बन्धुजीवाश्च श्यामाश्च गिरिसानुषु ।
10ab मेघानां वारणानां च मयूराणां च लक्ष्मण ॥ १२ ॥
नादाः प्रस्रवणानां च विनिवृत्ताः सदर्दुराः ।
14ab उत्पलैः पुण्डरीकैश्च कुमुदैश्चापि पुष्पितैः ॥ १३ ॥
14cd वाप्यः समभिशोभन्ते श्रीमत्यः प्रमदा इव ।
13ab अभिवृष्टा महामेघैर्निर्मलाश्चित्रधातवः ॥ १४ ॥
13cd अनुलिप्ता इवाभान्ति गिरयः पश्य लक्ष्मण ।
प्रसन्नसलिलाः सौम्य कुररैः संप्रणादिताः ॥ १५ ॥
हंसकारण्डवाकीर्णाः सपद्माः सलिलाशयाः ।
16ab पुष्पितान् सन्ततान् स्तोमैः काञ्चनैरिव निर्मितान् ॥ १६ ॥
16cd कथं मे वर्तते बाला पश्यन्ती मामपश्यती ।
या पुरा कलहंसानां स्वनेन कलभाषिणी ॥ १७ ॥
बोध्यते चारुसर्वाङ्गी साद्य मे बोध्यते कथं ।
क्रीडतां चक्रवाकानां विशम्य सहचारिणां ॥ १८ ॥
पुण्डरीकविशालाक्षी कथमेका भविष्यति ।
तां विना मृगशावाक्षीं चिरं नाद्य सुखं लभे ॥ १९ ॥

17ab तां कथं मद्वियोगाच्च सुकुमारीं यशस्विनीं ।
17cd न भृशं पीडयेत् कामः शरद्गुणनिरन्तरः ॥ २० ॥
एवमादि नरव्याघ्रो विललाप नृपात्मजः ।
विहङ्ग इव सारङ्गो जलार्थी त्रिदिवेश्वरं ॥ २१ ॥
ततश्चंचूर्य रम्येषु फलार्थी गिरिसानुषु ।
ददर्श पर्युपावृत्तो लक्ष्मीवाँल्लक्ष्मणोऽग्रजं ॥ २२ ॥

स चिन्तया दुःसहयाभिभूतं विसंज्ञमेनं स्वशुचा मनस्वी ।
भ्रातुर्विषादात् परितापदीनः समीक्ष्य सौमित्रिरुवाच रामं ॥ २३ ॥
किमार्य कामस्य वशे स्थितेन किमात्मसौभाग्यपराभवेन ।
नायं सदा संध्रियतां समाधिः किमात्मयोगेन निवर्तितेन ॥ २४ ॥
नयाभियोगं मनसः प्रसादं समापयस्वात्मगुणेन कामं ।
भजस्व सामर्थ्यमदीनसत्त्व कामार्थहितौ च कुरु प्रयत्नं ॥ २५ ॥
न जानकी पार्थिववंशनाथ स्वशीलगुप्ता सुलभा परेण ।
न चाग्निवत् तां ज्वलितामुपेत्य न दह्यते वीर वरार्ह कश्चित् । २६ ।
स लक्ष्मणं लक्ष्मणवाक्यहृष्टः सभाजयन् वाक्यमुवाच रामः ।
हितं च तत्त्वं च तथा त्वयोक्तं समानधर्मार्थसमाहितं च ॥ २७ ॥
सुभाषितं ते नरवर्य कार्यं कोऽन्यः समोऽस्तीह हितस्य वक्ता ।
स्थितोऽस्मि सत्यां धृतिमद्य कृत्वा त्यक्तो मया शोककृतः प्रलापः । २८ ।
निःसंशयं कार्यमुपेक्षितव्यं क्रियाविशेषो ह्यनुवर्तनीयः ।
ननु प्रवृद्धस्य दुरासदस्य बलं निहन्तुं मम मन्मथस्य ॥ २९ ॥

23 = XXX.

एवमुक्त्वा तु काकुत्स्थो मुहूर्तं ध्यानमास्थितः ।
लक्ष्मणं कार्यसिद्ध्यर्थं पुनर्वचनमब्रवीत् ॥ १ ॥
20ab अन्योन्यं बद्धवैराणां मानिनां विषयैषिणां ।
21ab उद्योगसमयः सौम्य पार्थिवानां महात्मनां ॥ २ ॥
20cd इयं सा प्रथमा यात्रा पार्थिवानां जयार्थिनां ।
21cd न च पश्यामि सुग्रीवमुद्योगं वा तथाविधं ॥ ३ ॥
22ab चत्वारो वार्षिका मासा गता वर्षशतोपमाः ।
22cd मम कामाभितप्तस्य सौम्य सीतामपश्यतः ॥ ४ ॥
23ab प्रियाविहीने दुःखार्ते हृतराज्ये विवासिते ।
23cd कृपां न कुरुते राजा सुग्रीवो मयि मानद ॥ ५ ॥
24ab अनाथो राज्यभ्रष्टश्च रावणेन च धर्षितः ।
24cd दीनो दूरगृहः कामी मां चापि शरणं गतः ॥ ६ ॥
25ab इत्येभिः कारणैः सौम्य सुग्रीवस्य दुरात्मनः ।
25cd अहं वानरराजस्य परिभूतः परंतप ॥ ७ ॥
26ab स कालं परिसंख्याय सीतायाः परिमार्गणे ।
26cd कृतार्थः समयं कृत्वा दुर्मतिर्नाभिपद्यते ॥ ८ ॥
27ab स किष्किन्धां प्रविश्य त्वं ब्रूहि वानरपुङ्गवं ।
27cd मूर्खं ग्राम्यसुखे सुप्तं सुग्रीवं वचनं मम ॥ ९ ॥

समयस्ते कृतो योऽसौ तस्य कालविलम्बनं ।
28ab अर्थिनामुपपन्नानां पूर्वं चाप्युपकारिणां ॥ १० ॥
28cd आशां संश्रुत्य यो हन्ति स लोके पुरुषाधमः ।
29ab शुभं वा यदिवा पापं येन वाक्यमुदीरितं ॥ ११ ॥
29cd सत्यमित्यभिजानाति स लोके पुरुषोत्तमः ।
30ab सत्कृताश्च कृतार्थाश्च मित्राणां न भजन्ति ये ॥ १२ ॥
30cd तान् मृतानपि क्रव्यादः कृतघ्नान् नोपभुञ्जते ।
प्रतिकारं हि मे राजा प्रतिज्ञाय हरीश्वरः ॥ १३ ॥
व्यतीतांश्चतुरो मासान् विहरन् नावबुध्यते ।
तत् कालपरिणामश्च सहायश्चानवस्थितः ॥ १४ ॥
तस्याश्च गतिरज्ञाता कथं शक्यं न शोचितुं ।
यदर्थमयमारम्भः कृतः परपुरंजय ॥ १५ ॥
तमसौ नाभिजानाति कृतार्थः प्लवगेश्वरः ।
सामात्यः परिसंक्रीडन् कामस्य वशमागतः ॥ १६ ॥
शोकदीनेषु चास्मासु रमते निरपत्रपः ।
तदेवं विहिते काले हितं यत् पुरुषर्षभ ॥ १७ ॥
तच्चिन्तयाशु वैदेह्या न कालोऽतिक्रमेद्यथा ।
31ab नूनं काञ्चनपृष्ठस्य विकृष्टस्य मया रणे ॥ १८ ॥
31cd द्रष्टुमिच्छसि चापस्य रूपं विद्युद्गणोपमं ।
32ab घोरं ज्यातलनिर्घोषं क्रुद्धस्य मम संयुगे ॥ १९ ॥

32cd निष्पेषमिव वज्रस्य श्रोतुमिच्छसि वानर ।
न हि संकुचितः पन्था येन बाली हतो गतः ॥२०॥
समये तिष्ठ सुग्रीव मा बालिपथमन्वगाः ।
33ab एक एव मया बाली बाणेन निहतः पुरा ।
33cd त्वां तु सत्यादपक्रान्तं हनिष्यामि सबान्धवं ॥२१॥
कुरुष्व सत्यं मयि वानरेन्द्र तत्
34ab प्रतिश्रुतं धर्ममवेक्ष्य शाश्वतं ।
न बालिनं प्रेतगतं यमक्षये
34cd हतोऽद्य पश्येस्त्वमजिह्मगैः शरैः ॥२२॥

इत्यार्षे रामायणे किष्किन्धाकाण्डे शरद्विलापो नाम
एकोनत्रिंशः सर्गः — सुग्रीवाक्रोशो
नाम त्रिंशःसर्गः ॥

23+24 = XXXI.

स लक्ष्मणस्तद्वचनं निशम्य
36ab रामस्य शोकाभिपरिप्लुतस्य ।
उवाच वाक्यं मतिमानमर्षी
36cd रामार्थसिद्ध्यर्थमदीनसत्त्वः ॥ १ ॥
न वानरः स्थास्यति साधुवृत्ते
37ab न मंस्यते कर्मफलानुबन्धं ।
न भोक्ष्यते वानरराज्यलक्ष्मीं
37cd तथा हि नातिक्रमतेऽस्य बुद्धिः ॥ २ ॥
मतिक्षयाद्ग्राम्यसुखेषु सक्तः
38ab कामप्रवृत्तोऽप्रतिकारबुद्धिः ।
हतोऽग्रजं पश्यतु बालिनं स
38cd न राज्यमेवंविगुणस्य देयं ॥ ३ ॥
न धारये कोपमुदीर्णवेगं
39ab निहन्मि सुग्रीवमयुक्तमद्य ।
हतप्रवीरोऽद्य हरीन्द्रसूनुर्
39cd नरेन्द्रकन्याविचयं करोतु ॥ ४ ॥
तमात्तवाणासनमुत्पतन्तं
40ab निवेदितार्थं रणचण्डवेगं ।

उवाच रामः परवीरहन्ता
40cd स्ववेक्षितं सानुनयं च वाक्यं ॥५॥
1.24.1ab न खल्वस्मद्विधास्तात पापमेवं प्रकुर्वते ।
1cd पापाभावेन यो हन्ति स वीरः पुरुषोत्तमः ॥६॥
2ab नेदमद्य त्वया कार्यं साधुवृत्तेन लक्ष्मण ।
2cd तां वृत्तिमनुवर्तस्व पूर्ववत् तं च सौहृदं ॥७॥
3ab सामोपहितया वाचा रूक्षाणि परिवर्जयन् ।
3cd वक्तुमर्हसि सुग्रीवमतीतं कालसंग्रहे ॥८॥
4ab सोऽग्रजेनानुशिष्टार्थो यथावत् पुरुषर्षभः ।
4cd आजगाम पुरीं श्रीमाँल्लक्ष्मणः शुभलक्षणः ॥९॥
5ab अतिवेगगतिः प्राज्ञो भ्रातुः प्रियहिते रतः ।
5cd लक्ष्मणः प्रतिसंरब्धो जगाम भवनं कपेः ॥१०॥
6ab शक्रबाणासनप्रख्यं धनुर्दण्डमिवान्तकः ।
6cd प्रगृह्य स महावीर्यो बभौ रामानुजस्तदा ॥११॥
8ab रामक्रोधसमुत्थेन ज्वलितेनाग्निनावृतः ।
8cd प्रभञ्जनो यथाधृष्टः स ययौ लक्ष्मणस्तथा ॥१२॥
9ab सालांस्तालाश्वकर्णांश्च तरसा पातयन् बहून् ।
9cd दूरादेकपदीं त्यक्त्वा ययौ कार्यवशाद्द्रुतं ॥१३॥
11ab तामपश्यत् समाकीर्णां कपिराजपुरीं ततः ।
12ab कपिभिः शैलसंकाशैः समाहितैर्महाबलैः ॥१४॥

14ab शैलशृङ्गाणि शतशः प्रवृद्धांश्च महाद्रुमान् ।
14cd नगृह्य कुञ्जरप्रख्या वानरास्तद्भयात् तदा ॥ १५ ॥
15ab तान् गृहीतप्रहरणान् सर्वान् दृष्ट्वा स लक्ष्मणः ।
15cd भूय एवाभवत् क्रुद्धो हविषाक्त इवानलः ॥ १६ ॥
16ab तं ते भयसमाविष्टाः क्रुद्धं दृष्ट्वा प्लवङ्गमाः ।
16cd कालमृत्युयुगान्ताभं शतशो विद्रुतास्ततः ॥ १७ ॥
17ab ततः सुग्रीवभवनं प्रविश्य हरिपुङ्गवाः ।
17cd ते शशंसुरमात्येभ्यो लक्ष्मणं क्रुद्धमागतं ॥ १८ ॥
18ab तारया सह सुग्रीवो रममाणः सुखस्तदा ।
18cd न तेषां कपिवीराणां शुश्राव क्रोशतां स्वनं ॥ १९ ॥
19ab ततः सचिवसंदिष्टा हरयो लोमहर्षणाः ।
19cd गिरिकुञ्जरमेघाभा नगरान्निर्ययुस्तदा ॥ २० ॥
20ab नखदंष्ट्रायुधा वीराः सर्वे विकृतदर्शनाः ।
21ab दशनागबलाः केचित् केचिद्दशगुणोत्तराः ॥ २१ ॥
21cd केचिन्नागसहस्रस्य बभूवुस्तुल्यविक्रमाः ।
22ab सन्ति चौघबलाः केचित् केचित् पवनरंहसः ॥ २२ ॥
22cd अप्रमेयबलाश्चान्ये तत्रासन् हरियूथपाः ।
विप्रकीर्णमिवाकाशं संछन्नमिव तद्वनं ॥ २३ ॥
37cd तेन वानरसैन्येन सुग्रीवस्य महात्मनः ।
38ab ततो द्वाराणि बलवानङ्गदः सचिवाज्ञया ॥ २४ ॥

38cd पर्यधावत दुर्धर्षो महावेगेन सर्वशः ।
39ab स कृत्स्नां कपिभिर्व्याप्तां द्रुमहस्तैः समन्ततः ॥२५॥
39cd अपश्यल्लक्ष्मणस्तत्र किष्किन्धां बालिपालितां ।
40ab ततस्ते वानराः सर्वे प्राकारपरिखान्तरात् ॥२६॥
40cd निर्ययुश्च पुरोद्यानाद्ये तत्र पुरतः स्थिताः ।
41ab ते महाभ्रनिभाकारा वज्राशनिसमस्वनाः ॥२७॥
41cd सिंहनादं तदा चक्रुर्लक्ष्मणस्य समीपतः ।
42ab तेन शब्देन महता तारया च विबोधितः ॥२८॥
42cd सुग्रीवः सचिवैः सार्धं मन्त्रार्थं समुपाविशत् ।
43ab विनतश्च सुषेणश्च नीलोऽथ नल एव च ॥२९॥
43cd अङ्गदो वायुपुत्रश्च हनूमांश्चैव बुद्धिमान् ।
44ab एते सर्वे महात्मानः सुग्रीवं बानरोत्तमं ॥३०॥
44cd पर्युपासत आसीनं शक्रं सुरगणा इव ।
बलविक्रमयुक्ताश्च मन्त्रे च परिनिष्ठिताः ॥३१॥
उत्साहं च प्रमाणं च मन्त्रिणामर्थनिश्चये ।
46ab वाक्यमुच्चावचं प्राप्तं लक्ष्मणं प्रति शुश्रुवान् ॥३२॥
47cd अथ प्रसाद्य सुग्रीवं वचनं मारुतात्मजः ।
48ab उवाच मन्त्रिप्रवरो यथा शक्रं बृहस्पतिः ॥३३॥
48cd सत्यसंधौ महोत्साहौ भ्रातरौ रामलक्ष्मणौ ।
49ab उपकारे च वर्तेते तव राज्यप्रदायकौ ॥३४॥

तयोरेको धनुष्पाणिर्द्वारि तिष्ठति लक्ष्मणः ।
तस्य भीता वेपमाना नादं मुञ्चन्ति वानराः ॥ ३५ ॥
स एष राघवभ्राता लक्ष्मणो वाक्यसारथिः ।
व्यवसायरथं प्राप्तस्तस्य रामस्य शासनात् ॥ ३६ ॥
हनूमतो वचः श्रुत्वा शोकाविष्टोऽङ्गदोऽब्रवीत् ।
तथेति कृत्वा च पितुरेतदर्थं न्यवेदयत् ॥ ३७ ॥

स दृश्यतां वा प्रतिषिध्यतां वा
यदत्र क्षेमं कुरु मन्यसे तत् ।
क्रुद्धः किलागच्छति लक्ष्मणोऽयं
रोषस्य हेतुं न हि विद्म सर्वे ॥ ३८ ॥

इत्यार्षे रामायणे किष्किन्धाकाण्डे लक्ष्मणप्रयाणं
नाम एकत्रिंशः सर्गः ॥

25 = XXXII.

1ab एवमुक्तस्तु सुग्रीवो मन्त्रिभिर्हनुमादिभिः ।
1cd मुहूर्तं चिन्तयामास दीनः किञ्चिदवाङ्मुखः ॥ १ ॥
2ab सचिवानब्रवीत् सर्वान् स निश्चित्य बलाबलं ।
2cd वचनं वाक्यकुशलो मन्त्रेषु परिनिष्ठितान् ॥ २ ॥
3ab न मे दुर्व्याहृतं किञ्चिन्नापि मे दुरनुष्ठितं ।
3cd लक्ष्मणो राघवभ्राता यस्मात् क्रुद्ध इहागतः ॥ ३ ॥
4ab असद्भिर्ममामित्रैर्नित्यमन्तरदर्शिभिः ।
4cd नूनं दोषानसदृशान् श्रावितो लक्ष्मणाग्रजः ॥ ४ ॥
5ab तत्र तावद्यथाबुद्धि सर्वैरेवाभिधीयतां ।
5cd भवद्भिर्निश्चयस्तत्त्वविज्ञानकुशलैर्मम ॥ ५ ॥
6ab न खल्वस्ति मम त्रासो राघवाद्वापि लक्ष्मणात् ।
6cd मित्रं त्वस्थानकुपितं जनयत्येव संभ्रमं ॥ ६ ॥
7ab सुकरं सर्वथा मैत्रं दुष्करं प्रतिपालनं ।
7cd अनित्यत्वाद्धि चित्तानां प्रीतिरल्पेन भिद्यते ॥ ७ ॥
8ab अतोऽतिमात्रं त्रस्तोऽहं राघवेण महात्मना ।
8cd यन्ममोपकृतं शक्यं प्रतिकर्तुं न तन्मया ॥ ८ ॥
9ab सुग्रीवेणैवमुक्तस्तु हनूमान् हरियूथपः ।
9cd उवाच वदतां श्रेष्ठो मध्ये वानरमन्त्रिणां ॥ ९ ॥

10ab सर्वथा नैतदाश्चर्यं यत् त्वं हरिगणेश्वर ।
10cd न विस्मरिष्यसि स्निग्धमुपकारं महत् कृतं ॥ १० ॥
11ab राघवेण हि शूरेण नामयित्वा महद्धनुः ।
11cd त्वत्प्रियार्थं हतो बाली शक्रतुल्यपराक्रमः ॥ ११ ॥
12ab सर्वथाप्रणयक्रुद्धो राघवो नात्र संशयः ।
12cd भ्रातरं यत् प्रहितवान् लक्ष्मणं लक्ष्मिवर्धनं ॥ १२ ॥
13ab त्वं प्रमत्तो न जानासि कालं कालविदां वर ।
13cd फुल्लं सप्तच्छदवनं प्रवृत्ताः शरदर्चिषः ॥ १३ ॥
14ab निर्मलग्रहनक्षत्रा द्यौः प्रनष्टबलाहका ।
14cd प्रसन्ना हि दिशः सर्वाः सरितश्च सरांसि च ॥ १४ ॥
16ab प्राप्तमुद्योगकालं च नावैषि हरिपुङ्गव ।
16cd त्वं प्रमत्त इति व्यक्तं लक्ष्मणोऽयमिहागतः ॥ १५ ॥
17ab आर्तस्य हृतदारस्य परुषं वानरोत्तम ।
17cd वचनं मर्षणीयं ते राघवस्य महात्मनः ॥ १६ ॥
18ab कृतोपकारस्याहं वै नान्यं पश्यामि ते क्षमं ।
18cd अन्तरेणाञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनं ॥ १७ ॥
19ab विमुक्तैर्मन्त्रिभिर्वाच्यमिति विज्ञाय पार्थिव ।
19cd अत एव भयं त्यक्त्वा प्रब्रवीमि हितं वचः ॥ १८ ॥
20ab अपि क्रुद्धः समर्थो हि चापमुद्यम्य राघवः ।
20cd वशे स्थापयितुं वीर त्रैलोक्यं सचराचरं ॥ १९ ॥

21ab न स क्षमः कोपयितुं प्रसाद्यश्च पुनः पुनः ।
21cd पूर्वोपकारं स्मरता कृतघ्नेन विशेषतः ॥२०॥
22ab तस्य मूर्ध्ना प्रणम्य त्वं सपुत्रः सह बन्धुभिः ।
22cd राजंस्तिष्ठ स्वसमये भव सत्यप्रतिश्रवः ॥२१॥

दहेद्धि लोकान् रुषितः स राघवस्
तव प्रतिज्ञां चलितां निशम्य ।
तदन्यथा नार्हसि कर्तुमात्मना
त्वमग्निशक्राशनितुल्यविक्रमः ॥२२॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे हनूमद्वाक्यं
नाम द्वात्रिंशः सर्गः ॥

26 = XXXIII.

1ab ततो रोषपरीतात्मा लक्ष्मणः परवीरहा ।
1cd प्रविवेश गुहां घोरां किष्किन्धां रामशासनात् ॥ १ ॥
2ab द्वारस्था हरयस्तत्र महाकाया महाबलाः ।
2cd ते सर्वे लक्ष्मणं दृष्ट्वा त्रस्ताः प्राञ्जलयः स्थिताः ॥ २ ॥
3ab क्रुद्धं विनिश्वसन्तं तं प्रदीप्तमिव तेजसा ।
3cd बभूवुर्हरयो भीता न चैनं प्रत्यवारयन् ॥ ३ ॥
4ab स तु रोषपरीतात्मा लक्ष्मणः परवीरहा ।
4cd जातरूपमयीं दिव्यां ददर्श महतीं गुहां ॥ ४ ॥
रम्यां यत्नसमाकीर्णामुद्यानवनशोभितां ।
शुभां रत्नमयीं दिव्यां चित्रपुष्पितकाननां ॥ ५ ॥
6ab हर्म्यप्रासादसंबाधां नानावन्योपशोभितां ।
6cd कीर्णां काममयैर्वृक्षैर्निर्मितां विश्वकर्मणा ॥ ६ ॥
7ab देवगन्धर्वपुत्रैश्च वानरैः कामरूपिभिः ।
7cd दिव्यमाल्याम्बरधरैः शोभितां प्रियदर्शनैः ॥ ७ ॥
8ab चन्दनागुरुपद्मानां गन्धैः सुरभिगन्धिभिः ।
8cd मैरेयाणां मधूनां च समावृतमहापथां ॥ ८ ॥
9ab कैलासशिखराभाश्च बहुरूपाः समन्ततः ।
9cd दृष्टास्तेन तु मार्गेषु शुक्लाः प्रासादपंक्तयः ॥ ९ ॥

11ab देवतानां निकेतांश्च राजमार्गे ददर्श सः ।
11cd सुधावदातान् सुकृतान् विमानान्येव सर्वतः ॥ १० ॥
10ab सरांसि च सपद्मानि पुष्पितानि वनानि च ।
10cd तत्रापश्यद्गिरिनदीं विमलां भरतानुजः ॥ ११ ॥
12ab अङ्गदस्य गृहं रम्यं मैन्दस्य द्विविदस्य च ।
12cd गवयस्य गवाक्षस्य शरभस्य च धीमतः ॥ १२ ॥
13ab विद्युन्मालस्य संपातेः सूर्याक्षस्य हनूमतः ।
14ab वीरबाहोः सुबाहोश्च नीलस्य पनसस्य च ॥ १३ ॥
13cd कुमुदस्याथ धूम्रस्य विनतस्य च केशरेः ।
14cd कपेः शतवलेश्चैव कुम्भस्य च रभस्य च ॥ १४ ॥
15cd एतेषां कपिमुख्यानां राजमार्गे महात्मनां ।
16ab ददर्श गृहमुख्यानि महासाराणि सर्वतः ॥ १५ ॥
16cd पाण्डराभ्रप्रकाशानि दिव्यमाल्ययुतानि च ।
17ab प्रभूतधनरत्नानि स्त्रीरत्नैः शोभितानि च ॥ १६ ॥
15ab पाण्डरेणेव शैलेन परिक्षिप्तं दुरासदं ।
17cd वानरेन्द्रगृहं रम्यं महेन्द्रभवनोपमं ॥ १७ ॥
18ab शुक्लैः प्रासादशिखरैः कैलासशिखरैरिव ।
18cd सर्वर्तुकफलैश्चैव पादपैरुपशोभितं ॥ १८ ॥
19cd महेन्द्रदत्तैः श्रीमद्भिर्नीलजीमूतसंनिभैः ।
19ab दिव्यैर्नन्दनजैर्वृक्षैः सर्वतश्चोपशोभितं ॥ १९ ॥

हरिभिश्चावृतं भीमैः सर्वतः शस्त्रपाणिभिः ।
दिव्यपुष्पसमाकीर्णं तप्तकाञ्चनतोरणं ॥ २० ॥
सुग्रीवस्य गृहं रम्यं नानारत्नविभूषितं ।
दृष्टं सुविपुलं तत्र ददर्श सुधया सितं ॥ २१ ॥
22ab तमुपायात्तमव्यग्रं मत्वा सुग्रीवशासनात् ।
22cd प्रत्याजग्मुस्तु सचिवाः कृताञ्जलिपुटास्तदा ॥ २२ ॥
23ab तानाभाष्य यथान्यायं हनुमत्प्रमुखान् कपीन् ।
23cd धर्मबुद्ध्या न दौर्बल्याद्विदितः प्रविवेश ह ॥ २३ ॥
24ab स सप्तकक्ष्यं धर्मात्मा यानासनसमावृतं ।
24cd प्रविश्य सुमहद्गुप्तं ददर्शान्तःपुरं महत् ॥ २४ ॥
25ab हैमराजतसंकीर्णैर्बहुभिश्च वरासनैः ।
25cd महार्हास्तरणोपेतैस्तत्र तत्रोपशोभितं ॥ २५ ॥
स तत्र मधुरं गीतं शुश्राव सुमनोहरं ।
एकतामिव संयातं तन्त्रीवल्लकिवेणुभिः ॥ २६ ॥
बह्वीश्च विविधाकारा रूपयौवनगर्विताः ।
स्त्रियः सुग्रीवभवने ददर्श भरतानुजः ॥ २७ ॥
रूपदाक्षिण्यसंपन्नाश्चित्रमाल्यकृतस्रजः ।
नानाविरागवसना भूषणोत्तमभूषिताः ॥ २८ ॥
नातृप्तान् नामदव्यग्रान् नाल्पदत्तपरिच्छदान् ।
सुग्रीवानुचरांस्तत्र लक्षयामास लक्ष्मणः ॥ २९ ॥

स सुग्रीवप्रमोदं च पूर्वजे चार्तिमेव च ।
बुद्ध्वा कोपवशो वीरः पुनरेव जगाम ह ॥३०॥
निःश्वस्य दीर्घमुष्णं च कोपाद्रक्तान्तलोचनः ।
बभूव नरशार्दूलो विधूम इव पावकः ॥३१॥
तं दीप्तमिव कालाग्निं नागेन्द्रमिव कोपितं ।
सहसैवाङ्गदो दृष्ट्वा भ्रान्तो क्षीणमुखोऽभवत् ॥३२॥
अन्ये च हरयो द्वाःस्था गृहकक्ष्यगतास्तथा ।
कृताञ्जलिपुटा नीचैर्लक्ष्मणाय प्रणेमिरे ॥३३॥
26ab ततः सुग्रीवमासीनं काञ्चने परमासने ।
26cd महार्हास्तरणोपेते ददर्शादित्यसंनिभे ॥३४॥
27ab दिव्याभरणचित्राङ्गं दिव्यमाल्यानुलेपनं ।
27cd दिव्याम्बरधरं साक्षान्महेन्द्रमिव दुर्जयं ॥३५॥
29ab स्त्रीभिः परमरूपाभिर्वृतं शतसहस्रशः ।
29cd अप्सरोभिः परिवृतं कुवेरमिव मन्दरे ॥३६॥
30ab वामपार्श्वे स्थितां चास्य भार्यां तारामपश्यत ।
30cd रुमां च दक्षिणे पार्श्वे सुग्रीवस्य महात्मनः ॥३७॥
31ab शुक्ले च बालव्यजने तप्तकाञ्चनभूषिते ।
31cd दोधूयमाने नारीभ्यामभितस्तं ददर्श सः ॥३८॥
32ab तं दृष्ट्वा तस्य ललितमौदासीन्यं च लक्ष्मणः ।
32cd परमातुरं च रामं द्विगुणं क्रोधमाहरत् ॥३८॥

33 ab तं क्रोधरक्तनयनं कुर्वन्तं भ्रूकुटीमुखं ।
33 cd दष्टाधरौष्ठरुचकं प्रेक्षमाणं समन्ततः ॥ ४० ॥
34 ab दीर्घमुष्णं च निश्वासं विमुञ्चन्तं मुहुर्मुहुः ।
34 cd कुपितं सप्तशिरसं ज्वालारूढमिवोरगं ॥ ४१ ॥
35 ab तं दृष्ट्वा क्रोधरक्ताक्षं प्रगृहीतशरासनं ।
35 cd सुग्रीवः सहसोत्तस्थौ कृताञ्जलिपुटस्तदा ॥ ४२ ॥
36 ab तस्य तारा रुमा चैव द्वे भार्ये पार्श्वतः स्थिते ।
36 cd कृताञ्जलिपुटे चास्तां लक्ष्मणाभिमुखे तथा ॥ ४३ ॥
37 ab पत्न्योर्मध्यगतस्तत्र सुग्रीवः स व्यराजत ।
37 cd विशाखयोर्मध्यगतः संपूर्ण इव चन्द्रमाः ॥ ४४ ॥
39 ab प्रत्युद्गम्य च सुग्रीवो बहुमानेन लक्ष्मणं ।
39 cd गृहं प्रवेशयामास सामात्यः सपुरोहितः ॥ ४५ ॥

इत्यार्षे रामायणे किष्किन्ध्याकाण्डे लक्ष्मणप्रवेशो नाम त्रयस्त्रिंशः सर्गः ॥

# NOTA

## AL TESTO DEL LIBRO SECONDO.

---

Dopo lo sloco 15 del capitolo XXXVIII, libro II: इति राज्ञा समादिष्टो, ecc. i manoscritti J c G hanno tre stanze, le quali non si trovano nei manoscritti W e M. Attenendomi ai due ultimi codici io lasciai fuori le tre stanze sopradette. Ma nel riandare e meditare, come ho uso, il testo dei volumi già pubblicati per ritoccarlo e correrggerlo ove abbisognasse, ho veduto, che se l'ultima delle tre stanze debb' essere omessa perchè inopportuna e soverchia, le due prime sarebbero per contrario bene appropriate al contesto, e contribuirebbero assai alla pienezza ed all' eleganza del pensiero; onde ho giudicato doverle aggiungere. Le stanze sono quelle, che seguono quì sotto; il loro luogo è dopo lo sloco 15 del capitolo XXXVIII, libro II.

अथो महार्हाभरणानि देव्यै ददौ स्नुषायै व्यपनीय चीरं।
चीरं न युक्तं परिधानमस्या निवारयामीत्यवदन्नमिष्टः॥
एकस्य रामस्य वने निवासस्त्वया वृतः कैकयराजपुत्रि।
विभूषितेयं प्रतिकर्मणा तु वसत्वरण्ये सह राघवेण॥

---

# ANNOTAZIONI

## AL TESTO DEL LIBRO TERZO.

---

Capitolo IV, sloco 25, verso 2. — न्यासो मम पितुर्दत्तं, ecc. Il पितुर् debb'essere quì preso nella significazione d'*antenato*, e non di *G'anaca* padre di Sitâ; altrimenti ne nascerebbe contraddizione: perchè nel libro primo, capitolo LXVIII, sloco 8, vien detto da G'anaca, che l'arco, di cui parla quì Sitâ, fu deposto nelle mani di Devarata, uno de' suoi antenati. Il manoscritto G ha questo verso così:

दत्तं धनुर्वरं प्रीत्या तुणीरौ चाक्षयौ तथा।

Capitolo X, sloco 2, verso 1. — मरीचिपाः, il codice G ha मरीचयः, il codice M मरीचियाः. Il manoscritto W commenta il मरीचिपाः così: स्वयं पतितैः फलादिकैर्जीवन्तः रश्मिपाना वा।; e commenta il वैखानसा e il बालिखिल्या dello stesso verso in questo modo: वैखानसा अकृष्टपच्यवृत्तयः बालिखिल्या नवे अन्ने प्राप्ते पूर्वसंचितान् त्यागिनः।

Capitolo XIII, sloco 26, verso 2. — Quì Sitâ fa allusione a Dasaratha, come s'egli fosse ancor vivo. Ma la morte dello suocero era pur nota a Sitâ. Tutti i codici consentono nella stessa lezione. Forse v'ha quì una delicatezza recondita del poeta.

Capitolo XXXIII, sloco 8. — L'esercito, di cui quì si parla, non è già un esercito nuovo; ma sono le reliquie dei quattor-

dici mila. In questo senso l'intende il commentatore Lokanatha, il quale chiosa l'हतशेषं del verso 2 di questo sloco così: हतशेषं चतुर्दशसहस्राणां मध्ये हतावशिष्टं ।. Ma perocchè si dice al capitolo XXXII, sloco 34, che i quattordici mila Racsasi erano stati tutti disfatti हतानि da Rama, eccetto Kharo e Trisira, gli editori di Serampur fanno a questo sloco 8 del capitolo XXXIII, dove è detto che l'esercito सैन्यं ritornò e si rannodò a Trisira, la seguente annotazione: « This ill agrees with their being « all killed a little before; the Pundits however can neither « remove the difficulty, nor alter the text. » Ma la difficoltà, che parve insuperabile ai Panditi, svanisce, se si consideri che l'हत vuol dire non solamente ucciso, ma percosso, rotto, disfatto, messo in fuga, ecc. Onde i quattordici mila, che erano stati prima tutti हतानि da Rama, non furono perciò tutti uccisi, ma solamente disfatti, messi in fuga; cosicchè poterono benissimo rannodarsi e tornare di nuovo alla battaglia.

Capitolo XXXV, sloco 45, verso 1. — अवार्यवेगा, ecc. Questo verso è irregolare, ha una sillaba di troppo nel primo pado. Tutti i manoscritti concordano nella medesima lezione.

Capitolo XLIX, sloco 41, verso 2. — यथा शक्रस्य, ecc. Se il शक्रस्य debbe quì prendersi nel suo significato proprio d'*Indra*, il pensiero genuino di questo luogo non è facile a cogliersi. Ma forse che il vocabolo शक्र, il quale in origine non significava altro che *potente*, come ve ne hanno esempj nei Vedi, e che divenne più tardi uno dei nomi d'Indra, può essere stato nella lingua antica adoperato anche a significare *re*, *signore*, ecc. In tale caso il senso di questo luogo diventerebbe chiaro e logico; e si troverebbe quì una nozione primitiva

di diritto regio. Il commentatore non dice quì nulla. Il codice G ha यथा शक्रश्च, lezione ripugnante al costrutto della frase. Il codice M ha यथा शुक्रस्य.

Capitolo LIII. — Dopo lo sloco 11, इति ब्रुवाणां, ecc. tutti i codici hanno lo sloco seguente :

मम भर्ता महातेजा वयसा पञ्चविंशकः ।
अष्टादश हि वर्षाणि मम जन्म विगण्यते ॥

Quì l' indicazione intorno all' età di Rama e di Sitâ è manifestamente erronea. Se si parla d' essi prima che andassero in esilio, la loro età era allora minore di quella, che quì si dice. Se si parla di Rama e di Sitâ a questo punto della narrazione epica, la loro età era allora maggiore di quella, che ad essi quì si attribuisce. Il commentatore Lokanatha fa sopra questo luogo un lungo commento per conciliare il testo col fatto. Ma la sua chiosa è piuttosto ingegnosa che soddisfacente; eccola : मम भर्तेति पञ्चविंशकः पूर्णपञ्चविंशतिवर्षस्ततोऽप्यधिकवयाः न तु पञ्चविंशतिवर्षः प्रागुक्तविरोधादिति नारायणः। प्रवराख्यवयसा महाप्रभाव इति विमलबोधः। अन्ये तु एकत्रिंशद्वर्षे गतेऽपि पञ्चविंशवर्ष इव दृश्यमानत्वात् पञ्चविंशतिवर्षः। मम तु ममापि अधिकवर्षे गतेऽपि अष्टादशवर्षजन्म विगण्यते यथा हि देवानां सहस्राधिकवर्षे गतेऽपि सदा पञ्चविंशतिवर्षा देवा दृश्यन्ते तथा देव्योऽपि अष्टादशवर्षास्तथा स चाहं चेत्यर्थः ॥

Quanto allo sloco sopracitato, ho creduto meglio ometterlo, che lasciare nel testo una contraddizione così evidente; ovvero adottare, per toglierla, o l' una o l'altra delle interpretazioni forzate del commentatore.

FINE DEL VOLUME TERZO.

## सर्गसंग्रहपत्रं

### आरण्यककाण्डं

## किष्किन्ध्याकाण्डं

# शुद्धिपत्रं

| पृष्ठं | पङ्क्तिः | दूषितं | शुद्धं |
|---|---|---|---|
| २१ | ७ | ाश्रमद् | ाश्रमाद् |
| ३४ | ७ | मामषो | मामेषो |
| ३९ | २ | सुतोक्ष्ण | सुतीक्ष्ण |
| ५२ | ५ | महमुनिः | महामुनिः |
| *Idem.* | ६ | सहास्राणि | सहस्राणि |
| *Idem.* | १३ | अप्सराभिस् | अप्सरोभिस् |
| ७७ | ९ | फलोदकंः | फलोदकं |
| ८० | ६ | लक्ष्मणान | लक्ष्मणेन |
| १०५ | ८ | सपरि *ecc.* | संपरि *ecc.* |
| १०९ | १ | लक्ष्मण | लक्ष्मणं |
| ११३ | १ | तता | ततो |
| ११७ | ११ | तता | ततो |
| १८५ | २ | सबाधवं | सबान्धवं |
| ३१ | १० | ॥१४॥ | ॥२४॥ |
| ३२२ | २ | ॥१०॥ | ॥२०॥ |

# शुद्धिपत्रं

| पृष्ठं | पङ्क्तिः | दूषितं | शुद्धं |
|---|---|---|---|
| ३२४ | १३ | वाणिनि | वणिनि |
| ३८४ | | २८४ | ३८४ |
| ३९७ | २ | त्वद्धा | त्वद्वा |

# AGGIUNTA

## ALLE CORREZIONI DEL VOLUME PRIMO.

| पृष्ठं | पङ्क्तिः | दूषितं | शुद्धं |
|---|---|---|---|
| ३२ | ११ | समस्या | समास्या |
| ३४ | ६ | ऋष्यमूखस्य | ऋष्यमूकस्य |